110000

।। श्रीरस्तु।।

।। प्रथमाष्टके प्रथमप्रपाठक प्रारंभः।। ।। हरिः ओम्।।

110101

ब्रह्म॒ संध॑त्तं॒ तन्मे॑ जिन्वतम् । क्षत्त्रꣳ संध॑त्तं॒
तन्मे॑ जिन्वतम् । इष॒ꣳ॒ संध॑त्तं॒ तां मे॑ जिन्वतम् । ऊर्ज॒ꣳ॒
संध॑त्तं॒ तां मे॑ जिन्वतम् । र॒यिꣳ संध॑त्तं॒ तां मे॑ जिन्वतम् ।
पुष्टि॒ꣳ॒ संध॑त्तं॒ तां मे॑ जिन्वतम्। प्र॒जाꣳ संध॑त्तं॒
तां मे॑ जिन्वतम्। प॒शून्थ्संध॑त्तं॒ तान्मे॑
जिन्वतम्। स्तु॒तो॑ऽसि॒ जन॑धाः। दे॒वास्त्वा॑
शु॒क्र॒पाᳲ प्रण॑यन्तु।।1।।

110102

सु॒वीरा॑ᳲ प्र॒जाᳲ प्र॑ज॒नय॒न्परी॑हि
। शु॒क्रश्शु॒क्रशो॑चिषा। स्तु॒तो॑ऽसि॒ जन॑धाः।
दे॒वास्त्वा॑ मन्थि॒पाᳲ प्रण॑यन्तु। सु॒प्र॒जाᳲ प्र॒जाᳲ
प्र॑ज॒नय॒न्परी॑हि। म॒न्थी म॒न्थिशो॑चिषा।
सं॒ज॒ग्मा॒नौ दि॒व आपृ॑थि॒व्यायु॑ः। संध॑त्तं॒ तन्मे॑
जिन्वतम्। प्रा॒णꣳ संध॑त्तं॒ तं मे॑ जिन्वतम्। अ॒पा॒नꣳ संध॑त्तं॒
तं मे॑ जिन्वतम्।।2।।

110103

व्या॒नꣳ सन्ध॑त्तं॒ तं मे॑ जिन्वतम्।
चक्षु॒स्संध॑त्तं॒ तन्मे॑ जिन्वतम्। श्रोत्र॒ꣳ॒ संध॑त्तं॒
तन्मे॑ जिन्वतम्। मन॒स्संध॑त्तं॒ तन्मे॑ जिन्वतम्।
वाच॒ꣳ॒ संध॑त्तं॒ तां मे॑ जिन्वतम्। आयु॑स्स्थ॒
आयु॑र्मे धत्तम्। आयु॑र्य॒ज्ञाय॑ धत्तम्।
आयु॑र्य॒ज्ञप॑तये धत्तम्। प्रा॒णस्स्थ॑ᳲ प्रा॒णं मे॑ धत्तम्।
प्रा॒णं य॒ज्ञाय॑ धत्तम्।।3।।

110104

प्रा॒णं य॒ज्ञप॑तये धत्तम्।
चक्षु॑स्स्थ॒श्चक्षु॑र्मे धत्तम्।
चक्षु॑र्य॒ज्ञाय॑ धत्तम्।चक्षु॑र्य॒ज्ञप॑तये धत्तम्।

श्रोत्र॑ स्थ॒श्श्रोत्रं॑ मे धत्तम्।
श्रोत्रं॑ य॒ज्ञाय॑ धत्तम्। श्रोत्रं॑ य॒ज्ञप॑तये धत्तम्। तौ
दे॑वौ शुक्रामन्थिनौ। क॒ल्पय॑त॒ं दैवी॒र्विशः॑।
क॒ल्पय॑त॒ं मानु॑षीः ।।4।।
110105
इष॒मूर्ज॑म॒स्मासु॑ धत्तम्।
प्रा॒णान्प॒शुषु॑। प्र॒जां मयि॑ च॒ यज॑माने च।
निर॑स्त॒श्शण्डः॑। निर॑स्तो॒ मर्कः॑। अप॑नुत्तौ॒
शण्डा॒मर्कौ᳚ स॒हामुना᳚। शु॒क्रस्य॑ स॒मिद॑सि।
म॒न्थिन॑स्स॒मिद॑सि।
स प्र॑थ॒मस्संकृ॑तिर्वि॒श्वक॑र्मा। स प्र॑थ॒मो मि॒त्रो
वरु॑णो अ॒ग्निः। स प्र॑थ॒मो बृह॒स्पति॑श्चिकि॒त्वान्।
तस्मा॒ इन्द्रा॑य सु॒तमाजु॑होमि।।5।।
110100
न॒य॒न्त्व॒पा॒नꣳ सन्ध॑त्त॒ं तं मे॑ जिन्वतम् प्रा॒णं
य॒ज्ञाय॑ धत्त॒ं मानु॑षीर॒ग्निर्द्वे च॑।।1।।
110201
ब्रह्म॑ क्ष॒त्त्रं तदिष॒मूर्जꣳ॑ र॒यिं पुष्टिं॑ प्र॒जां
तां प॒शून्तान्।। संध॑त्त॒ं तत्प्रा॒णम॑पा॒नं
व्या॒नं तं चक्षु॒ श्श्रोत्र॒ं मन॒स्तद्वाच॒ं ताम्। इ॒षादि॒
पञ्च॑के॒ वाच॒ं तां मे॑ प॒शून्थ्सन्ध॑त्त॒ं तान्मे᳚ प्रा॒णादि॒
त्रित॑ये॒ तं मे॒ऽन्यत्र॒ तन्मे᳚।।
कृत्ति॑कास्व॒ग्निमाद॑धीत। ए॒तद्वा अ॒ग्नेर्नक्ष॑त्त्रम्।
यत्कृत्ति॑काः। स्वाया॑मे॒वैनं॑ दे॒वता॑यामा॒धाय॑।
ब्र॒ह्म॒व॒र्च॒सी भ॑वति। मुख॒ं वा ए॒तन्नक्ष॑त्त्राणाम्।
यत्कृत्ति॑काः। यᳵकृत्ति॑कास्व॒ग्निमा॑ध॒त्ते।
मुख्य॑ ए॒व भ॑वति। अथो॒ खलु॑।।6।।
110202
अ॒ग्नि॒न॒क्ष॒त्त्रमित्यप॑चायन्ति। गृ॒हान् ह॒
दाहु॑को भवति।प्र॒जाप॑ती रोहि॒ण्याम॒ग्निम॑सृजत। तं दे॒वा
रो॑हि॒ण्यामाद॑धत। तत॒ो वै ते सर्वा॒न्रोहा॑नरोहन्।

तद्रो॑हि॒ण्यै रो॑हिणि॒त्वम्। यो
रो॑हि॒ण्याम॒ग्निमा॑ध॒त्ते। ऋ॒द्ध्नोत्ये॒व।
सर्वा॒न्रोहा᳚न्रोहति। दे॒वा वै
भ॒द्रास्सन्तो॒ऽग्निमाधि॑थ्सन्त।।7।।
110203
तेषा॒मना॑हितो॒ऽग्निरासी᳚त्। अथै᳚भ्यो वा॒मं वस्वपा᳚क्रामत्।
ते पुन॑र्वस्वो॒राद॑धत। तत॒ो वै तान् वा॒मं वसू॒पाव॑र्तत।
यᳲ पु॒राऽभ॒द्रस्सन्पापी॑या॒न्थ्स्यात्।
स पुन॑र्वस्वोर॒ग्निमाद॑धीत। पुन॑रे॒वैनं॑ वा॒मं
वसू॒पाव॑र्तते। भ॒द्रो भ॑वति। यᳲका॒मये॑त॒ दानका॑मा
मे प्र॒जास्स्यु॒रिति॑। स पूर्व॑यो॒ᳲ
फल्गु॑न्योर॒ग्निमाद॑धीत।।8।।
110204
अ॒र्य॒म्णो वा ए॒तन्नक्ष॑त्रम्।
यत्पूर्वे॒ फल्गु॑नी। अ॒र्य॒मेति॒ तमा॑हु॒र्यो ददा॑ति।
दान॑कामा अस्मै प्र॒जा भ॑वन्ति। यᳲका॒मये॑त भ॒गी
स्या॒मिति॑। स उत्त॑रयो॒ᳲ फल्गु॑न्योर॒ग्निमाद॑धीत।
भग॑स्य॒ वा ए॒तन्नक्ष॑त्रम्। यदुत्त॑रे॒ फल्गु॑नी।
भ॒ग्ये॑व भ॑वति। का॒ल॒क॒ञ्जा वै नामासु॑रा आसन्।।9।।
110205
ते सु॑व॒र्गाय॑ लो॒काया॒ग्निम॑चिन्वत। पुरु॑ष॒
इष्ट॑का॒मुपा॑दधा॒त्पुरु॑ष॒ इष्ट॑काम्।।
स इन्द्रो᳚ ब्राह्म॒णो ब्रुवा॑ण॒ इष्ट॑का॒मुपा॑धत्त। ए॒षा
मे॑ चि॒त्रा नामेति॑। ते सु॑व॒र्गं लो॒कमा प्रारो॑हन्।
स इन्द्र॒ इष्ट॑का॒माव॑हत्। तेऽवा॑कीर्यन्त।
ये॑ऽवाकी᳚र्यन्त। त ऊर्णा॒वभ॑योऽभवन्। द्वावु॒द॑पतताम्।।10।।
110206
तौ दि॒व्यौ श्वाना॑वभवताम्।
यो भ्रातृ॑व्यवा॒न्थ्स्यात्। स चि॒त्राया॑म॒ग्निमाद॑धीत।
अ॒व॒कीर्यै॒व भ्रातृ॑व्यान्। ओजो॒ बल॑मिन्द्रि॒यं
वी॒र्य॑मा॒त्मन्ध॑त्ते। व॒सन्ता᳚

ब्राह्मणोऽग्निमादधीत। वसन्तोवै ब्राह्मणस्यर्तुः। स्व
एवैनमृतावाधाय। ब्रह्मवर्चसी भवति। मुखं वा एतदृतूनाम्।।11।।
110207
यद्वसन्तः। योवसन्ताऽग्निमाधत्ते।
मुख्य एव भवति। अथो योनिमन्तमेवैनं
प्रजातमाधत्ते। ग्रीष्मे राजन्य आदधीत। ग्रीष्मो
वै राजन्यस्यर्तुः। स्व एवैनमृतावाधाय।
इन्द्रियावी भवति। शरदि वैश्य
आदधीत। शरद्वै वैश्यस्यर्तुः।।12।।
110208
स्व एवैनमृतावाधाय। पशुमान्भवति। न
पूर्वयोः फल्गुन्योरग्निमादधीत। एषा वै
जघन्या रात्रिस्संवथ्सरस्य। यत्पूर्वे फल्गुनी।
पृष्टित एव संवथ्सरस्याग्निमाधाय।
पापीयान्भवति। उत्तरयोरादधीत। एषा वै प्रथमा
रात्रिस्संवथ्सरस्य।
यदुत्तरे फल्गनी। मुखत एव
संवथ्सरस्याग्निमाधाय। वसीयान्भवति। अथो खलु।
यदेवैनं यज्ञ उपनमेत्। अथादधीत। सैवास्यर्द्धिः।।13।।
110200
खल्वधिथ्सन्त फल्गुन्योरग्निमादधीतासन्नपततामृतूनां
वैश्यस्यर्तुरुत्तरे फल्गुनी षट्च ।।2।।
110301
उद्धन्ति। यदेवास्या अमेध्यम्। तदपहन्ति। अपो
ऽवोक्षति शान्त्यै। सिकता निवपति। एतद्वा
अग्नेर्वैश्वनरस्य रूपम्। रूपेणैव
वैश्वानरमवरुन्धे। ऊषान्निवपति। पुष्टिर्वा एषा
प्रजननम्।यदूषाः।।14।।
110302
पुष्ट्यामेव प्रजननेऽग्निमाधत्ते। अथो संज्ञान
एव। संज्ञान

ह्येतत्पशूनाम्।यदूषाः।।द्यावापृथिवी
सहास्ताम्। ते वियती अब्रूताम्। अस्त्वेव नौ सह
यज्ञियमिति। यदमुष्या यज्ञियमासीत्।
तदस्यामदधात्। त ऊषा अभवन्।।15।।
110303
यदस्या यज्ञियमासीत्। तदमुष्यामदधात्।
तददश्चन्द्रमसि कृष्णम्।
ऊषान्निवपन्नदो ध्यायेत्। द्यावापृथिव्योरेव
यज्ञियेऽग्निमाधत्ते। अग्निर्देवेभ्यो निलायत।
आखू रूपं कृत्वा। स पृथिवीं प्राविशत्। स ऊतीः
कुर्वाणःपृथिवीमनु समचरत्। तदाखुकरीषमभवत्।।16।।
110304
यदाखु करीषं संभारो भवति। यदेवास्य
तत्र न्यक्तम्। तदेवावरुन्धे।
ऊर्जं वा एतं रसं पृथिव्या उपदीका उद्दिहन्ति।
यद्वल्मीकम्। यद्वल्मीकवपा संभारो
भवति। ऊर्जमेव रसं पृथिव्या अवरुन्धे। अथो
श्रोत्रमेव। श्रोत्र ह्येतत्पृथिव्याः।
यद्वल्मीकः।।17।।
110305
अबधिरो भवति। य एवं वेद।
प्रजापतिः प्रजा असृजत। तासामन्नमुपाक्षीयत।
ताभ्यस्सूदमुपप्राभिनत्। ततो वै तासामन्नं नाक्षीयत। यस्य
सूदस्संभारो भवति। नास्य गृहेऽन्नं क्षीयते।
आपो वा इदमग्रे सलिलमासीत्। तेन ्रजापतिरश्राम्यत्।।18।।
110306
कथमिद स्यादिति।
सोऽपश्यत्पुष्करपर्णं तिष्ठत्।सोऽमन्यत।
अस्ति वै तत्।यस्मिन्निदमधि तिष्ठतीति। स वराहो रूपं
कृत्वोप न्यमज्जत्। स पृथिवीमध आर्छत्। तस्या
उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्।।19।।

110307

तत्पृथिव्यै पृथिवित्वम्।

अभूद्वा इदमिति। तद्भूम्यै भूमित्वम्। तां दिशोऽनु

वातस्समवहत्।ताꣳ शर्कराभिरदृꣳहत्। शं वै नोऽभूदिति।

तच्छर्कराणाऐ शर्करत्वम्। यद्वराहविहतꣳ

संभारो भवति। अस्यामेवाछम्बट्कारमग्निमाधत्ते।

शर्करा भवन्ति धृत्यै।।20।।

110308

अथो शंत्वाय। सरेता अग्निराधेय इत्याहुः। आपो

वरुणस्य पत्नय आसन्। ता

अग्निरभ्यध्यायत्। तास्समभवत्। तस्य रेतꣳ पराऽ

पतत्। तद्धिरण्यमभवत्। यद्धिरण्यमुपास्यति।

सरेतसमेवाग्निमाधत्ते। पुरुष इन्वै स्वाद्रेतसो बीभथ्सत

इत्याहुः।।21।।

110309

उत्तरत उपास्यत्यबीभथ्साये। अति

प्रयच्छति।आर्तिमेवाति प्रयच्छति। अग्निर्देवेभ्यो निलायत।

अश्वो रूपं कृत्वा। सोऽश्वत्थे संवथ्सरमतिष्ठत्

। तदश्वत्थस्याश्वत्थत्वम्। यदाश्वत्थस्संभारो

भवति। यदेवास्य तत्र न्यक्तम्। तदेवावरुन्धे।।22।।

1103010

देवा वा ऊर्जं व्यभजन्त।

तत उदुम्बर उदतिष्ठत्। ऊर्ग्वा उदुम्बरः।

यदौदुम्बरस्संभारो भवति। ऊर्जमेवावरुन्धे।

तृतीयस्यामितो दिवि सोम आसीत्।

तं गायत्र्याऽहरत्। तस्य पर्णमच्छिद्यत।

तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्।।23।।

110311

यस्य पर्णमयस्सम्भारो भवति। सोमपीथमेवावरुन्धे।

देवा वै ब्रह्मन्नवदन्त। तत्पर्ण

उपाशृणोत्। सुश्रवा वै नाम।यत्पर्णमयस्सम्भारो

भव॑ति। ब्र॒ह्म॒व॒र्च॒सम॒वाव॑रुन्धे।
प्र॒जाप॑तिर॒ग्निम॑सृजत। सो॑ऽबिभे॒त्प्र मा॑
धक्ष्य॒तीति॑। तꣳ श॒म्या॑ऽशमयत्।।24।।
110312
तच्छ॒म्यै॑ शमि॒त्वम्। यच्छ॑मी॒मय॑स्सम्भा॒रो भव॑ति।
शान्त्या॒ अप्र॑दाहाय। अ॒ग्नेस्सृ॒ष्टस्य॑ य॒तः।
विक॑ङ्कतं॒ भा आ॑र्छत्। यद्वैक॑ङ्कतस्सम्भा॒रो
भव॑ति। भा ए॒वाव॑रुन्धे। सह॑दय॒ोऽग्निरा॒धेय॒ इत्या॑हुः।
म॒रुतो॒ऽद्भिर॒ग्निम॑तमयन्। तस्य॑ ता॒न्तस्य॒
हृद॑य॒माच्छि॑न्दन्। साऽशनि॑रभवत्।
यद॒शनि॑हतस्य वृ॒क्षस्य॑ सम्भा॒रो भव॑ति।
सह॑दयमे॒वाग्निमाध॑त्ते।।25।।
110300
ऊषा॑ अभवन्नभवद्व॒ल्मीको॑ऽश्राम्य॒दप्रथ॑य॒द्धत्यै॑
बीभथ्सत॒ इत्या॑हू रुन्धे पर्ण॒त्वम॑शमयदच्छिन्द॒ स्त्रीणि॑ च।।3।।
110401
द्वा॒द॒शसु॑ विक्रा॒मेष्व॒ग्निमाद॑धीत। द्वाद॑श॒
मासा॑स्संवथ्स॒रः। सं॒व॒थ्स॒राद॒वैन॑
मव॒रुद्ध्याध॑त्ते। यद्द्वा॑वद॒शसु॑ विक्रा॒मेष्वा॒दधी॑त।
परि॑मित॒मव॑रुन्धीत।चक्षु॑र्निमित॒ आद॑धीत। इय॒द्वाद॑श विक्रा॒मा (3) इति॑।
परि॑मितं चै॒वाप॑रिमितं॒ चाव॑रुन्धे।
अनृ॑तं॒ वै वा॒चा व॑दति। अनृ॑तं॒ मन॑सा ध्यायति।।26।।
110402
चक्षु॑र्वै स॒त्यम्। अद्रा (3) गित्या॑ह।
अद॑र्श॒मिति॑। तथ्स॒त्यम्। यश्चक्षु॑र्निमित॒ेऽग्नि
मा॑ध॒त्ते। स॒त्य ए॒वैन॒माध॑त्ते।
तस्मा॒दाहि॑ताग्नि॒र्नानृ॑तं वदेत्। नास्य॑
ब्रा॒ह्म॒णोऽना॑श्वान्गृ॒हे व॑सेत्। स॒त्ये
ह्य॑स्या॒ग्निराहि॑तः। आ॒ग्ने॒यी वै रात्रिः॑।।27।।
110403
आ॒ग्ने॒याः प॒शव॑ः। ऐ॒न्द्रमह॑ः। नक्तं॒ गार्ह॑पत्य॒माद॑धाति।

प॒शूने॒वाव॑रुन्धे। दिवा॑ऽऽहव॒नीय॑᳚म्।
इ॒न्द्रि॒यमे॒वाव॑रुन्धे। अ॒र्धोदि॑ते॒ सूर्य॑
आहव॒नीय॒माद॑धाति। ए॒तस्मि॒न्वै लो॒के प्र॒जाप॑तिᳶ
प्र॒जा अ॑सृजत। प्र॒जा ए॒व तद्यज॑मानस्सृजते।
अथो॑ भू॒तं चै॒व भ॑वि॒ष्यच्चाव॑रुन्धे।।28।।
110404
इ॒डा वै मा॑न॒वी य॑ज्ञानू॒का॒शिन्या॑सीत्। साऽशृ॑णोत्।
असु॑रा आ॒ग्निमाद॑धत॒ इति॑। तद॑गच्छत्। त आ॑हव॒नीय॒मग्र॒ आद॑धत। अथ॒
गार्ह॑पत्यम्। अथा᳚न्वाहार्य॒पच॑नम्। साऽब्र॑वीत्। प्र॒तीच्यै॑षा॒ꣳ
श्रीर॑गात्। भ॒द्रा भू॒त्वा परा॑ भविष्य॒न्तीति॑।।29।।
110405
यस्यै॒वम॒ग्निरा॑धी॒यते᳚। प्र॒तीच्य॑स्य॒ श्रीरे॑ति।
भ॒द्रो भू॒त्वा परा॑भवति। साऽशृ॑णोत्।
दे॒वा अ॒ग्निमाद॑धत॒ इति॑। तद॑गच्छत्।
ते᳚ऽन्वाहार्य॒पच॑न॒मग्र॒आद॑धत। अथ॒ गार्ह॑पत्यम्।
अथा॑हव॒नीय॑᳚म्। साऽब्र॑वीत्।।30।।
110406
प्राच्यै॑षा॒ꣳ श्रीर॑गात्। भ॒द्रा
भू॒त्वा सु॑व॒र्गँल्लो॒कमे᳚ष्यन्ति। प्र॒जां तु न
वे᳚थ्स्यन्त॒ इति॑। यस्यै॒वम॒ग्निरा॑धी॒यते॑। प्राच्य॑स्य॒ श्रीरे॑ति।
भ॒द्रो भू॒त्वा सुव॒र्गं लो॒कमे॑ति। प्र॒जां तु न वि॑न्दते।
साऽब्र॑वी॒दिडा॒ मनु॑᳚म्। तथा॒ वा अ॒हं तवा॒ग्निमाधा॑स्यामि।
यथा॒ प्र प्र॒जया॑ प॒शुभि॑र्मिथु॒नैर्ज॑नि॒ष्यसे᳚।।31।।
110407
प्रत्य॒स्मिल्लो॒ँके स्था॒स्यसि॑। अ॒भि सु॑व॒र्गं लो॒कं
जे॒ष्यसीति॑। गार्ह॑पत्य॒मग्र॒ आद॑धात्।
गार्ह॑पत्यं॒ वा अनु॑ प्र॒जाᳶप॒शव॒ᳶ प्रजा॑यन्ते।
गार्ह॑पत्येनै॒वास्मै᳚ प्र॒जां प॒शून्प्राज॑नयत्।
अथा᳚न्वाहार्य॒पच॑नम्। ति॒र्यङ्ङि॑व॒ वा अ॒यं लो॒कः।
अ॒स्मिन्नै॒व तेन॑ लो॒के प्रत्य॑तिष्ठत्।
अथा॑हव॒नीय॑᳚म्। तेनै॒व सु॑व॒र्गं लो॒कम॒भ्य॑जयत्।।32।।

110408
यस्यैवमग्निराधीयते। प्र प्रजाया
पशुभिर्मिथुनैर्जायते। प्रत्यस्मिँल्लोके
तिष्ठति। अभि सुवर्गं लोकं जयति। यस्य वा
अयथादेवतमग्निराधीयते।आ देवताभ्यो वृश्च्यते।
पापीयान्भवति। यस्य यथादेवतम्। न देवताभ्य आवृश्च्यते।
वसीयान्भवति।।33।।
110408
भृगूणां त्वाऽङ्गिरसां
व्रतपते व्रतेनादधामीति भृग्वङ्गिरसामादध्यात्।
आदित्यानां त्वा देवानां व्रतपते
व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम्।
वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति
राज्ञः। इन्द्रस्य त्वेन्द्रियेण व्रतपते
व्रतेनादधामीति राजन्यस्य। मनोस्त्वा
ग्रामण्यो व्रतपते व्रतेनादधामिति वैश्यस्य। ऋभूणां त्वा
देवानां व्रतपते व्रतेनादधामीति रथकारस्य।
यथादेवतमग्निराधीयते। न देवताभ्य
आवृश्च्यते। वसीयान्भवति ।।34।।
110400
ध्यायति वै रात्रिश्चावरुन्धे
भविष्यन्तीत्यब्रवीज्जनिष्यसेऽजयद्वसीयान्भवति नव च ।।4।।
110501
प्रजापतिर्वाचस्सत्यमपश्यत्। तेनाग्निमाधत्त।
तेन वै स आर्ध्नोत्। भूर्भुवस्सुवरित्याह।
एतद्वै वाचस्सत्यम्। य एतेनाग्निमाधत्ते।
ऋध्नोत्येव। अथो सत्यप्राशूरेव भवति। अथो य
एवं विद्वानभिचरति। स्तृणुत एवैनम् ।।35।।
110502
भूरित्याह। प्रजा एव तद्यजमानस्सृजते। भुव
इत्याह। अस्मिन्नेव लोके प्रतितिष्ठति। सुवरित्याह।

सु॒व॒र्ग ए॒व लो॒के प्रति॑तिष्ठति। त्रि॒भिर॒क्षरै॒र्गार्

ह॑पत्य॒माद॑धाति। त्रय॑ इ॒मे लो॒काः। ए॒ष्वे॑वैनं॑

लो॒केषु॒ प्रति॑ष्ठित॒माध॑त्ते। सर्वै॑ᳲ प॒ञ्चभि॑राहव॒नीय᳚म्।।36।।
110503
सु॒व॒र्गाय॒ वा

ए॒ष लो॒कायाधी॑यते। यदा॑हव॒नीय॑ः। सु॒व॒र्ग ए॒वास्मै᳚

लो॒के वा॒चस्स॒त्यꣳ सर्व॑माप्नोति।

त्रि॒भिर्गार्॒ह॑पत्य॒माद॑धाति। प॒ञ्चभि॑राहव॒नीय᳚म्।

अ॒ष्टौ संप॑द्यन्ते। अ॒ष्टाक्ष॑रा गाय॒त्री।

गा॒य॒त्रो᳚ऽग्निः। यावा॑ने॒वाग्निः। तमाध॑त्ते।।37।।
110504
प्र॒जाप॑तिᳲ प्र॒जा अ॑सृजत। ता अ॑स्माथ्सृ॒ष्टाᳲ

परा॑चीरायन्। ताभ्यो॒ ज्योति॒रुद॑गृह्णात्।

तं ज्योति॒ᳲ पश्य॑न्तीᳲ प्र॒जा अ॒भि स॒माव॑र्तन्त।

उ॒परी॑वा॒ग्निमु॒द्गृह्णी॑यादु॒द्धर॑न्। ज्योति॑रे॒व

पश्य॑न्तीᳲ प्र॒जा यज॑मानम॒भि स॒माव॑र्तन्ते।

प्र॒जाप॑ते॒रक्ष्य॑श्वयत्। तत्परा॑ऽपतत्। तदश्वो॑ऽभवत्।

तदश्व॑स्याश्व॒त्वम्।।38।।
110505
ए॒ष वै प्र॒जाप॑तिः । यद॒ग्निः।

प्रा॒जा॒प॒त्योऽश्वः॑। यदश्वं॑ पु॒रस्ता॒न्नय॑ति ।

स्वमे॒व चक्षु॒ᳲ पश्य॑न्प्र॒जाप॑ति॒रनू॒दे॑ति। व॒ज्री वा

ए॒षः। यदश्वः॑। यदश्वं॑

पु॒रस्ता॒न्नय॑ति। जा॒ताने॒व भ्रातृ॑व्या॒न्प्रणु॑दते।

पु॒न॒रा व॑र्तयति।।39।।
110506
ज॒नि॒ष्यमा॑णाने॒व प्रति॑नुदते।

न्या॑हव॒नीयो॒ गार्॒ह॑पत्यमकामयत। नि

गार्॒ह॑पत्य आहव॒नीय᳚म्। तौ वि॒भाजं॒ नाश॑क्नोत्। सोऽश्व॑ᳲ

पूर्व॒वाड्भू॒त्वा। प्राञ्चं॒ पूर्व॒मुद॑वहत्।

तत्पू᳚र्व॒वाह॑ᳲ पूर्ववा॒ट्त्वम् । यदश्वं॑

पुरस्तान्नयति। विभक्तिरेवैनयोस्सा। अथो
नानावीर्यावेवैनौ कुरुते।।40।।
110507
यदुपर्युपरि शिरो हरेत्। प्राणान्
विच्छिन्द्यात्। अधोऽधश्शिरो हरति। प्राणानां
गोपीथाय। इयत्यग्रे हरति। अथेयत्यथेयति।
त्रय इमे लोकाः। एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते।
प्रजापतिरग्निमसृजत। सोऽबिभेत्प्र मा धक्ष्यतीति।।41।।
110508
तस्य त्रेधा महिमानम् व्यौहत्। शान्त्या
अप्रदाहाय। यत्त्रेधाऽग्निराधीयते।
महिमानमेवास्य संदधाति। पशुर्वा एषः। यदश्वः। एष
रुद्रः।।42।।
110509
यदग्निः। यदश्वस्य पदेऽग्निमादध्यात्।
रुद्राय पशूनपिदध्यात्। अपशुर्यजमानस्स्यात्।
यन्नाक्रमयेत्। अनवरुद्धा
अस्य पशवस्स्युः। पार्श्वत आक्रमयेत्।
यथाऽऽहितस्याग्नेरङ्गारा अभ्यववर्तेरन्।
अवरुद्धा अस्य पशवो भवन्ति। न रुद्रायापिदधाति।।43।।
110510
त्रीणि हवीꣳषि निर्वपति। विराज एव विक्रान्तं
यजमानोऽनुविक्रमते। अग्नये पवमानाय।
अग्नये पावकाय। अग्नये शुचये। यदग्नये पवमानाय
निर्वपति। पुनात्येवैनम्। यदग्नये
पावकाय। पूत एवास्मिन्नन्नाद्यं दधाति।
यदग्नये शुचये। ब्रह्मवर्चसमेवा
स्मिन्नुपरिष्टाद्दधाति।।44।।
110500
एनमाहवनीयं धत्तेऽश्वत्वं वर्तयति
कुरुत इति रुद्रो दधाति यदग्नये शुचय एकं च ।।5।।

110601
देवासुरास्संयत्ता आसन्। ते देवा
विजयमुपयन्तः। अग्नौ वामं वसु सं न्यदधत।
इदमु नो भविष्यति। यदि नो जेष्यन्तीति।
तदग्निर्नोथ्सहमशक्नोत्। तत् त्रेधा विन्यदधात्। पशुषु
तृतीयम्। अफ्सु तृतीयम्। आदित्ये तृतीयम्।।45।।
110602
तद्देवा विजित्य। पुनरवारुरुथ्सन्त। तेऽग्नये पवमानाय
पुरोडाशमष्टाकपालं निरवपन्। पशवो वा
अग्निः पवमानः। यदेव पशुष्वासीत्। तत्तेनावारुन्धत ।तेऽग्नये
पावकाय। आपो वा अग्निःपावकः।
यदेवाफ्स्वासीत्। तत्तेनावारुन्धत ।।46।।
110603
तेऽग्नये शुचये। असौ वा
आदित्योऽग्निश्शुचिः। यदेवादित्य आसीत्।
तत्तेनावारुन्धत। ब्रह्मवादिनो वदन्ति। तनुवो
वावैता अग्न्याधेयस्य। आग्नेयो वा
अष्टाकपालोऽग्न्याधेयमिति। यत्तन्निर्वपेत्। नैतानि।
यथाऽऽत्मा स्यात्।।47।।
110604
नाङ्गानि। तादृगेव तत्।यदेतानि निर्वपेत्। न तम्। यथाऽङ्गानि स्युः।
नात्मा। तादृगेव तत्। उभयानिसह निरुप्याणि। यज्ञस्य सात्मत्वाय।
उभयं वा एतस्येन्द्रियं वीर्यमाप्यते।।48।।
110605
योऽग्निमाधत्ते। ऐन्द्राग्नमेकादश
कपालमनु निर्वपेत्। आदित्यं चरुम्। इन्द्राग्नी वै
देवानामयातमायामानौ। ये एव देवते
अयातयाम्नी। ताभ्यामेवास्मा इन्द्रियं
वीर्यमवरुन्धे। आदित्यो भवति। इयं वा अदितिः। अस्यामेव
प्रतितिष्ठति। धेन्वै वा एतद्रेतः।।49।।
110606

यदाज्य॑म्। अ॒न॒डुह॑स्तण्डु॒लाः। मि॒थु॒नमे॒वाव॑रुन्धे।
घृ॒ते भ॑वति । य॒ज्ञस्याल॑ूक्षान्तत्वाय। च॒त्वार॑
आर्षे॒याः प्राश्ञ॑न्ति। दि॒शामे॒व ज्योति॑षि जुहोति। प॒शवो॒ वा ए॒तानि॑
ह॒वीꣳषि॑। ए॒ष रु॒द्रः। यद॒ग्निः।।50।।
110607
यथ्स॒द्य ए॒तानि॑ ह॒वीꣳषि॑ नि॒र्वपे᳚त्। रु॒द्राय॑
प॒शूनपि॑ दध्यात्। अ॒प॒शुर्यज॑मानस्स्यात्। यन्नानु॑
नि॒र्वपे᳚त्। अन॑वरुद्धा अस्य प॒शव॑स्स्युः।
द्वा॒द॒शसु॒ रात्री॒ष्वनु॒ निर्व॑पेत्। सं॒व॒थ्स॒र
प्र॑तिमा॒ वै द्वाद॑श॒ रात्र॑यः।
सं॒व॒थ्स॒रेणै॒वास्मै॑ रु॒द्रꣳ श॑मयि॒त्वा।
प॒शूनव॑रुन्धे। यदेक॑मेकमे॒तानि॑ ह॒वीꣳषि॑ नि॒र्वपे᳚त् ।।51।।
110608
यथा॒ त्रीण्या॒वप॑नानि पू॒रये᳚त्।
ता॒दृक्तत्। न प्र॒जन॑न॒मुच्छिꣳ॑षेत्। एकं॑
नि॒रुप्य॑। उत्त॑रे॒ सम॑स्येत्। तृ॒तीय॑मे॒वास्मै॑
लो॒कमुच्छिꣳ॑षति प्र॒जन॑नाय। तं प्र॒जया॑ प॒शुभि॒रनु॒
प्रजा॑यते। अथो॑ य॒ज्ञस्यै॒वैषाऽभिक्रा᳚न्तिः।र॒थ॒च॒क्रं
प्रव॑र्तयति। म॒नु॒ष्य॒र॒थेनै॒व दे॑वर॒थं प्र॒त्यव॑रोहति।।52।।
110609
ब्र॒ह्म॒वा॒दिनो॑ वदन्ति। हो॒त॒व्य॑मग्निहो॒त्रा (3)
न हो॑त॒व्या (3) मिति॑। यद्यजु॑षा
जु॒हु॒यात्। अय॑थापूर्व॒माहु॑ती जुहु॒यात्। यन्न जु॑हु॒यात्।
अ॒ग्निः परा॑ भवेत्। तू॒ष्णीमे॒व हो॑त॒व्य᳚म्। य॒था॒पू॒र्वमाहु॑ती जु॒होति॑।
नाग्निः परा॑भवति। अ॒ग्नीधे॑ ददाति ।।53।।
110610
अ॒ग्निर्मु॑खाने॒वर्तून्प्री॑णाति। उ॒प॒बर्ह॑णं
ददाति। रू॒पाणा॒मव॑रुद्ध्यै। अश्वं॑ ब्र॒ह्मणे᳚।
इ॒न्द्रि॒यमे॒वाव॑रुन्धे। धे॒नुꣳ
होत्रे᳚। आ॒शिष॑ ए॒वाव॑रुन्धे। अ॒न॒ड्वाह॑मध्व॒र्यवे᳚।
वह्नि॒र्वा अ॑न॒ड्वान्। वह्नि॑रध्व॒र्युः ।।54।।

110611
वह्निनैव वह्निं यज्ञस्यावरुन्धे। मिथुनौ गावौ
ददाति। मिथुनस्यावरुद्ध्यै। वासो ददाति।
सर्वदेवत्यं वै वासः। सर्वा एव देवताः
प्रीणाति। आ द्वादशभ्यो ददाति। द्वादश मासास्संवथ्सरः।
संवथ्सर एव प्रतितिष्ठति। काममूर्ध्वं देयम्।
अपरिमितस्यावरुद्ध्यै ।।55।।
110600
आदित्ये तृतीयमफ्स्वासीत्तत्तेनावारुन्धत
स्यादाप्यते रेतो ऽग्नि
रेकमेकमेतानिहवींःषि निर्वपेत्प्रत्यवरोहति
ददात्यध्वर्युर्देयमेकं च ।।6।।
110701
घर्मश्शिरस्तदयमग्निः। संप्रियः पशुभिर्भुवत्।
छर्दिस्तोकाय तनयाय यच्छ।
वातः प्राणस्तदयमग्निः। संप्रियः पशुभिर्भुवत्।
स्वदितं तोकाय तनयाय पितुं पच।
प्राचीमनु प्रदिशं प्रेहि विद्वान्। अग्नेरग्ने
पुरो
अग्निर्भवेह। विश्वा आशा दीद्यानो विभाहि। ऊर्जं
नो धेहि द्विपदे चतुष्पदे।।56।।
110702
अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः। संप्रियः
पशुभिर्भुवत्। यत्ते शुक्र
शुक्रं वर्चश्शुक्रा तनूः। शुक्रं ज्योतिरजस्रम्।
तेन मे दीदिहि तेन त्वाऽऽदधे। अग्निनाऽग्ने
ब्रह्मणा। आनशे व्यानशे सर्वमायुर्व्यानशे।
ये ते अग्ने शिवे तनुवौ। विराट्च स्वराट्च। ते मा
विशतां ते मा जिन्वताम्।।57।।
110703
ये ते अग्नेशिवे तनुवौ। संराट्चाभिभूश्च। ते मा

वि॑शता॒ं ते मा॑ जिन्वताम्। ये ते॑ अग्ने शि॒वे त॒नुवौ॑। वि॒भूश्च॑

परि॒भूश्च॑। ते मा वि॑शता॒ं ते मा॑ जिन्वताम्। ये ते॑ अग्ने

शि॒वे त॒नुवौ॑। प्र॒भ्वी च॒ प्रभू॑तिश्च।

ते मा वि॑शता॒ं ते मा॑ जिन्वताम्। यास्ते॑ अग्ने शि॒वास्त॒नुव॑ः।

ता॒भि॒स्त्वाऽऽद॑धे। यास्ते॑ अग्ने घो॒रास्त॒नुव॑ः।

ताभि॑र॒मुं ग॑च्छ।।58।।

110700

चत॑ुष्पदे जिन्वतां त॒नुव॒स्त्रीणि॑ च ।।7।।

110801

इ॒मे वा ए॒ते ल॒ोका अ॒ग्नय॑ः। ते यदव्या॑वृत्ता

आधी॒येरन्न्। श॒ोचये॑यु॒र्यज॑मानम्। घ॒र्मश्शिर॒ इति॒

गार्ह॑पत्य॒माद॑धाति। वात॑ः प्राण

इत्य॑न्वाहार्य॒पच॑नम्। अ॒र्कश्चक्षुरित्या॑हव॒नीय॑म्।

तेनै॒वैना॒न्व्याव॑र्तयति। तथा॒ न शो॑चयन्ति॒

यज॑मानम्।र॒थन्त॒रम॒भिगा॑यते॒ गार्ह॑पत्य आधी॒यमा॑ने।

राथ॑न्तर॒ो वा अ॒यं ल॒ोकः।।59।।

110802

अ॒स्मिन्ने॒वैन॑ं ल॒ोके प्रति॑ष्ठित॒माध॑त्ते।

वा॒मदे॒व्यम॒भिगा॑यत उद्ध्रि॒यमा॑णे। अ॒न्तरि॑क्षं

वै वा॑मदे॒व्यम्। अ॒न्तरि॑क्ष ए॒वैन॒ं

प्रति॑ष्ठित॒माध॑त्ते। अथो॒ शान्ति॒र्वै वा॑मदे॒व्यम्।

शा॒न्तमे॒वैन॑ं पश॒व्य॑मुद्धरते। बृहद॒भिगा॑यत आहव॒नीय॑ आधी॒यमा॑ने।

बार्ह॑त॒ो वा अ॒सौ ल॒ोकः। अ॒मुष्मि॑न्ने॒वैन॑ं ल॒ोके

प्रति॑ष्ठित॒माध॑त्ते। प्र॒जाप॑तिर॒ग्निम॑सृजत ।।60।।

110803

सोऽश्वो॒ऽवारो॑ भूत्वा परा॑ङैत्।

तं वा॑रव॒न्तीये॑नावारयत। तद्वा॑रव॒न्तीय॑स्य

वारवन्तीय॒त्वम्। श्यै॒तेन॑ श्ये॒ती अ॑कुरुत। तच्छ्यै॒तस्य॑

श्यैत॒त्वम्। यद्वा॑रव॒न्तीय॑ मभि॒ गाय॑ते।भ

वा॒र॒यि॒त्वैवैन॒ं प्रति॑ष्ठित॒माध॑त्ते। श्यै॒तेन॑

श्ये॒तीकु॑रुते। घ॒र्मश्शिर॒ इति॒ गार्ह॑पत्य॒माद॑धाति।

सशीर्॒षाणमे॒वैन॒ माध॑त्ते।।61।।
110804
उपै॑न॒मुत्त॑रो य॒ज्ञो न॑मति। रु॒द्रो वा
ए॒षः। यद॒ग्निः। स आ॑धी॒यमा॑न ईश्व॒रो
यज॑मानस्य प॒शून् हि॑ꣳसि॑तोः। संप्रि॑यः
प॒शुभि॑र्भुव॒दित्या॑ह। प॒शुभि॑रे॒वैन॒ꣳ संप्रि॑यं
करोति। प॒शूनामहि॑ꣳसायै। छ॒र्दिस्तो॒काय॒ तन॑याय
य॒च्छेत्या॑ह। आ॒शिष॑मेवैतामाशा॑स्ते। वात॑ः प्रा॒ण
इत्य॒न्वाहार्य॒पच॑नम्।।62।।
110805
सप्रा॑णमे॒वैन॒माध॑त्ते।
स्व॒दि॒तं तो॒काय॒ तन॑याय पि॒तुं प॒चेत्या॑ह।
अन्न॑मे॒वास्मै॑ स्वदयति। प्राची॒मनु॑ प्र॒दिश॑ं
प्रेहि॑ वि॒द्वानित्या॑ह। विभ॑क्तिरे॒वैन॑यो॒स्सा।
अथो॒ नाना॑वीर्यावे॒वैनौ॑ कुरुते। ऊर्जं॑ नो धेहि द्वि॒पदे॒
चतु॑ष्पद॒ इत्या॑ह। आ॒शिष॑मे॒वैतामाशा॑स्ते।
अ॒र्कश्चक्षु॒रित्या॑हव॒नीय॑म्। अ॒र्को वै
दे॒वाना॒मन्न॑म्।।63।।
110806
अन्न॑मे॒वाव॑रुन्धे। तेन॑
मे दीदि॒हीत्या॑ह। समि॑न्ध ए॒वैन॑म्। आ॒न॒शे व्या॑नश॒ इति॒
त्रिरुदि॑ङ्गयति। त्रय॑ इ॒मे लो॒काः।
ए॒ष्वे॑वैनं॑ लो॒केषु॒ प्रति॑ष्ठित॒माध॑त्ते।
तत्तथा॒ न का॒र्य॑म्। वीङ्गि॑त॒मप्र॑तिष्ठित॒माद॑धीत।
उ॒द्धृत्यै॒वाधाया॑भि॒मन्त्रि॑यः। अवी॑ङ्गितमे॒वैनं॑
प्रति॑ष्ठित॒माध॑त्ते। वि॒राट्च॑ स्व॒राट्च॒ यास्ते॑
अग्ने शि॒वास्त॒नुव॒स्ताभि॒स्त्वाऽऽद॑ध॒
इत्या॑ह। ए॒ता वा अ॒ग्नेश्शि॒वास्त॒नुव॑ः।
ताभि॑रे॒वैन॒ꣳ सम॑र्धयति। यास्ते॑
अग्ने घो॒रास्त॒नुव॒स्ताभि॑र॒मुं

ग॒च्छेति॑ ब्रू॒या॒द्यं द्वि॒ष्यात्। ताभि॑रे॒वैन॒ं परा॑भवयति।।64।।
110800
लो॒को॑ऽसृजतैन॒माध॑त्तेऽन्वाहार्य॒पच॑नं
दे॒वाना॒मन्न॑मेन॒ं प्रति॑ष्ठित॒माध॑त्ते॒ पञ्च॑ च।।8।।
110901
श॒मी॒ग॒र्भाद॒ग्निं म॑न्थति। ए॒षा वा अ॒ग्नेर्य॒ज्ञिया॑
त॒नूः। ताम॒ेवास्मै॑ जनयति।
अदि॑तिः पु॒त्रका॑मा। सा॒ध्येभ्यो॑ दे॒वेभ्यो᳚
ब्रह्मौ॒दनम॑पचत्। तस्या॑ उ॒च्छेष॑णमददुः।
तत्प्राश्ञा᳚त्। सा रेतो॑ धत्त। तस्यै॑ धा॒ता चा᳚र्य॒मा
चा॑जायेताम्। सा द्वि॒तीय॑मपचत्।।65।।
110902
तस्या॑ उ॒च्छेष॑णमददुः। तत्प्राश्ञा᳚त्। सा रेतो॑ऽधत्त।
तस्यै॑ मि॒त्रश्च॒ वरु॑णश्चाजायेताम्। सा
तृ॒तीय॑मपचत्। तस्या॑ उ॒च्छेष॑णमददुः। तत्प्राश्ञा᳚त्। सा
रेतो॑ऽधत्त। तस्या॒ अꣳश॑श्च॒ भग॑श्चाजायेताम्। सा च॑तु॒र्थम॑पचत्।।66।।
110903
तस्या॑ उ॒च्छेष॑णमददुः। तत्प्राश्ञा᳚त्। सा रेतो॑ऽधत्त। तस्या॒
इन्द्र॑श्च॒ विव॑स्वाꣳश्चाजायेताम्। ब्र॒ह्मौ॒द॒नं प॑चति। रेत॑ ए॒व
तद्द॑धाति। प्राश्ञ॑न्ति ब्राह्म॒णा ओ॑द॒नम्।
यदाज्य॑मु॒च्छिष्य॑ते। तेन॑ स॒मिधो॒ऽभ्यज्याद॑धाति।
उ॒च्छेष॑णा॒द्धा अदि॑ती॒ रेतो॑ऽधत्त।।67।।
110904
उ॒च्छेष॑णादे॒व तद्रेतो॑ धत्ते। अस्थि॒ वा ए॒तत्।
यथ्स॒मिध॑ः। ए॒तद्रेत॑ः। यदाज्य᳚म्। यदाज्ये॑न
स॒मिधो॒ऽभ्यज्या॒दधा॑ति। अस्थ्ये॒व तद्रेत॑सि दधाति।
ति॒स्र आद॑धाति मिथुन॒त्वाय॑। इय॑तीर्भवन्ति।
प्र॒जाप॑तिना यज्ञमु॒खेन॒ संमि॑ताः।।68।।
110905
इय॑तीर्भवन्ति। य॒ज्ञ॒प॒रु॒षा संमि॑ताः। इय॑तीर्भवन्ति।
ए॒ताव॒द्वै पुरु॑षे वी॒र्य᳚म्। वी॒र्य॑संमिताः।

आ॒र्द्रा भ॑वन्ति। आ॒र्द्रमि॑व॒ हि रेत॑स्सि॒च्यते᳚।
चित्रि॑यस्याश्व॒त्थस्याद॑धाति। चि॒त्रमे॒व भ॑वति।
घृ॒तव॑तीभि॒राद॑धाति।।69।।
110906
ए॒तद्वा अ॒ग्नेः᳚ प्रि॒यं धाम॑। यद्घृ॒तम्।
प्रि॒येणै॒वैनं॒ धाम्ना॒ सम॑र्धयति। अथो॒ तेज॑सा।
गा॒य॒त्रीभि॑र्ब्राह्म॒णस्याद॑ध्यात्। गा॒य॒त्रछ॑न्दा॒ वै
ब्रा᳚ह्म॒णः। स्वस्य॒ छन्द॑सः᳚ प्रत्ययन॒स्त्वाय॑।
त्रि॒ष्टुग्भी᳚ रा॒जन्य॑स्य। त्रि॒ष्टुप्छ॑न्दा॒ वै
रा॒ज॒न्यः॑। स्वस्य॒ छन्द॑सः᳚ प्रत्ययन॒स्त्वाय॑।।70।।
110907
जग॑तीभि॒र्वैश्य॑स्य। जग॑तीछन्दा॒ वै वैश्यः॑। स्वस्य॒
छन्द॑सः᳚ प्रत्ययन॒स्त्वाय॑।
तꣳ सं॑वथ्स॒रं गो॑पायेत्। सं॒व॒थ्स॒रꣳ हि रेतो॑ हि॒तं
वर्ध॑ते। यद्ये॑नꣳ संवथ्स॒रे नोप॒नमे᳚त्।
स॒मिधः॒ पुन॒राद॑ध्यात्। रेत॑ ए॒व तद्धि॒तं
वर्ध॑मानमेति। न मा॒ꣳ॒सम॑श्ञीयात्। न स्त्रिय॒मुपे॑यात्।।71।।
110908
यन्मा॒ꣳ॒सम॑श्ञी॒यात्।
यथ्स्त्रिय॑मुपे॒यात्। निर्वी᳚र्यस्स्यात्।
नैन॑म॒ग्निरुप॑नमेत्। श्व आ॑धा॒स्यमा॑नो ब्रह्मौद॒नं
प॑चति। आ॒दि॒त्या वा इ॒त उ॑त्त॒मास्सु॑व॒र्गं लो॒कमा॑यन्न्।
ते वा इ॒तो यन्तं॒ प्रति॑नुदन्ते। ए॒ते खल॒ु वावादि॒त्याः।
यद्ब्रा᳚ह्म॒णाः। तैरे॒व सं॒त्वंग॑च्छति।।72।।
110909
नैनं॒ प्रति॑नुदन्ते। ब्र॒ह्म॒वा॒दिनो॑
वदन्ति। क्वा॑सः। अ॒ग्निः॒क॒र्यः॑। यो᳚ऽस्मै प्र॒जां
प॒शून्प्र॑ज॒नय॒तीति॑। शल्कै॒स्ताꣳ
रात्रि॑म॒ग्निमि॑न्धीत। तस्मि॑न्नुपव्यु॒षम॒रणी॒ निष्ट॑पेत्। यथ॑र्॒ष॒भाय॑
वाशि॒तान्या॑ विच्छ॒यति॑। ता॒दृगे॒व तत्।
अ॒पो॒दूह्य॒ भस्मा॒ग्निं॒ म॑न्थति।।73।।

110910
सैव साऽग्नेस्सन्ततिः। तं मथित्वा प्राञ्चमुद्धरति।
संवथ्सरमेव तद्रेतो हितं
प्रजनयति।अनाहितस्तस्याग्निरित्याहुः।
यस्समिधोऽनाधायाग्निमाधत्त
इति। तास्संवथ्सरे पुरस्तादादध्यात्।
संवथ्सरादेवैनमवरुध्याधत्ते। यदि
संवथ्सरेऽनादध्यात्। द्वादश्यां पुरस्तादादध्यात्।
संवथ्सर प्रतिमा वै द्वादश
रात्रयः। संवथ्सरमेवास्याहिता भवन्ति। यदि
द्वादश्यां नादध्यात्। त्र्यहे पुरस्तादादध्यात्।
आहिता एवास्य भवन्ति।।74।।
110900
द्वितीयमपचञ्चतुर्थमपचददिती रेतोऽधत्त संमिता
घृतवतीभिरादधाति राजन्यस्स्वस्य
छन्दसः प्रत्ययनस्त्वायेयाद्गच्छति
मन्थति रात्रयश्चत्वारिंच ।।9।।
111001
प्रजापतिः प्रजा असृजत। स रिरिचानोऽमन्यत।
स तपोऽतप्यत। स आत्मन्वीर्यमपश्यत्।
तदवर्धत। तदस्माथ्सहसोर्ध्वमसृज्यत। सा विराडभवत्।
तां देवासुरा व्यगृह्णत। सोऽब्रवीत्प्रजापतिः।
मम वा एषा।।75।।
111002
दोहा एव युष्माकमिति।
सा ततःप्राच्युदक्रामत्।
तत्प्रजापतिः पर्यगृह्णात्। अथर्व पितुं
मे गोपायेति। सा द्वितीयमुदक्रामत्।
तत्प्रजापतिः पर्यगृह्णात्। नर्य प्रजां मे
गोपायेति। सा तृतीयमुदक्रामत्।
तत्प्रजापतिः पर्यगृह्णात्।

शꣳस्य॑ प॒शून्मे॑ गोपा॒येति॑।।76।।
111003
सा च॑तु॒र्थमुद॑क्रामत्। तत्प्र॒जाप॑ति॒ᳶ पर्य॑
गृह्णात्। सप्र॑थ स॒भां मे॑ गोपा॒येति॑।
सा प॑ञ्च॒ममुद॑क्रामत्। तत्प्र॒जाप॑ति॒ᳶ पर्य॑गृह्णात्।
अहे॑ बुध्निय॒ मन्त्रं॑ मे गोपा॒येति॑।
अ॒ग्नीन् वाव सा तान् व्य॑क्रमत।
तान्प्र॒जाप॑ति॒ᳶ पर्य॑गृह्णात्। अथो॑ प॒ङ्क्तिमे॒व।
प॒ङ्क्तिर्वा ए॒षा ब्रा॑ह्म॒णे प्रवि॑ष्टा।।77।।
111004
ताम॒त्मनोऽधि॒निर्मि॑मीते।
यद॒ग्निरा॑धी॒यते॑। तस्मा॑दे॒ताव॑न्तो॒
ऽग्नय॒ आधी॑यन्ते। पाङ्क्तं॒ वा इ॒दꣳ सर्व॑म्।
पाङ्क्ते॑नै॒व पाङ्क्तꣳ॑ स्पृणोति। अथ॑र्व पि॒तुं मे॑
गोपा॒येत्या॑ह। अन्न॑मे॒वैतेन॑ स्पृणोति।
नर्य॑ प्र॒जां मे॑ गोपा॒येत्या॑ह। प्र॒जाम॒वैतेन॑ स्पृणोति।
शꣳस्य॑ प॒शून्मे॑ गोपा॒येत्या॑ह।।78।।
111005
प॒शून॒वैतेन॑ स्पृणोति। सप्र॑थ स॒भां मे॑ गोपा॒येत्या॑ह।
स॒भामे॒वैतेने॑न्द्रि॒य स्पृ॑णोति।
अहे॑ बुध्निय॒ मन्त्रं॑ मे गोपा॒येत्या॑ह। मन्त्र॑मे॒वैतेन॒
श्रिय॑ स्पृणोति। यदा॑न्वाहार्य॒पच॑नेऽन्वाहा॒र्यं॑ पच॑न्ति। तेन॒
सो॑ऽस्या॒भीष्ट॑ᳶ प्री॒तः। यद्गार्ह॑पत्य॒
आज्य॑मधि॒श्रय॑न्ति॒ संपत्नी॑र्या॒जय॑न्ति।
तेन॒ सो॑ऽस्या॒भीष्ट॑ᳶ प्री॒तः। यदा॑हव॒नीये॒ जु॒ह्वति।।79।।
111006
तेन॒ सो॑ऽस्या॒भीष्ट॑ᳶ प्री॒तः। यथ्स॒भायां॑ वि॒जय॑न्ते।
तेन॒ सो॑ऽस्या॒भीष्ट॑ᳶ प्री॒तः। यदा॑वस॒थेऽन्न॒ꣳ॒ हर॑न्ति।
तेन॒ सो॑ऽस्या॒भीष्ट॑ᳶ प्री॒तः।
तथा॑ऽस्य॒ सर्वे॑ प्री॒ता अ॒भीष्टा॒ आधी॑यन्ते।
प्र॒व॒स॒थमे॒ष्यन्ने॒वमुप॑तिष्ठे॒तैक॑मेकम्। यथा॑ब्राह्म॒णाय॑

गृहेवासिने परिदाय गृहानेति। तादृगेवतत्।
पुनरागत्योपतिष्ठते। सा भागेयमेवैषां तत्। सा तत
ऊर्ध्वारोहत्। सा रोहिण्यभवत्। तद्रोहिण्यै
रोहिणित्वम्। रोहिण्यामग्निमादधीत। स्व एवैनं
योनौ प्रतिष्ठितमाधत्ते। ऋध्नोत्येनेन।।80।।
111000
एषा पशून्मे गोपायेति प्रविष्टा पशून्मे
गोपायेत्याह जुह्वति तिष्ठते सप्त च।।10।।
110000
ब्रह्म संधत्तं कृत्तिकासूद्धन्ति द्वादशसु
प्रजापतिर्वाचो देवासुरास्तदग्निर्नेद्धर्मश्शिर
इमे वै शमीगर्भात्प्रजापतिस्स रिरिचानस्स तपस्स आत्मन्वीर्यंदर्श।।10।।
ब्रह्म संधत्तं तौ दिव्यावथो शंत्वाय
प्राच्यैषां यदुपर्युपरि
यथ्सद्यस्सोऽश्वोऽवारोभूत्वा जगतीभिरशीतिः।।80।।
ब्रह्म संधत्तमृध्नोत्येनेन।।
हरिः ओम् कृष्णयजुर्ब्राह्मणे प्रथमाष्टके प्रथमप्रपाठकस्समाप्तः

120000

हरिः ओम्।।

120101

उ॒द्धन्यमा॑नम॒स्या अ॑मे॒ध्यम्। अप॑

पा॒प्मानं॒ यज॑मानस्य हन्तु। शि॒वा

न॑स्सन्तु प्र॒दिश॒श्चत॑स्रः। शं नो॑ मा॒ता पृ॑थि॒वी

तोक॑साता। शंनो॑ दे॒वीर॒भिष्ट॑ये। आपो॑ भवन्तु पी॒तये᳚। शंयोर॒भि

स्र॑वन्तु नः। वै॒श्वा॒न॒रस्य॑

रू॒पम्। पृ॒थि॒व्यां प॑रि॒स्रसा᳚। स्यो॒नमावि॑शन्तुनः।।1।।

120102

यदि॒दं दि॒वो यद॒दःपृ॑थि॒व्याः। सं॒ज॒ज्ञा॒ने रोद॑सी संबभू॒वतुः॑।

ऊषा᳚न्कृ॒ष्णम॑वतु कृ॒ष्णमू॒षाः᳚। इ॒होभयो᳚र्य॒ज्ञिय॒माग॑मिष्ठाः।

ऊ॒तीः कु॑र्वा॒णो यत्पृ॑थि॒वीमच॑रः। गु॒हा॒कार॑माखुरू॒पं प्र॒तीत्य॑।

तत्ते॒ न्य॑क्तमि॒ह सं॒भर॑न्तः। श॒तं जी॑वेम

श॒रद॒स्सवी॑राः। ऊर्जं᳚ पृथि॒व्या रस॑मा॒भर॑न्तः। श॒तं

जी॑वेम श॒रदः॑ पुरू॒चीः।।2।।

120103

व॒म्रीभि॒रनु॑वित्तं॒ गुहा॑सु। श्रोत्रं᳚ त उ॒र्व्यब॑धिरा भवामः। प्र॒जाप॑ति

सृष्टानां प्र॒जाना᳚म्। क्षु॒धोऽप॑हत्यै

सुवि॒तं नो॑ अस्तु। उप॒ प्रभि॑न्न॒मिष॒मूर्जं᳚

प्र॒जाभ्यः॑। सूदं॑ गृ॒हेभ्यो॒ रस॒माभ॑रामि। यस्य॑ रू॒पं

बिभ्र॑दि॒माम॑विन्दत्। गु॒हा प्रवि॑ष्टाꣳ सरि॒रस्य॒

मध्ये᳚। तस्ये॒दं विह॑तमा॒भर॑न्तः। अच्छ॑म्बट्कारम॒स्यां वि॑धेम।।3।।

120104

यत्प॒र्यप॑श्यथ्सरि॒रस्य॒ मध्ये᳚। उ॒र्वीमप॑श्य॒ज्जग॑तः

प्रति॒ष्ठाम्। तत्पुष्क॑रस्या॒यत॑ना॒द्धि जा॒तम्। प॒र्णं

पृ॑थि॒व्याः प्रथ॑नꣳ हरामि। याभि॒रदृꣳ॑ह॒ज्जग॑तꣳ

प्रति॒ष्ठाम्। उ॒र्वीमि॒मां वि॑श्वज॒नस्य॑ भ॒र्त्रीम्।

ता॑नश्शि॒वाश्शर्क॑रास्सन्तु॒ सर्वाः᳚। अ॒ग्ने

रेत॑श्च॒न्द्रꣳ हिर॑ण्यम्। अ॒द्भ्यस्संभू॑तम॒मृतं॑

प्र॒जासु॑। तथ्सं॒भर॑न्नुत्तर॒तो नि॒धाय॑।।4।।

120105
अ॒ति॒प्र॒यच्छं॑ दु॒रि॑तिं तरेयम्। अश्वो॑ रूपं॑ कृत्वा
यद॑श्व॒त्थेऽति॑ष्ठः। सं॒व॒थ्स॒रं दे॒वेभ्यो॑ नि॒लाय॑।
तत्ते॒ न्य॑क्तमि॒ह सं॒भर॑न्तः।
श॒तं जी॑वेम श॒रद॒स्सवी॑राः। ऊ॒र्ज॑ पृ॑थि॒व्या
अध्युत्थि॑तोऽसि। वन॑स्पते श॒तव॑ल्शो॒ विरो॑ह। त्वया॑
व॒यमि॒षमू॒र्जं मद॑न्तः। रा॒यस्पोषे॑ण॒ समि॒षा म॑देम।
गा॒य॒त्रि॒या ह्वि॒यमा॑णस्य॒ यत्ते॑॥5॥
120106
पू॒र्णमप॑तत् तृ॒तीय॑स्यै दि॒वोऽधि॑। सो॑ऽयं पू॒र्णस्सो॑मपू॒र्णाद्धि जा॒तः।
ततो॑ हरामि सोमपी॒थस्याव॑रुद्ध्यै। दे॒वानां॑ ब्रह्मवा॒दं वद॑तां॒ यत्।
उ॒पाशृ॑णोस्सु॒श्रवा॒ वै श्रु॒तो॑ऽसि। त॒तो मामावि॑शतु ब्रह्मवर्च॒सम्।
तथ्सं॒भर॒ स्तदव॑रुन्धीय सा॒क्षात्। यया॑ ते
सृ॒ष्टस्या॒ग्नेः। हे॒तिमश॑मयत्प्र॒जाप॑तिः। तामि॒माम॑प्र॑दाहाय॥6॥
120107
श॒मीः शान्त्यै॑ हराम्य॒हम्।यत्ते॑ सृ॒ष्टस्य॑ य॒तः।
विक॑ङ्कतं॒ भा आ॑र्छज्जातवेदः । तया॑ भा॒सा संमि॑तः।
उ॒रुं नो॑ लो॒कमनु॒ प्रभा॑हि। यत्ते॑ ता॒न्तस्य॒
हृद॑य॒माच्छि॑न्दज्जातवेदः। म॒रुतो॒ऽद्भिस्त॑मयि॒त्वा।
ए॒तत्ते॒ तद॑श॒नेस्संभ॑रामि। सात्मा॑ अग्ने॒ सहृ॑दयो
भवे॒ह। चित्रि॑यादश्व॒त्थाथ्संभृ॑ता बृह॒त्यः॑॥7॥
120108
शरी॑रम॒भि सस्कृ॑तास्स्थ। प्र॒जाप॑तिना यज्ञमु॒खेन॒
संमि॑ताः। ति॒स्रस्त्रि॒वृद्भि॑र्मिथु॒नाः
प्रजा॑त्यै। अ॒श्व॒त्थाद्ध॑व्यवा॒हाद्धि जा॒ताम्।
अ॒ग्नेस्त॒नूं य॒ज्ञिया॒ः संभ॑रामि। शा॒न्तयो॑निं
शमीग॒र्भम्। अ॒ग्नये॒ प्रज॑नयि॒तवे॑। यो
अ॑श्व॒त्थश्श॑मीग॒र्भः। आ॒रु॒रोह॒ त्वे सचा॑। तं ते॑ हरामि॒ ब्रह्म॑णा॥8॥
120109
य॒ज्ञियैः॑ के॒तुभि॑स्स॒ह। यं त्वा॑ स॒मभ॑रज्जातवेदः। य॒था॒श॒री॒रं
भू॒तेषु॒ न्य॑क्तम्। स संभृ॑तस्सीद शि॒वः प्र॒जाभ्यः॑।

उ॒रुं नो॑ लो॒कमनु॑नेषि वि॒द्वान्। प्रवे॒धसे॑ क॒वये॒ मेध्या॑य। वचो॑ व॒न्दारु॑
वृष॒भाय॒ वृष्णे॑। यतो॑ भ॒यमभ॑यं॒ तन्नो॑ अस्तु।
अव॑ दे॒वान् य॑जे॒हेड्या॑न्। स॒मिधा॒ऽग्निं दु॑वस्यत।।9।।
120110
घृतैर्बो॑धय॒ताति॑थिम्। आऽस्मि॑न् ह॒व्या जु॑होतन।
उप॑ त्वाऽग्ने ह॒विष्म॑तीः। घृ॒ताचीर्॑यन्तु हर्यत। जु॒षस्व॑
स॒मिधो॒ मम॑। तं त्वा॑ स॒मिद्भि॑रङ्गिरः।
घृ॒तेन॑ वर्धयामसि। बृ॒हच्छो॑चा यविष्ठ्य। स॒मि॒ध्यमा॑नः
प्र॒थ॒मो नु धर्मः॑। सम॒क्तुभि॑रज्यते वि॒श्ववा॑रः।।10।।
120111
शो॒चिष्के॑शो घृतनि॑र्णिक्पाव॒कः। सु॒य॒ज्ञो अ॒ग्निर्य॒जथा॑य
दे॒वान्। घृ॒तप्र॑तीको घृ॒तयो॑निर॒ग्निः। घृ॒तैस्समि॑द्धो
घृ॒तम॒स्यान्नं॑म्। घृ॒त॒प्रु॒ष॑स्त्वा स॒रितो॑ वहन्ति।
घृ॒तं पिब॑न्थ्सु॒यजा॑ यक्षि दे॒वान्। आ॒यु॒र्दा अ॑ग्ने
ह॒विषो॑ जु॒षा॒णः। घृ॒तप्र॑तीको घृ॒तयो॑निरेधि।
घृ॒तं पी॒त्वा मधु॒ चारु॒ गव्यं॑म्। पि॒तेव॑
पु॒त्रम॒भिर॑क्षतादि॒मम्।।11।।
120112
त्वाम॑ग्नेसमिधा॒नं य॑विष्ठ। दे॒वा दू॒तं च॑क्रिरे हव्य॒वाहं॑म्।
उ॒रु॒ज्रय॑सं घृ॒तयो॑नि॒माहु॑तम्।
त्वे॒षं चक्षु॑र्दधिरे चोद॒यन्व॑ति। त्वाम॑ग्ने प्र॒दिव॒
आहु॑तं घृ॒तेन॑। सु॒म्ना॒यव॑स्सुष॒मिधा॒ समी॑धिरे।
स वा॑वृधा॒न ओष॑धीभिरु॒क्षि॒तः। उ॒रु ज्रयाँ॑सि॒
पार्थि॑वा॒ विति॑ष्ठसे। घृ॒तप्र॑तीकं व ऋ॒तस्य॑
धू॒र्षदं॑म्। अ॒ग्निं मि॒त्रं न स॑मिधा॒न ऋ॑ञ्जते।।12।।
120113
इन्धा॑नो अ॒क्रो वि॒दथे॑षु दीद्य॑त्।
शु॒क्रव॑र्णा॒ मुदु॑ नो यꣳसते॒ धियं॑म्। प्र॒जा अ॑ग्ने॒ संवा॑सय।
अशाँ॑श्च प॒शुभि॑स्स॒ह। रा॒ष्ट्राण्य॑स्मा॒ आधे॑हि।
यान्यासं॑न्थ्सवि॒तुस्स॒वे। म॒ही वि॒श्पत्नी॒ सद॑ने ऋ॒तस्य॑। अ॒र्वाची॒ एतं॑ धरुणे
र॒यी॒णाम्। अ॒न्तर्व॑त्नी॒ जन्यं॑ जा॒तवे॑दसम्। अ॒ध्व॒राणां॑ जनयथꣳ पु॒रोगाम्।।13।।

120114
आरोहतं दुशतं शक्वरीर्मम।
ऋतेनाग्न आयुषा वर्चसा सह।
ज्योग्जीवन्त उत्तरामुत्तरां समाम्।
दर्शमहं पूर्णमासं यज्ञं यथा यजै। ऋत्वियवती स्थो
अग्निरेतसौ। गर्भं दधाथां ते वामहं ददे। तथ्सत्यं
यद्वीरं बिभृथः। वीरं जनयिष्यथः।
तेमत्प्रातः प्रजनिष्येथे। ते मा प्रजाते
प्रजनयिष्यथः।।14।।
120115
प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके।
अनृताथ्सत्यमुपैमि। मानुषाद्दैव्यमुपैमि। दैवीं
वाचं यच्छामि। शल्कैरग्निमिन्धानः। उभौ लोकौ सनेमहम्।
उभयोर्लोकयोर् ऋध्वा। अतिमृत्युं तराम्यहम्।
जातवेदो भुवनस्य रेतः। इह सिञ्च तपसो
यज्जनिष्यते।।15।।
120116
अग्निमश्वत्थादधि हव्यवाहम्।
शमीगर्भाज्जनयन् यो मयोभूः। अयं ते योनिर्
ऋत्वियः। यतो जातो अरोचथाः। तं
जानन्नग्न आरोह। अथा नो वर्धया रयिम्।
अपेत वीत वि च सर्पतातः। येऽत्र स्थ पुराणा
ये च नूतनाः। अदादिदं यमोऽवसानं पृथिव्याः।
अक्रन्निमं पितरो लोकमस्मै।।16।।
120117
अग्नेर्भस्मास्यग्नेः पुरीषमसि।
संज्ञानमसि कामधरणम्।
मयि ते कामधरणं भूयात्। संवस्सृजामि हृदयानि।
सꣳसृष्टं मनो अस्तु वः। सꣳसृष्टः प्राणो अस्तु वः।
सं या वः प्रियास्तनुवः। सं प्रिया हृदयानि वः।
आत्मा वो अस्तु संप्रियः। संप्रियास्तनुवो मम।।17।।

120118
कल्पे॑तां द्यावा॑पृथि॒वी। कल्प॑न्ता॒माप॒ ओष॑धीः।
कल्प॑न्ताम॒ग्नय॒ः पृथ॑क्। मम॒ ज्यैष्ठ्या॑य॒ सव्र॑ताः।
ये᳚ऽग्नय॒स्सम॑नसः। अ॒न्त॒रा द्यावा॑पृथि॒वी।
वास॑न्तिकावृ॒तू अ॒भि कल्प॑मानाः। इन्द्र॑मिव दे॒वा अ॒भि सं वि॑शन्तु।
दि॒वस्त्वा॑ वी॒र्ये॑ण। पृ॒थि॒व्यै म॑हि॒म्ना।।18।।
120119
अ॒न्तरि॑क्षस्य॒ पोषे॑ण। स॒र्वप॑शु॒माद॑धे।
अजी॑जनन्न॒मृतं॒ मर्त्या॑सः। अ॒स्रे॒माणं॑ त॒रणिं॑ वी॒डुज॑म्भम्। दश॒
स्वसा॑रो अ॒ग्रुव॑स्समी॒चीः।
पुमा॑ꣳसं जा॒तम॒भि सꣳर॑भन्ताम्। प्र॒जाप॑तेस्त्वा
प्रा॒णेना॒भि प्रा॑णिमि। पू॒ष्णः पोषे॑ण॒ मह्य᳚म्।
दी॒र्घा॒यु॒त्वाय॑ श॒तशा॑रदाय। श॒तꣳ श॒रद्भ्य॒ आयु॑षे॒ वर्च॑से।।19।।
120120
जी॒वात्वै॑ पुण्या॑य। अ॒हंत्वद॑स्मि॒ मद॑सि॒ त्वमे॒तत्। ममा॑सि॒
योनि॒स्तव॒ योनि॑रस्मि। ममै॒व सन्वह॑ ह॒व्यान्य॑ग्ने।
पु॒त्रः पि॒त्रे लो॑क॒कृज्जा॑तवेदः। प्रा॒णे त्वा॒ऽमृत॒माद॑धामि।
अ॒न्ना॒दम॒न्नाद्या॑य। गो॒प्तारं॒ गुप्त्यै᳚।
सु॒गा॒र्॒ह॒प॒त्यो वि॒दह॒न्नरा॑तीः।
उ॒षस॒श्श्रेय॑सीश्श्रेयसी॒र्दध॑त्।।20।।
120121
अग्ने॑ स॒पत्ना॑ꣳ अप॒ बाध॑मानः।
रा॒यस्पोष॒मिष॒मूर्ज॑म॒स्मासु॑ धेहि। इ॒मा उ॒ मामुप॑
तिष्ठन्तु॒ राय॑ः। आ॒भिः प्र॒जाभि॑रि॒ह संव॑सेय। इ॒हो इ
डा॑ तिष्ठतु विश्वरू॒पी। मध्ये॒ वसो᳚र्दीदिहि जातवेदः। ओज॑से॒ बला॑य॒
त्वोद्य॑च्छे। वृष॑णे॒ शुष्मा॒यायु॑षे॒ वर्च॑से। स॒प॒त्न॒तूर॑सि वृत्र॒तूः।
यस्ते॑दे॒वेषु॑ महि॒मा सु॑व॒र्गः।।21।।
120122
यस्त॑ आ॒त्मा प॒शुषु॒ प्रवि॑ष्टः।
पुष्टि॒र्या ते॑ मनु॒ष्ये॑षु पप्र॒थे। तया॑ नो अग्ने
जुष॑मा॒ण॒ एहि॑। दि॒वः पृ॑थि॒व्याः पर्य॒न्तरि॑क्षात्।

वातात्पशुभ्यो अध्योषधीभ्यः। यत्र यत्र जातवेद
स्संबभूथ। ततो नो अग्ने जुषमाण एहि ।
प्राचीमनु प्रदिशं प्रेहि विद्वान्। अग्नेरग्ने पुरो
अग्निर्भवेह। विश्वा आशा दीद्यानो वि भाहि ।।22।।
120123
ऊर्जं नो धेहि द्विपदे चतुष्पदे।
अन्वग्निरुषसामग्रमख्यत्। अन्वहानि प्रथमो
जातवेदाः। अनु सूर्यस्य पुरुत्रा च रश्मीन्। अनु
द्यावापृथिवी आततान। विक्रमस्व महाꣳ असि।
वेदिषन्मानुषेभ्यः। त्रिषु लोकेषु जागृहि।
यदिदं दिवो यददः पृथिव्याः। संविदाने
रोदसी सं बभूवतुः।।23।।
120124
तयोः पृष्ठे सीदतु जातवेदाः। शंभूः प्रजाभ्य
स्तनुवे स्योनः । प्राणं
त्वाऽमृत आ दधामि। अन्नादमन्नाद्याय। गोप्तारं
गुप्त्यै। यत्ते शुक्र शुक्रं वर्चश्शुक्रा तनूः।
शुक्रं ज्योतिरजस्रम्। तेन मे दीदिहि तेन
त्वाऽऽदधे। अग्निनाऽग्ने ब्रह्मणा।आनशे व्यानशे
सर्वमायुर्व्यानशे।।24।।
120125
नर्यं प्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणां च।
अमृते सत्ये प्रतिष्ठिताम्। अथर्व पितुं मे गोपाय । रसमन्नमिहायुषे।
अदब्धायोऽशीततनो। अविषन्नः पितुं कृणु। शꣳस्यं पशून्मे गोपाय।
द्विपादो ये चतुष्पदः।।25।।
120126
अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगाः। सप्रथ
सभां मे गोपाय। ये च सभ्यास्सभासदः। तानिन्द्रियावतः कुरु।
सर्वमायुरुपासताम्। अहे बुध्निय मन्त्रं
मे गोपाय। यमृषयस्त्रैविदा विदुः।
ऋचस्सामानि यजूꣳषि। सा हि श्रीरमृता सताम्।।26।।

120127
चतु॑श्शिखण्डायुव॒तिस्सु॒पेशा॑ः।
घृतप्र॑तीका॒ भुव॑नस्य॒ मध्ये॑।
म॒र्मृज्यमा॑ना मह॒ते सौभ॑गाय। मह्यं॑ धुक्ष्व॒
यज॑मानाय॒ कामान्॑। इ॒हैव सन्तत्र॑ स॒तो
वो॑ अग्नयः। प्रा॒णेन॑ वा॒चा मन॑सा बिभर्मि।
ति॒रो मा॒ सन्त॒मायु॒र्मा प्रहा॑सीत्। ज्योति॑षा वो
वैश्वान॒रेणोप॑तिष्ठे। प॒ञ्चधाऽग्नीन्व्य॑क्रामत्। वि॒राट्थ्सृ॒ष्टा प्र॒जाप॑तेः।
ऊ॒र्ध्वाऽऽरो॑हद्रोहि॒णी । योनि॑र॒ग्नेः प्रति॑ष्ठितिः।।27।।
120100
वि॒श॒न्तु॒ न॒ः पु॒रू॒चीर्वि॑धेम नि॒धाय॒
यत्तेऽप्र॑दाहाय बृह॒त्यो॑ ब्रह्म॑णा
दुवस्यत वि॒श्ववा॑र इ॒मम॑ञ्जते पु॒रो॒गां प्रज॑नयि॒ष्यथो॑
जनि॒ष्यते॑ऽस्मै॒ मम॑ महि॒म्ना वर्च॑से॒ दध॑थ्सुव॒र्गो भा॑हि
संबभूवतु॒रायु॒र्व्या॑नशे॒ चतु॑ष्सदस्स॒तां प्र॒जाप॑ते॒र्द्वे च॑ ।।1।।
120201
नवै॒तान्यहा॑नि भवन्ति। नव॒ वै सु॑व॒र्गा लो॒काः।
यदे॒तान्यहा॑न्युप॒यन्ति॑। न॒वस्वे॒व तथ्सु॑व॒र्गेषु॑
लो॒केषु॑ स॒त्रिण॑ः प्रति॒तिष्ठ॑न्तो यन्ति।
अ॒ग्नि॒ष्टो॒माः पर॑स्सामानः का॒र्या॑ इत्या॑हुः।
अ॒ग्नि॒ष्टो॒मसं॑मितस्सुव॒र्गो लो॒क
इति॑। द्वाद॑शाग्निष्टो॒मस्य॑ स्तो॒त्राणि॑। द्वाद॑श॒
मासा॑स्संवथ्स॒रः। तत्तन्न सू॒क्ष्र्य॑म्।
उ॒क्थ्या॑ ए॒व स॑प्तद॒शाः पर॑स्सामानः का॒र्या॑ः।।28।।
120202
प॒शवो॒ वा उ॒क्थानि॑। प॒शू॒नामव॑रुद्ध्यै।
वि॒श्व॒जि॒द॒भि॒जिता॑वग्निष्टो॒मौ।
उ॒क्थ्या॑स्सप्तद॒शाः पर॑स्समानः। ते सस्तु॑ता
वि॒राज॑म॒भि संप॑द्यन्ते। द्वे च॒र्चाव॒ति॑रिच्येते।
एक॑या॒ गौरति॑रिक्तः। एक॒याऽऽयु॑रू॒नः।
सु॒व॒र्गो वै लो॒को ज्योति॑ः। ऊर्ग्वि॒राट्।।29।।

120203
सुवर्गमेव तेन लोकमभि जयन्ति। यत्परः
राथन्तरम्। तत्प्रथमेऽहन्कार्यम्।
बृहद्द्वितीये। वैरूपं तृतीये। वैराजं चतुर्थे।
शाक्करं पञ्चमे। रैवतः षष्ठे। तदु पृष्ठेभ्यो
नयन्ति। सन्तनय एते ग्रहा गृह्यन्ते।।30।।
120204
अतिग्राह्याः परस्सामसु। इमानेवैतैर्लोकान्थ्सं
तन्वन्ति। मिथुना एते ग्रहा गृह्यन्ते।
अतिग्राह्याःपरस्सामसु। मिथुनमेव तैर्यजमाना अवरुन्धते।
बृहत्पृष्ठं भवति। बृहद्वै
सुवर्गो लोकः। बृहतैव सुवर्गं लोकं यन्ति।
त्रयस्त्रिःशिनाम साम। माध्यन्दिने पवमाने भवति।।31।।
120205
त्रयस्त्रिःशद्वै देवताः। देवता
एवावरुन्धते। ये वा इतः पराञ्चः संवथ्सर
मुपयन्ति। नहैनं ते स्वस्ति समश्ञुवते। अथ
येऽमुतोऽर्वाञ्चमुपयन्ति। ते हैन स्वस्ति
समश्ञुवते। एतद्वा अमुतोऽर्वञ्चमुपयन्ति।
यदेवम्। यो ह खलु वाव प्रजापतिः।
स उवेवेन्द्रः । तदु देवेभ्यो नयन्ति।।32।।
120200
कार्या विराङ्गृह्यन्ते पवमाने भवतीन्द्र एकं च ।।2।।
120301
संततिर्वा एते ग्रहाः। यत्परस्सामानः।
विषूवान्दिवाकीर्त्यम्। यथा शालायै पक्षसी।
एवः संवथ्सरस्य पक्षसी। यदेतेन गृह्येरन्न्। विषूची
संवथ्सरस्य पक्षसी व्यवस्त्रःसेयाताम्।
आर्तिमार्छेयुः। यदेते गृह्यन्ते। यथा शालायै पक्षसी मध्यमं
वःशमभि समायच्छति।।33।।
120302

एवꣳ संवथ्सरस्य पक्षसी दिवाकीर्त्यमभि सं तन्वन्ति।
नार्तिमार्छन्ति। एकविꣳशमहर्भवति।
शुक्राग्रा ग्रहा गृह्यन्ते। प्रत्युत्तब्ध्यै
सयत्वाय। सौर्यं एतदहꣳ पशुरालभ्यते। सौर्योऽतिग्राह्यो
गृह्यते। अहरेवरूपेण समर्धयन्ति। अथो अह्न एवैष बलिर्ह्रियते।
सप्तैतदहरतिग्राह्या गृह्यन्ते।।34।।
120303
सप्त वै शीर्षण्याꣳ प्राणाः।
असावादित्यश्शिरꣳ प्रजानाम्। शीर्षन्नेव
प्रजानां प्राणान्दधाति। तस्माध्सप्त
शीर्षन्प्राणाः। इन्द्रो वृत्रꣳ हत्वा। असुरान्पराभाव्य। स
इमाल्लोँकानभ्यजयत्। तस्यासौ लोकोऽनभिजित आसीत्।
तं विश्वकर्मा भूत्वाऽभ्यजयत्। यद्वैश्वकर्मणो गृह्यते ।।35।।
120304
सुवर्गस्य लोकस्याभिजित्यै। प्र वा
एतेऽस्माल्लोकाच्च्यवन्ते। ये वैश्वकर्मणं
गृह्णते। आदित्यश्श्वो गृह्यते। इयं वा अदितिः।
अस्यामेव प्रति तिष्ठन्ति।
अन्योन्यो गृह्यते। विश्वान्येवान्येन कर्माणि
कुर्वाणा यन्ति। अस्यामन्येन प्रति तिष्ठन्ति।
तावाऽपरार्धाथ्संवथ्सरस्यान्योन्यो गृह्येते।
तावुभौ सह महाव्रते गृह्यते। यज्ञस्यैवान्तं
गत्वा। उभयोर्लोकयोꣳ प्रतितिष्ठन्ति।
अर्क्यमुक्थं भवति। अन्नाद्यस्यावरुध्यै।।36।।
120300
समायच्छत्यतिग्राह्या गृह्यन्ते गृह्यते
संवथ्सरस्यान्योन्यो गृह्येते पञ्च च ।।3।।
120401
एकविꣳश एष भवति। एतेन वै देवा
एकविꣳशेन। आदित्यमित उत्तमꣳ सुवर्गं
लोकमारोहयन्। स वा एष इत एकविꣳशः। तस्य दशावस्तादहानि। दश

प॒रस्ता॑त्। स वा ए॒ष
वि॒राज्यु॑भ॒यत॒ः प्रति॑ष्ठितः। वि॒राजि॒ हि वा ए॒ष
उ॑भ॒यत॒ः प्रति॑ष्ठितः। तस्मा॑दन्त॒रेमौ ल॒ोकौ यन्।
सर्वे॑षु सुव॒र्गेषु॑ ल॒ोकेष्व॑भि॒तप॑न्नेति।।37।।
120402
दे॒वा वा आ॑दि॒त्यस्य॑ सुव॒र्गस्य॑ ल॒ोकस्य॑।
परा॑चोऽतिपा॒दाद॑बिभयुः।
तं छन्दो॑भिरदृ॒ꣳह॒न्धृत्यै᳚। दे॒वा वा आ॑दि॒त्यस्य॑
सुव॒र्गस्य॑ ल॒ोकस्य॑। अवा॑चोऽवपा॒दाद॑बिभयुः। तं
प॒ञ्चभी॑ र॒श्मिभि॒रुद॑वयन्।
तस्मा॑देकवि॒ꣳ॒शेऽह॒न्पञ्च॑ दिवाकी॒र्त्या॑नि क्रियन्ते।
र॒श्मयो॒ वै दि॑वाकी॒र्त्या॑नि। ये गा॑य॒त्रे। ते
गा॑य॒त्रीषू॒त्त॑रयो॒ः पव॑मानयोः।।38।।
120403
म॒हादि॑वाकीर्त्य॒ꣳ॒ होतु॒ः पृष्ठम्
। वि॒कु॒र्णं ब्रह्म॑सा॒मम्। भा॒सो᳚ऽग्निष्टो॒मः।
अथै॒ता॒नि॒ परा॑णि। परै॒र्वै दे॒वा आ॑दि॒त्यꣳ सु॑व॒र्गं
ल॒ोकम॑पारयन्। यदपा॑रयन्। तत्परा॑णां पर॒त्वम्। पा॒रय॑न्त्येनं॒ परा॑णि। य
ए॒वं वेद॑। अथै॒ता॒नि॒ स्परा॑णि। स्परै॒र्वै दे॒वा
आ॑दि॒त्यꣳ सु॑व॒र्गं ल॒ोकम॑स्पारयन्। यदस्पा॑रयन् ।
तथ्स्परा॑णाꣳ स्पर॒त्वम्। स्पा॒रय॑न्त्यैन॒
स्परा॑णि। य ए॒वं वेद॑।।39।।
120400
ए॒ति॒ पव॑मानयो॒स्स्परा॑णि॒ पञ्च॑ च ।।4।।
120501
अप्र॑तिष्ठां॒ वा ए॒तेग॑च्छन्ति। येषा॑ꣳ
संवथ्स॒रेऽना॒प्तेऽथ॑। एका॒द॒शिन्या॒प्यते᳚।
वै॒ष्ण॒वं वा॑म॒नमाल॑भन्ते। य॒ज्ञो वै विष्णु॑ः ।
य॒ज्ञमे॒वाल॑भन्ते॒ प्रति॑ष्ठित्यै। ऐ॒न्द्रा॒ग्नमाल॑भन्ते। इ॒न्द्रा॒ग्नी वै
दे॒वाना॒मया॑तयामानौ। ये ए॒व दे॒वते॒ अया॑तयाम्नी। ते ए॒वाल॑भन्ते।।40।।
120502

वै॒श्व॒दे॒वमाल॑भन्ते। दे॒वता॑ ए॒वाव॑रुन्धते। द्या॒वा॒पृ॒थि॒व्यां॑

धे॒नुमाल॑भन्ते । द्यावा॑पृथि॒व्योरे॒व प्रति॑ तिष्ठन्ति।

वा॒य॒व्यं॑ व॒थ्समाल॑भन्ते। वा॒यु॒रे॒वैभ्यो॑ यथाऽऽय॒त॒नाद्दे॒व॒ता॒

अव॑रुन्धे। आ॒दि॒त्यामवि॑ं व॒शामाल॑भन्ते। इ॒यं वा

अदि॑तिः। अ॒स्यामे॒व प्रति॑ तिष्ठन्ति। मै॒त्रा॒व॒रु॒णीमाल॑भन्ते।।41।।

120503

मि॒त्रेणै॒व य॒ज्ञस्य॒ स्वि॑ष्टꣳ शमयन्ति।

वरु॑णेन॒ दुरि॑ष्टम्। प्रा॒जा॒प॒त्यं तू॑प॒रं म॑हाव्र॒त

आल॑भन्ते। प्रा॒ज॒प॒त्यो॑ऽतिग्रा॒ह्यो॑ गृह्यते। अह॑रे॒व

रू॒पेण॒ सम॑र्धयन्ति। अथो॒ अह्न॑ ए॒वैष ब॒लिर्ह्रि॑यते। आ॒ग्ने॒यमाल॑भन्ते॒

प्रति॒ प्रज्ञा॑त्यै। अ॒ज॒पे॒त्वान् वा ए॒ते पू॒र्वै॒र्मासै॒रव॑रुन्धते।

यदे॒ते ग॒व्याꣳ प॒शव॑ आल॒भ्यन्ते॑।उ॒भयै॑षां पश॒ूनामव॑रुद्ध्यै।।42।।

120504

यदति॑रिक्तामेकाद॒शिनी॑मा॒लभे॑रन्

। अप्रि॑यं॒ भ्रातृ॑व्यम॒भ्यति॑रिच्येत।यद्वौद्वौ॑ प॒शू

स॒मस्ये॑युः। कनी॑य॒ आयु॑ꣳ कु॒र्वीरन्। यदे॒ते

ब्राह्म॑णवन्तꣳ प॒शव॑ आल॒भ्यन्ते॑। नाप्रि॑यं॒

भ्रातृ॑व्यम॒भ्य॑ति॒रिच्य॑ते।न कनी॑य॒ आयु॑ꣳ कुर्वते।।43।।

120500

ते ए॒वाल॑भन्ते मैत्रावरु॒णीमाल॑भ॒न्तेऽव॑रुद्ध्यै स॒प्त च॑ ।।5।।

120601

प्र॒जाप॑तिꣳ प्र॒जास्सृ॒ष्ट्वा वृ॒त्तो॑ऽशयत्।

तं दे॒वा भू॒ताना॒ꣳ रसं॒ तेज॑स्सं॒भृत्य॑।

तेनै॑नमभिषज्यन्। म॒हान॑वव॒र्तीति॑। तन्म॑हाव्र॒तस्य॑

महाव्रत॒त्वम्। म॒हद् व्र॒तमिति॑। तन्म॑हाव्र॒तस्य॑

महाव्रत॒त्वम्। म॒ह॒तो व्र॒तमिति॑।

तन्म॑हाव्र॒तस्य॑ महाव्रत॒त्वम्। प॒ञ्च॒वि॒ꣳशस्स्तोमो॑ भवति।।44।।

120602

चतु॑र्विꣳशत्यर्धमासस्संवथ्स॒रः। यद्वा ए॒तस्मि॑न्थ्संवथ्स॒रेऽधि॒ प्राजा॑यत।

तदन्नं॑ पञ्चवि॒ꣳशम॑भवत्। म॒ध्य॒तꣳ क्रि॑यते। म॒ध्य॒तो

ह्यन्न॑मशि॒तं धि॒नोति॑। अथो॑ मध्य॒त ए॒व

प्र॒जाना॒मूर्ग्धी॑यते। अथ॒ यद्वा इ॒दम॑न्त॒तᳵ क्रि॒यते᳚।
तस्मा॑दु॒द॒न्ते प्र॒जास्सम॑धन्ते। अ॒न्त॒तᳵ क्रि॑यते प्र॒जन॑नाय॒ैव।
त्रि॒वृच्छिरो॑ भवति।।45।।
120603
त्रे॒धावि॒हि॒तᳲ हि शिर॑ः। लोम॑ छ॒वीरस्थि॑। परा॑चा
स्तुवन्ति। तस्मा॒त्तथ्स॒दृगे॒व। न मेद्य॒तोऽनु॑ मेद्यति। न
कृश्य॒तोऽनु॑ कृश्यति। प॒ञ्च॒द॒शो᳚ऽन्यᳵ प॒क्षो भ॑वति। स॒प्त॒द॒शो᳚ऽन्यः।
तस्मा॒द्वयाꣳ॑ स्यन्यत॒रम॒र्धम॒भि प॒र्याव॑र्तन्ते।
अ॒न्य॒त॒रतो॒ हि तद्वरी॑यᳵ क्रि॒यते᳚।।46।।
120604
प॒ञ्च॒वि॒ꣳ॒श आ॒त्मा भ॑वति। तस्मा᳚न्मध्य॒तᳵ प॒शवो॒ वरि॑ष्ठाः।
ए॒क॒वि॒ꣳ॒शं पुच्छ᳚म्। द्वि॒पदा॑सु स्तुवन्ति॒
प्रति॑ष्ठित्यै। सर्वे॑ण स॒ह स्तु॑वन्ति।
सर्वे॑ण॒ ह्या᳚त्मना᳚ऽऽत्म॒न्वी। स॒होत्पत॑न्ति।
एकै॑क॒ामुच्छिꣳ॑षन्ति। आ॒त्मन्न् ह्यङ्गा॑नि ब॒द्धानि॑। न वा ए॒तेन॒ सर्व॒ᳵ
पुरु॑षः।।47।।
120605
यदि॒तई॑तो॒ लोमा॑नि द॒तोन॒खान्। प॒रि॒माद॑ᳵ क्रियन्ते। तान्ये॒व तेन॒
प्रत्यु॑प्यन्ते। औदु॑म्बर॒स्तल्पो॑ भवति।
ऊर्ग्वा अन्न॑मुदु॒म्बर॑ः। ऊ॒र्ज ए॒वान्नाद्य॒स्याव॑रुध्यै।
यस्य॑ तल्प॒सद्य॒मन॑भिजित॒ स्यात्। स दे॒वाना॒ꣳ॒
साम्य॑क्षे। त॒ल्प॒सद्य॑म॒भिज॑य॒ानीति॒
तल्प॑मा॒रुह्योद्गा॑येत्। त॒ल्प॒सद्य॑मे॒वाभिज॑यति।।48।।
120606
यस्य॑ तल्प॒सद्य॑म॒भिजि॑त॒ स्यात्।
स दे॒वाना॒ꣳ॒ साम्य॑क्षे। त॒ल्प॒सद्यं॒ मा परा॑जे॒षीति॒
तल्प॑मा॒रुह्योद्गा॑येत्। न त॑ल्प॒सद्यं॒
परा॑जयते। प्रे॒ङ्खे शꣳ॑सति। म॒हो वै प्रे॒ङ्खः। मह॑स ए॒वान्नाद्य॒स्याव॑रुद्ध्यै।
दे॒वा॒सु॒रास्संय॑त्ता आसन्। त आ॑दि॒त्ये व्याय॑च्छन्त। तं दे॒वास्सम॑जयन्।।49।।
120607
ब्रा॒ह्म॒णश्च॑ शू॒द्रश्च॑ चर्मक॒र्ते व्याय॑च्छेते।

दैव्यो वै वर्णो॑ ब्राह्मणः। असुर्य॑श्शूद्रः।

इमे॑ऽराथ्सुरिमे सु॑भूतम॑कृन्नित्य॑न्यतरो

ब्रू॑यात्। इम उ॑द्वासीकारिण॑ इमे दु॑र्भूतम॑क्रन्नित्य॑न्यतरः।

यदेवैषाꣳ॑ सुकृतं या राद्धिः। तद॑न्यतरो॑ऽभिश्री॑णाति। यदेवैषां॑

दुष्कृतं याऽरा॑द्धिः। तद॑न्यतरोऽप॑हन्ति। ब्राह्मणस्सं ज॑यति।

अमुमेवादित्यं भ्रातृ॑व्यस्य संवि॑न्दन्ते।।50।।

120600

भवति भवति क्रियते पुरु॑षो जयत्यजयञ्जयत्येकं॑ च।।6।।

120000

उद्धन्यमा॑नं नवैतानि सन्त॑तिरेकविꣳ॑श

एषोऽप्र॑तिष्ठां प्रजाप॑तिर्वृत्तष्षट्।।6।।

उद्धन्यमा॑नः शोचिष्केशोऽग्ने॑

सपत्ना॑नतिग्राह्या॑ वैश्वदेवमाल॑भन्ते पञ्चाशत्।।50।।

।।उद्धन्यमा॑नꣳ संवि॑दन्ते।।हरिः॑ ओम्।।

प्रथमाष्टके द्वितीयः प्रपाठकस्समाप्तः

130000

हरिः ओम्।।

130101

दे॒वा॒सु॒रास्संय॑त्ता आसन्। ते दे॒वा

वि॑ज॒यमु॑प॒यन्त॑ः। अ॒ग्नीषोम॑योस्तेज॒स्विनी᳚स्त॒नूस्सं

न्य॑दधत। इ॒दमु॑ नो भविष्यति। यदि॑ नो जे॒ष्यन्तीति॑।

तेना॒ग्नीषोमा॒वपा᳚क्रामताम्। ते दे॒वा वि॒जित्य॑। अ॒ग्नीषोमा॒वन्वै᳚च्छन्।

ते᳚ऽग्निमन्व॑विन्दन्नृ॒तुषू॒थ्स॑न्नम्।

तस्य॒ विभ॑क्तीभिस्तेज॒स्विनी᳚स्त॒नूरवा॑रुन्धत।।1।।

130102

ते सोम॒मन्व॑विन्दन्। तम॑घ्नन्।

तस्य॑ यथाऽभि॒ज्ञाय᳚ त॒नूर्व्य॑गृह्णत। ते ग्रहा॑ अभवन्।

तद्ग्रहा॑णां ग्रह॒त्वम्। यस्यै॒वं वि॒दुषो॒ ग्रहा॑ गृ॒ह्यन्ते᳚।

तस्य॒ त्वे॑व गृ॑ही॒ताः। नाना᳚ऽऽग्नेयं पुन॒राधेये॑

कु॒र्यात्। यदना᳚ग्नेयं पुन॒राधेये॑ कु॒र्यात्। व्यृ॑द्धमे॒व तत्।।2।।

130103

अना᳚ग्नेय॒ं वा एतत्क्रि॑यते। यथ्स॒मिध॒स्तनू॒नपा॑तमि॒डो ब॒र्हिर्य॑जति।

उ॒भावा᳚ग्ने॒यावाज्य॑भागौ स्याताम्। अना᳚ज्यभागौ भवत॒

इत्या॑हुः। यदु॒भावा᳚ग्ने॒याव॒न्वञ्चा॒विति॑।

अ॒ग्नये॒ पव॑माना॒योत्त॑रस्स्यात्। यत्पव॑मानाय।

तेनाज्य॑भागः। तेन॑ सौ॒म्यः।

बुध॑न्वत्याग्ने॒यस्याज्य॑भागस्य पुरोऽनु॒वा॒क्या॑ भवति।।3।।

130104

यथा॑ सु॒प्तं बो॒धय॑ति। ता॒दृगे॒व तत्। अ॒ग्निर्न्य॑क्ताः

पत्नीसंया॒जाना॒मृच॑स्स्युः। तेना᳚ग्ने॒यꣳ सर्व॑

भवति। ए॒कु॒धा॒ ते॑ज॒स्विनी᳚

दे॒वता॒मुपै॒तीत्या॑हुः। सैन॑मीश्व॒रा प्र॒दह॒ इति॑।

नेति॑ ब्रूयात् । प्र॒जन॑नं॒ वा अ॒ग्निः। प्र॒जन॑नमे॒वोपै॒तीति॑।

कृ॒तय॑जु॒स्संभृ॑तसंभार॒ इत्या॑हुः।।4।।

130105

न सं॒भृत्या᳚स्संभा॒राः। न यजु॑ः

कार्यमिति। अथो खलु। संभृत्या एव संभाराः।
कार्यं यजुः। पुनराधेयस्य समृद्ध्यै।
तेनोपाꣳशु प्रचरति । एष्य इव वा एषः।
यत्पुनराधेयः। यथोपाꣳशु नष्टमिच्छति।।5।।
130106
तादृगेव तत्। उच्चैस्स्विष्टकृतमुथ्सृजति। यथा
नष्टं वित्वा प्राहायमिति। तादृगेव तत्। एकधा तेजस्विनीं
देवतामुपैतीत्याहुः। सैनमीश्वरा प्रदह इति।
तत्तथा नोपैति। प्रयाजानूयाजेष्व विभक्तीः
कुर्यात्। यथापूर्वमाज्यभागौ स्याताम्। एवं पत्नीसंयाजाः।।6।।
130107
तद्वैश्वानरवत्प्रजननवत्तरमुपैतीति।
तदाहुः । व्यृद्धं वा एतत्। अनाग्नेयं वा
एतत्क्रियत इति। नेति ब्रूयात्। अग्निं प्रथमं
विभक्तीनां यजति। अग्निमुत्तमं पत्नीसंयाजानाम्। तेनाग्नेयम्।
तेन समृद्धं क्रियत इति ।।7।।
130100
अरुन्धतैव तद्भवति संभृतसंभार
इत्याहुरिच्छति पत्नीसंयाजा नव च।।1।।
130201
देवा वै यथादर्शं यज्ञानाहरन्त। योऽग्निष्टोमम् ।
य उक्थ्यम्। योऽतिरात्रम्। ते सहैव सर्वे वाजपेयमपश्यन्। ते।
अन्योन्यस्मै नातिष्ठन्त। अहमनेन यजा इति।
तेऽब्रुवन्। आजिमस्य धावामेति।।8।।
130202
तस्मिन्नाजिमधावन्। तं बृहस्पतिरुदजयत्।
तेनायजत। स स्वाराज्यमगच्छत्। तमिन्द्रोऽब्रवीत्।
मामनेन याजयेति। तेनेन्द्रमयाजयत्।
सोऽग्रं देवतानां पर्यैत् ।
अगच्छथ्स्वाराज्यम्। अतिष्ठन्तास्मै ज्यैष्ठ्याय।।9।।
130203

य ए॒वं वि॒द्वान् वा॑ज॒पेये॑न॒ यज॑ते।
गच्छ॑ति॒ स्वारा᳚ज्यम्। अग्र॑ꣳ समा॒नाना॒ं पर्ये॑ति।
तिष्ठ॑न्तेऽस्मै॒ ज्यैष्ठ्या॑य ।
स वा ए॒ष ब्रा᳚ह्म॒णस्य॑ चै॒व रा॑ज॒न्य॑स्य च य॒ज्ञः।
तं वा ए॒तं वा॑ज॒पेय॒ इत्या॑हुः।
वा॒जाप्यो॒ वा ए॒षः। वाज॒
ह्ये॑तेन॑ दे॒वा ऐप्स॑न्न्। सोमो॒ वै वा॑ज॒पेय॑ः। यो वै
सोम॑ं वाज॒पेय॒ं वेद॑।।10।।
130204
वा॒ज्यै॑वैन॑ं पी॒त्वा भ॑वति। आऽस्य॑ वा॒जी जा॑यते।
अन्न॒ं वै वा॑ज॒पेय॑ः । य ए॒वं वेद॑। अत्यन्न᳚म् ।
आऽस्या᳚न्ना॒दो जा॑यते। ब्रह्म॒ वै वा॑ज॒पेय॑ः। य ए॒वं
वेद॑। अत्ति॒ ब्रह्म॒णाऽन्न᳚म्। आऽस्य॑ ब्र॒ह्मा जा॑यते।।11।।
130205
वाग्वै वाज॑स्य प्रस॒वः । य ए॒वं
वेद॑। कु॒रोति॑ वा॒चा वी॒र्य᳚म्। ऐन॑ं वा॒चा
ग॑च्छति। अपि॑वती॒ं वाच॑ं वदति। प्र॒जाप॑तिर्दे॒वेभ्यो॑
य॒ज्ञान्व्यादि॑शत्। स आ॒त्मन्वा॑ज॒पेय॑मधत्त।
तं दे॒वा अ॑ब्रुवन्। ए॒ष वाव य॒ज्ञः। यद्वा॑ज॒पेय॑ः।।12।।
130206
अप्ये॒व नोऽत्रा॒स्त्विति॑ । तेभ्य॑ ए॒ता उज्जि॑ती॒ः
प्राय॑च्छत्। ता वा ए॒ता उज्जि॑तयो॒ व्याख्या॑यन्ते।
य॒ज्ञस्य॑ सर्व॒त्वाय॑। दे॒वता॑ना॒मनि॑र्भागाय।
दे॒वा वै ब्रह्म॑ण॒श्चान्न॑स्य च॒ शम॑ल॒मपा᳚घ्नन्।
यद्ब्रह्म॑ण॒श्शम॑ल॒मासी᳚त्। सा गाथा॑ नाराश॒स्य॑भवत्।
यदन्न॑स्य। सा सुरा᳚ ।।13।।
130207
तस्मा॒द्गाय॑तश्च म॒त्तस्य॑ च॒ न प्र॑ति॒गृह्य᳚म्। यत्प्र॑तिगृह्णी॒यात्।
शम॑लं॒ प्रति॑गृह्णीयात्। सर्वा॒ वा ए॒तस्य॒
वाचोऽव॑रुद्धाः। यो वा॑जपेयया॒जी। या पृ॑थि॒व्यां याऽग्नौ या र॑थन्त॒रे ।
याऽन्तरि॑क्षे॒ या वा॒यौ या वा॑मदे॒व्ये। या दि॒वि

याऽऽदि॒त्ये या बृ॑ह॒ति । याऽप्सु यौष॑धीषु॒ या
वन॒स्पति॑षु। तस्मा॑द्वाजपेयय॒ाज्यार्त्वि॑जीनः।
सर्व॒ा ह्य॑स्य॒ वाचोऽव॑रुद्धाः।।14।।
130200
धा॒वा॒मेति॒ ज्यैष्ठ्या॑य॒ वेद॑ ब्र॒ह्मा जा॑यते
वाज॒पेय॒स्सुराऽऽर्त्वि॑जीन॒ एकं॑ च।।2।।
130301
दे॒वा वै यद॒न्यैर्ग्रहै॑र्य॒ज्ञस्य॒ नावारु॑न्धत। तद॑ति
ग्रा॒ह्यै॑रति॒गृह्यावा॑रुन्धत। तद॑तिग्र॒ह्या॑णामतिग्रा॒ह्य॒त्वम्।
यद॑तिग्रा॒ह्या॑ गृ॒ह्यन्ते॑। यदे॒वान्यैर्ग्रहै॑र्य॒ज्ञस्य॒ नाव॑रु॒न्धे। तदे॒व
तैर॑ति॒गृह्याव॑रुन्धे। पञ्च॑ गृह्यन्ते। पाङ्क्तो॑ य॒ज्ञः। यावा॑ने॒व य॒ज्ञः।
तमा॒प्त्वाऽव॑रुन्धे।।15।।
130302
सर्वे॑ ऐ॒न्द्रा भ॑वन्ति। ए॒क॒धैव यज॑मान
इन्द्रि॒यं द॑धति। स॒प्तद॑श प्राजाप॒त्या ग्रहा॑ गृह्यन्ते।
स॒प्त॒द॒शः प्र॒जाप॑तिः। प्र॒जाप॑ते॒राप्त्यै॑।
एक॑य॒र्चा गृ॑ह्णाति। ए॒क॒धैव यज॑माने वी॒र्यं॑ दधाति।
सो॒म॒ग्र॒हाꣳश्च॑ सुराग्र॒हाꣳश्च॑ गृह्णाति।
ए॒तद्वै दे॒वाना॑ं पर॒मम॑न्नम्। यथ्सोम॑ः।।16।।
130303
ए॒तन्म॑नु॒ष्या॑णाम्। यथ्सुरा॑। प॒र॒मेणै॒वास्मा॑
अ॒न्नाद्ये॒नाव॑रम॒न्नाद्य॒मव॑रुन्धे।
सो॒म॒ग्र॒हान्गृ॑ह्णाति। ब्रह्म॑णो॒ वा ए॒तत्तेज॑ः।
यथ्सोम॑ः। ब्रह्म॑ण ए॒व तेज॑सा॒ तेजो॒ यज॑माने दधाति।
सु॒रा॒ग्र॒हान्गृ॑ह्णाति। अन्न॑स्य॒ वा ए॒तच्छम॑लम्।
यथ्सुरा॑।।17।।
130304
अन्न॑स्यै॒व शम॑लेन॒ शम॑लं॒ यज॑माना॒दप॑हन्ति। सो॒म॒ग्र॒हाꣳश्च॑ सुराग्र॒हाꣳश्च॑
गृह्णाति। पु॒मा॒न् वै सोम॑ः। स्त्री सुरा॑। तन्मि॑थु॒नम्।
मि॒थु॒नमे॒वास्य॒ तद्य॒ज्ञे क॑रोति प्र॒जन॑नाय। आ॒त्मान॑मे॒व
सो॑मग्र॒हैस्स्पृ॑णोति। जा॒याꣳ सु॑राग्र॒हैः।

तस्माँद्वाजपेययाज्यमुष्मिंल्लोँके स्त्रियँ संभवति।
वाजपेयाभिजित ह्यस्य।।18।।
130305
पूर्वे सोमग्रहा गृह्यन्ते। अपरे सुराग्रहाः।
पुरोऽक्षः सोमग्रहान्थ्सादयति। पश्चादक्षः
सुराग्रहान्। पापवस्यसस्य विधृत्यै। एष
वै यजमानः। यथ्सोमः। अन्नँ सुरा। सोमग्रहाःश्च
सुराग्रहाःश्च व्यतिषजति। अन्नाद्येनैवैनं व्यतिषजति।।19।।
130306
संपृचस्स्थ सं मा भद्रेण पृङ्क्तेत्याह। अन्नं वै भद्रम्।
अन्नाद्येनैवैनँ सःसृजति। अन्नस्य वा
एतच्छमलम्। यथ्सुरा। पाप्मेव खलु वै शमलम्। पाप्मना वा एनमेतच्छमलेन
व्यतिषजति। यथ्सोमग्रहाःश्च सुराग्रहाःश्च व्यतिषजति। विपृचस्स्थ वि मा
पाप्मना पृङ्क्तेत्याह। पाप्मनैवैनँ शमलेन व्यावर्तयति।।20।।
130307
तस्माँद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः। प्राङुद्द्रवति
सोमग्रहैः। अमुमेव तैर्लोकमभिजयति।
प्रत्यङ्ख्सुराग्रहैः। इममेव तैर्लोकमभिजयति।
प्रतिष्ठन्ति सोमग्रहैः। यावदेव सत्यम्। तेन सूयते।
वाजसृद्भ्यस्सुराग्रहान् हरन्ति।
अनृतेनैव विशँ सःसृजति। हिरण्यपात्रं मधोः
पूर्णं ददाति। मधव्योऽसानीति। एकधा ब्रह्मण
उप हरति। एकधैव यजमान आयुस्तेजो दधाति।।21।।
130300
आप्त्वाऽवरुन्धे सोमश्शमलं यथ्सुरा ह्यस्यैनं
व्यतिषजति व्यावर्तयति सृजति चत्वारि च।।3।।
130401
ब्रह्मवादिनो वदन्ति। नाग्निष्टोमो नोक्थ्यः।
न षोडशी नातिरात्रः। अथ कस्माँद्वाजपेये
सर्वे यज्ञक्रतवोऽवरुध्यन्त इति। पशुभिरिति
ब्रूयात्। आग्नेयं पशुमालभते। अग्निष्टोममेव तेनावरुन्धे।

ऐ॒न्द्रा॒ग्नेनो॒क्थ्यँ॑म्। ऐ॒न्द्रेण॑ षो॒ड॒शिन॑स्स्तो॒त्रम्।
सा॒र॒स्व॒त्याऽति॑रा॒त्रम्।।22।।
130402
मा॒रु॒त्याबृ॑ह॒तस्स्तो॒त्रम्। ए॒ताव॑न्तो॒ वै य॑ज्ञक्र॒तव॑ः।
तान्प॒शुभि॑रे॒वाव॑रुन्धे। आ॒त्मान॑मे॒व
स्पृ॑णोत्यग्निष्टो॒मेन॑। प्रा॒णा॒पा॒नावु॒क्थ्ये॑न।
वी॒र्यꣳ॑ षो॒ड॒शिन॑स्स्तो॒त्रेण॑। वाच॑मतिरा॒त्रेण॑।
प्र॒जां बृ॑ह॒तस्स्तो॒त्रेण॑। इ॒ममे॒व
लो॒कम॒भिज॑यत्यग्निष्टो॒मेन॑। अ॒न्तरि॑क्षमु॒क्थ्ये॑न।।23।।
130403
सु॒व॒र्गं॑ लो॒कꣳ षो॑ड॒शिन॑स्स्तो॒त्रेण॑। दे॒व॒याना॑ने॒व प॒थ
आरो॑हत्यतिरा॒त्रेण॑। नाकꣳ॑ रोहति
बृह॒तस्स्तो॒त्रेण॑। तेज॑ ए॒वात्मन्ध॑त्त आग्ने॒येन॑
प॒शुना॑। ओजो॒ बल॑मैन्द्रा॒ग्नेन॑। इ॒न्द्रि॒यमै॒न्द्रेण॑। वाचꣳ॑
सारस्व॒त्या। उ॒भावे॒व दे॑वलो॒कं च॑ मनुष्यलो॒कं चा॒भिज॑यति
मारु॒त्या व॒शया॑। स॒प्तद॑श प्राजाप॒त्यान्प॒शूनाल॑भते।
स॒प्त॒द॒शᳶ प्र॒जाप॑तिः।।24।।
130404
प्र॒जाप॑ते॒राप्त्यै॑। श्या॒मा एक॑रूपा भवन्ति। ए॒वमि॑व॒
हि प्र॒जाप॑ति॒स्समृ॑द्ध्यै। तान्पर्य॑ग्निकृ॒तानुथ्सृ॑जति। म॒रुतो॑
य॒ज्ञम॑जिघाꣳसन्प्र॒जाप॑तेः। तेभ्य॑ ए॒तां मा॑रु॒तीं
व॒शामाल॑भत। तयै॒वैना॑नशमयत्। मा॒रु॒त्या प्र॒चर्य॑।
ए॒तान्थ्संज्ञ॑पयेत्। म॒रुत॑ ए॒व श॑मयि॒त्वा।।25।।
130405
ए॒तैᳶ प्रच॑रति। य॒ज्ञस्याघा॑ताय।
ए॒कु॒धा व॒पा जु॑होति। ए॒कु॒दे॒व॒त्या॑ हि। ए॒ते। अथो॑
ए॒कु॒धैव यज॑माने वी॒र्यं॑ दधाति।
नै॒वा॒रेण॑ स॒प्तद॑शशरावेणै॒तर्हि॒ प्रच॑रति।
ए॒तत्पु॑रोडाशा॒ ह्ये॑ते। अथो॑ पशू॒नामे॒व छि॒द्रमपि॑
दधाति। सा॒र॒स्व॒त्योत्त॒मया॒ प्रच॑रति। वाग्वै सर॑स्वती।
तस्मा॑त्प्रा॒णाना॒ं वागु॑त्त॒मा।

अथो॑ प्र॒जाप॑तावे॒व य॒ज्ञं प्रति॑ष्ठापयति।
प्र॒जाप॑ति॒र् हि वाक्। अप॑न्नदती भवति।
तस्मा॑न्मनु॒ष्या॑स्सर्वा॒व्वाँच॑ वदन्ति।।26।।
130400
अ॒ति॒रा॒त्रम॒न्तरि॑क्षमु॒क्थ्ये॑न
प्र॒जाप॑तिश्शमयि॒त्वोत्त॒मया॒ प्रच॑रति॒ षट् च॑ ।।4।।
130501
सा॒वि॒त्रं जु॑होति॒ कर्म॑णꣳकर्मणꣳ पु॒रस्ता॑त्।
कस्तद्वे॑देत्या॑हुः। यद्वा॑ज॒पेय॑स्य॒ पूर्व॒ यदप॑र॒मिति॑। स॒वि॒तृप्र॑सूत
ए॒व य॑थापू॒र्वं कर्मा॑णि करोति। सव॑नेसवने जुहोति।
आ॒क्रम॑णमे॒व तथ्सेतुं॒ यज॑मानꣳ कुरुते। सु॒व॒र्गस्य॑
लो॒कस्य॒ सम॑ष्ट्यै। वा॒चस्पति॒र्वाच॑म॒द्य
स्व॑दाति न॒ इत्या॑ह। वाग्वै दे॒वानां॑
पु॒राऽन्न॑मासीत्। वाच॑मे॒वास्मा॒ अन्नं॑ स्वदयति।।27।।
130502
इन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्न॒ इति॒
रथ॑मु॒पाव॑हरति॒ विजि॑त्यै।
वाज॑स्य॒ नु प्र॑स॒वे मा॒तरं॑ म॒हीमित्या॑ह। यच्चै॒वेयम्।
यच्चा॒स्यामधि॑। तदे॒वाव॑रुन्धे। अथो॒ तस्मि॑न्ने॒वोभये॒ऽभिषि॑च्यते।
अ॒फ्स्वन्तर॒मृत॑म॒फ्सुभे॑ष॒जमित्यश्वा॑न्पल्पूलयति। अ॒फ्सु वा अश्व॑स्य॒
तृती॑यं॒ प्रवि॑ष्टम्। तद॑नु॒वेन॒न्वव॑प्लवते। यद॒फ्सु प॑ल्पू॒लय॑ति।।28।।
130503
यदे॒वास्या॒फ्सु प्रवि॑ष्टम्। तदे॒वाव॑रुन्धे। ब॒हु वा अश्वो॑
मे॒ध्यमुप॑गच्छति। यद॒फ्सु प॑ल्पू॒लय॑ति। मेध्या॑ने॒वैना॑न्करोति। वा॒युर्वा॑
त्वा॒ मनु॑र्वा॒ त्वेत्या॑ह। ए॒ता वा ए॒तं दे॒वता॒ अग्रे॒ अश्व॑मयुञ्जन्।
ताभि॑रे॒वैनान्॑ युनक्ति। स॒वस्योज्जि॑त्यै। यजु॑षा युनक्ति॒ व्यावृ॑त्त्यै।।29।।
130504
अपां॑नपादाशुहेम॒न्निति॒ संमा॑र्ष्टि। मेध्या॑ने॒वैना॑न्करोति। अथो॒
स्तौत्ये॒वैना॑ना॒जिꣳ स॑रिष्य॒तः। वि॒ष्णुक्र॒मान्क्र॑मते। विष्णु॑रे॒व
भू॒त्वेमाल्लो॒ँकान॒भिज॑यति। वै॒श्व॒दे॒वो वै
रथः॑। अ॒ङ्कौ न्य॒ङ्कावभि॒तो रथ॒ं यावित्या॑ह। या ए॒व

दे॒वता॒ रथे॒ प्रवि॑ष्टाः। ताभ्य॑ ए॒व नम॑स्करोति। आ॒त्मनोऽना᳚र्त्यै। अश॑मरथं
भावु॒कोऽस्य॒ रथो॑ भवति। य ए॒वं वेद॑ ।।30।।
130500
स्व॒द॒य॒ति॒ प॒ल्पूल॑यति॒ व्यावृ॑त्त्या॒ अना᳚र्त्यै॒ द्वे च॑ ।।5।।
130601
दे॒वस्या॒हꣳ स॑वि॒तुः॒ प्र॑स॒वे बृह॒स्पति॑ना वाज॒जिता॒
वा॑जं जेष॒मित्या॑ह। स॒वि॒तृप्र॑सूत ए॒व ब्रह्म॑णा॒ वाज॒मुज्ज॑यति।
दे॒वस्या॒हꣳ स॑वि॒तुः॒ प्र॑स॒वे बृह॒स्पति॑ना वाज॒जिता॒ वर्‌षि॑ष्ठं॒
नाकꣳ॑ रुहेय॒मित्या॑ह। स॒वि॒तृप्र॑सूत ए॒व ब्रह्म॑णा॒ वर्‌षि॑ष्ठं॒ नाकꣳ॑ रोहति।
चात्वा॑ले रथच॒क्रं निमि॑तꣳ रोहति। अतो॒ वा अङ्गि॑रस
उत्त॒मास्सु॑व॒र्गं लो॒कमा॑यन्। सा॒क्षादे॒व यज॑मानस्सुव॒र्गं लो॒कमे॑ति। आवे᳚ष्टयति।
वज्रो॒ वै रथ॑ः। वज्रे॑णै॒व दिशो॒ऽभिज॑यति ।।31।।
130602
वा॒जिना॒ꣳ साम॑ गायते। अन्नं॒ वै वाज॑ः।
अन्न॑मे॒वाव॑रुन्धे। वा॒चो वर्ष्म॑ दे॒वेभ्योऽपा᳚क्रामत्।
तद्वन॒स्पती॒न्प्रावि॑शत्। सैषा वाग्वन॒स्पति॑षु
वदति। या दु॑न्दु॒भौ। तस्मा᳚द्दुन्दु॒भिस्सर्वा॒ वाचोऽति॑
वदति। दु॒न्दु॒भीन्थ्स॒माघ्न॑न्ति। प॒र॒मा वा ए॒षा वाक्।।32।।
130603
या दु॑न्दु॒भौ। प॒र॒मयै॒व वा॒चाऽव॑रां॒ वाच॒मव॑रुन्धे।
अथो॑ वा॒च ए॒व वर्ष्म॒ यज॑मा॒नोऽव॑रुन्धे। इन्द्रा॑य॒
वाचं॑वद॒तेन्द्रं॒ वाजं॑ जापय॒तेन्द्रो॒ वाज॑मजयि॒दित्या॑ह। ए॒ष वा
ए॒तर्‌हीन्द्र॑ः। यो यज॑ते। यज॑मान ए॒व वाज॒मुज्ज॑यति। स॒प्तद॑श प्रव्या॒धाना॒जिं
धा॑वन्ति। स॒प्त॒द॒श स्तो॒त्रं भ॑वति। स॒प्तद॑श सप्तदश दीयन्ते।।33।।
130604
स॒प्त॒द॒शः॒ प्र॒जाप॑तिः। प्र॒जाप॑ते॒राप्त्यै॑। अर्वा॑ऽसि॒ सप्ति॑रसि
वा॒ज्य॑सीत्या॑ह। आ॒ग्निर्वा अर्वा᳚।
वा॒युस्सप्ति॑ः। आ॒दि॒त्यो वा॒जी। ए॒ताभि॑रे॒वास्मै॑
दे॒वता॑भिर्दे॒वर॒थं यु॑नक्ति।
प्र॒ष्टि॒वा॒हिनं॑ युनक्ति। प्र॒ष्टि॒वा॒ही वै दे॑वर॒थः।
दे॒व॒र॒थमे॒वास्मै॑ युनक्ति ।।34।।

130605
वाजिनो वाजं धावत काष्ठां गच्छतेत्याह। सुवर्गो वै लोकः
काष्ठां। सुवर्गमेव लोकं यन्ति। सुवर्गं वा एते
लोकं यन्ति। य आजिं धावन्ति। प्राञ्चो धावन्ति।
प्राङिव हि सुवर्गो लोकः। चतसृभिरनु मन्त्रयते । चत्वारि छन्दाꣳसि।
छन्दोभिरेवैनान्थ्सुवर्गं लोकं गमयति।।35।।
130606
प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । य
आजिं धावन्ति। उदञ्च आवर्तन्ते। अस्मादेव तेन लोकान्नयन्ति।
रथविमोचनीयं जुहोति प्रतिष्ठित्यै। आ मा वाजस्य प्रसवो
जगम्यादित्याह। अन्नं वै वाजः।
अन्नमेवावरुन्धे। यथालोकं वा एत उज्जयन्ति। य आजिं धावन्ति।।36।।
130607
कृष्णलंकृष्णलं वाजसृद्भ्यः प्रयच्छति। यमेव ते
वाजं लोकमुज्जयन्ति। तं परिक्रीयावरुन्धे। एकधा
ब्रह्मण उपहरति। एकधैव यजमाने वीर्यं दधाति। देवा वा
ओषधीष्वाजिमयुः। ता बृहस्पतिरुदजयत्। स नीवारान्निरवृणीत।
तन्नीवाराणां नीवारत्वम्। नैवारश्चरुर्भवति।।37।।
130608
एतद्वै देवानां परममन्नम्। यन्नीवाराः।
परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे।
सप्तदशशरावो भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै। क्षीरे
भवति । रुचमेवास्मिन्दधाति। सर्पिष्वान्भवति मेध्यत्वाय। बार्हस्पत्यो वा
एष देवतया।।38।। यो
130609
वाजपेयेन यजते। बार्हस्पत्य एष चरुः।
अश्वान्थ्सरिष्यतस्सस्रुषश्चाव घ्रापयति। यमेव ते
वाजं लोकमुज्जयन्ति। तमेवावरुन्धे। अजीजिपत वनस्पतय
इन्द्रं वाजं विमुच्यध्वमिति दुन्दुभीन् विमुञ्चति। यमेव ते वाजं
लोकमिन्द्रियं दुन्दुभय उज्जयन्ति। तमेवावरुन्धे।।39।।
130600

अ॒भिज॑यति॒ वा ए॒षा वाग्दी॑यन्तेऽस्मै युनक्ति गमयति॒ य
आ॒जिं धाव॑न्ति भवति दे॒वत॑या॒ऽष्टौ च॑ ।।6।।
130701
ता॒र्प्यं यज॑मानं॒ परि॑धापयति। य॒ज्ञो वै ता॒र्प्यम्।
य॒ज्ञेनै॒वैन॒ꣳ सम॑र्धयति। द॒र्भ॒मयं॒ परि॑धापयति। प॒वित्रं॒ वै द॒र्भाः।
पु॒नात्ये॒वैन॑म्। वाजं॒ वा ए॒षोऽव॑रुरुथ्सते। यो वा॑ज॒पये॑न॒ यज॑ते।
ओष॑धय॒ꣳ खलु॒ वै वाज॑ः। यद्द॑र्भ॒मयं॑ परिधा॒पय॑ति।।40।।
130702
वाज॒स्याव॑रुद्ध्यै। जाय॒ एहि॒ सुवो॒ रोहा॒वेत्या॑ह। पत्नि॑या ए॒वैष य॒ज्ञस्या॑न्वा
र॒म्भोऽन॑वच्छित्त्यै। स॒प्तद॑शारत्नि॒र्यूपो॑ भवति। स॒प्त॒द॒शꣳ प्र॒जाप॑तिः ।
प्र॒जाप॑ते॒राप्त्यै॑। तू॒प॒रश्चतु॒॑रश्रिर्भवति। गौ॒धू॒मं च॒षाल॑म्। न वा ए॒ते
व्री॒हयो॒ न यवा॑ः। यद्गो॒धूमा॑ः।।41।।
130703
ए॒वमि॑व॒ हि प्र॒जाप॑ति॒स्समृ॑द्ध्यै। अथो॑ अ॒मुमे॒वास्मै॑
लो॒कमन्न॑वन्तं करोति। वासो॑भिर्वेष्टयति। ए॒ष वै यज॑मानः। यद्यूप॑ः ।
स॒र्व॒दे॒व॒त्यं॑ वास॑ः। सर्वा॑भिरे॒वैनं॑ दे॒वता॑भि॒स्सम॑र्धयति। अथो॑
आ॒क्रम॑णमे॒व तथ्सेतुं॒ यज॑मानꣳ कुरुते। सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै।
द्वाद॑श वाजप्रस॒वीया॑नि जुहोति।।42।।
130704
द्वाद॑श॒ मासा॑स्संवथ्स॒रः। सं॒व॒थ्स॒रमे॒व प्री॑णाति। अथो॑
संवथ्स॒रमे॒वास्मा॒ उप॑दधाति। सु॒व॒र्गस्य॑ लो॒कस्य॒
सम॑ष्ट्यै। द॒शभि॒ꣳ कल्पै॑रोहति। नव॒ वै पुरु॑षे प्रा॒णाः।
नाभि॑र्दश॒मी। प्रा॒णाने॒व य॑थास्था॒नं
क॑ल्पयि॒त्वा। सु॒व॒र्गं लो॒कमे॑ति। ए॒ताव॒द्वै पुरु॑षस्य॒ स्वम्।।43।।
130705
याव॑त्प्रा॒णाः। याव॑दे॒वास्यास्ति॑। तेन॑ स॒ह सु॑व॒र्गं
लो॒कमे॑ति। सुव॑र्दे॒वाꣳ अ॑ग॒न्मेत्या॑ह। सु॒व॒र्गमे॒व लो॒कमे॑ति। अ॒मृता॑
अभू॒मेत्या॑ह। अ॒मृत॑मिव॒ हि सु॑व॒र्गो लो॒कः। प्र॒जाप॑तेꣳ
प्र॒जा अ॑भू॒मेत्या॑ह। प्रा॒जा॒प॒त्यो वा अ॒यं लो॒कः। अ॒स्मादे॒व तेन॑
लो॒कान्नैति॑ ।।44।।
130706

सम॒हंप्र॒जया॒ सं मया॑ प्र॒जेत्या॑ह। आ॒शिष॑मे॒वैतामाशा॑स्ते।
आ॒स॒पु॒टैर्घ्नन्ति। अन्न॒ं वा इ॒यम्। अ॒न्नाद्ये॑नै॒वैन॒ँ सम॑र्धयन्ति।
ऊषै॑र्घ्नन्ति। ए॒ते हि सा॒क्षादन्न॑म्। यदूषा॑ः।
सा॒क्षादे॒वैन॑म॒न्नाद्ये॑न॒ सम॑र्धयन्ति। पु॒रस्ता॑त्प्र॒त्यञ्च॑ं घ्नन्ति ।।45।।
130707
पु॒रस्ता॒द्धि प्र॑ती॒चीन॒मन्न॑म॒द्यते॑। शी॒र्॒ष॒तो घ्न॑न्ति।
शी॒र्॒ष॒तो ह्यन्न॑म॒द्यते॑। दि॒ग्भ्यो घ्न॑न्ति। दि॒ग्भ्य
ए॒वास्मा॑ अ॒न्नाद्य॒मव॑रुन्धते। ई॒श्व॒रो वा ए॒ष
परा॑ङ्प्र॒दघ॑ः। यो यू॒प॒ँ रोह॑ति। हिर॑ण्यम॒ध्यव॑रोहति। अ॒मृत॒ं वै
हिर॑ण्यम्। अ॒मृत॒ँ सु॒व॒र्गो लो॒कः।।46।।
130708
अ॒मृत॑ ए॒व सु॑व॒र्गे लो॒के प्रति॑तिष्ठति। श॒तमा॑नं भवति।
श॒तायु॒ः पुरु॑षश्श॒तेन्द्रि॑यः। आयु॑ष्ये॒वेन्द्रि॒ये
प्रति॑ तिष्ठति। पुष्ट्यै॒ वा ए॒तद्रू॒पम्। यद॒जा। त्रिस्सं॑वथ्स॒रस्या॒न्यान्प॒
शून्परि॒ प्रजा॑यते। ब॒स्ता॒जि॒नम॒ध्यव॑ रोहति। पुष्ट्या॑मे॒व प्र॒जन॑ने॒
प्रति॑तिष्ठति।।47।।
130700
प॒रि॒धा॒पय॑ति गो॒धूमा॑ जुहोति॒ स्वं नैति॑ प्र॒त्यञ्च॑ं घ्नन्ति लो॒को नव॑ च।।7।।
130801
स॒प्तान्न॑हो॒माञ्जु॑होति।स॒प्त वा अन्ना॑नि।
याव॑न्त्ये॒वान्ना॑नि। तान्ये॒वाव॑रुन्धे ।
स॒प्त ग्रा॒म्या ओष॑धयः। स॒प्ता॒र॒ण्याः।
उ॒भयी॑षा॒मव॑रुद्ध्यै। अन्न॑स्यान्नस्य
जुहोति। अन्न॑स्या॒न्न॒स्याव॑रुद्ध्यै।
यद्वा॑जपेयया॒ज्यन॑वरुद्धस्याश्नी॒यात्।।48।।
130802
अव॑रुद्धे॒न व्यृ॑द्ध्येत। सर्व॑स्य समव॒दाय॑ जुहोति। अन॑वरुद्ध॒स्याव॑रुद्ध्यै।
औदु॑म्बरेण स्रु॒वेण॑ जुहोति। ऊर्ग्वा अन्न॑मुदु॒म्बर॑ः। ऊ॒र्ज
ए॒वान्नाद्य॒स्याव॑रुद्ध्यै। दे॒वस्य॑ त्वा सवि॒तु॒ः प्र॑स॒व इत्या॑ह। स॒वि॒तृप्र॑सूत
ए॒वैन॒ं ब्रह्म॑णा दे॒वता॑भिर॒भिषि॑ञ्चति। अन्न॑स्यान्नस्या॒भिषि॑ञ्चति।
अन्न॑स्यान्न॒स्याव॑रुद्ध्यै।।49।।

130803
पुरस्तात्प्रत्यञ्चमभिषिञ्चति। पुरस्ताद्धि
प्रतीचीनमन्नमद्यते। शीर्षतोऽभिषिञ्चति।
शीर्षतो ह्यन्नमद्यते। आ मुखादन्ववस्रावयति। मुखत
एवास्मा अन्नाद्यं दधाति । अग्नेस्त्वा
साम्राज्येनाभिषिञ्चामीत्याह। एष वा अग्नेस्सवः।
तेनैवैनमभिषिञ्चति।
इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह।।50।।
130804
इन्द्रियमेवास्मिन्नेतेन दधाति। बृहस्पतेस्त्वा
साम्राज्येनाभिषिञ्चामीत्याह। ब्रह्म वै
देवानां बृहस्पतिः। ब्रह्मणैवैनमभिषिञ्चति।
सोमग्रहाꣳश्चावदानीयानि
चर्त्विग्भ्य उपहरन्ति। अमुमेव तैर्लोकमन्नवन्तं
करोति।
सुराग्रहाꣳश्चानवदानीयानि च वाजसृद्भ्यः। इममेव तैर्लोकमन्नवन्तं
करोति। अथो उभयीष्वेवाभिषिच्यते। विमाथं कुर्वते वाजसृतः।।51।।
130805
इन्द्रियस्यावरुद्ध्यै। अनिरुक्ताभिः प्रातस्सवने
स्तुवते। अनिरुक्तः प्रजापतिः। प्रजापतेराप्त्यै। वाजवतीभिर्माध्यन्दिने।
अन्नं वै वाजः। अन्नमेवावरुन्धे। शिपिविष्टवतीभिस्तृतीयसवने।
यज्ञो वै विष्णुः। पशवश्शिपिः। यज्ञ एव पशुषु प्रति तिष्ठति।
बृहदन्त्यं भवति। अन्तमेवैनं श्रियै गमयति।।52।।
130800
अश्नीयादन्नस्यान्नस्यावरुद्ध्या इन्द्रस्य त्वा
साम्राज्येनाभिषिञ्चामीत्याह वाजसृतश्शिपिस्त्रीणि च ।।8।।
130901
नृषदं त्वेत्याह। प्रजा वै नॄन्। प्रजानामेवैतेन सूयते।
द्रुषदमित्याह। वनस्पतयो वै द्रु। वनस्पतीनामेवैतेन सूयते।
भुवनसदमित्याह। यदा वै वसीयान्भवति।
भुवनमगन्निति वै तमाहुः। भुवनमेवैतेन गच्छति।।53।।

130902

अ॒प्सु॒षदं॑ त्वा घृत॒सद॒मित्या॑ह।

अ॒पामे॒वैतेन॑ घृतस्य॑ सूयते। व्यो॒म॒सद॒मित्या॑ह। य॒दा वै

वसी॑या॒न्भव॑ति। व्यो॑माग॒न्निति॒ वै तमा॑हुः। व्यो॑मै॒वैते॑न गच्छति।

पृ॒थि॒वि॒षदं॑ त्वाऽन्तरिक्ष॒सद॒मित्या॑ह। ए॒षामे॒वैतेन॑

लो॒काना॒ꣳ॒ सूयते। तस्मा॑द्वाजपेयया॒जी न कंच॒न प्र॒त्यव॑रोहति। अपी॑व॒ हि

दे॒वता॑नाꣳ सू॒यते॑।।54।।

130903

ना॒क॒सद॒मित्या॑ह। य॒दा वै वसी॑या॒न्भव॑ति।

नाक॑मग॒न्निति॒ वै तमा॑हुः। नाक॑मे॒वैतेन॑ गच्छति।

ये ग्रहाः॑ पञ्चज॒नीना॒ इत्या॑ह। प॒ञ्च॒ज॒नाना॑मे॒वैतेन॑

सूयते। अ॒पाꣳ र॒स॒मुद्व॑यस॒मित्या॑ह। अ॒पामे॒वैतेन॒ रस॑स्य सूयते।

सूर्य॑रश्मिꣳ स॒माभृ॑त॒मित्या॑ह सशु॒क्र॒त्वाय॑।।55।।

130900

ग॒च्छ॒ति॒

सू॒यत॒ नव॑ च ।।9।।

131001

इन्द्रो॑ वृ॒त्रꣳ ह॒त्वा। असु॑रान्परा॒भाव्य॑।

सो॑ऽमावा॒स्यां॑ प्रत्याग॑च्छत्।

ते पि॒तर॑ः पूर्वे॒द्युराग॑च्छन्। पि॒तॄन् य॒ज्ञो॑ऽगच्छत्। तं दे॒वाः

पुन॑रयाचन्त। तमे॑भ्यो॒ न पुन॑रददुः। ते॑ऽब्रुव॒न्वरं॑ वृणामहै। अथ॑

व॒ः पुन॑र्दास्यामः। अ॒स्मभ्य॑मे॒व पू॑र्वे॒द्युः क्रि॑याता॒ इति॑।।56।।

131002

तमे॑भ्यः॒ पुन॑रददुः। तस्मा॑त्पि॒तृभ्य॑ः पूर्वे॒द्युः क्रि॑यते।

यत्पि॒तृभ्य॑ः पूर्वे॒द्युः

कु॒रोति॑। पि॒तृभ्य॑ ए॒व तद्य॒ज्ञं नि॒ष्क्रीय॒ यज॑मानः॒ प्रत॑नुते।

सोमा॑य पि॒तृपी॑ताय स्व॒धा नम॒ इत्या॑ह। पि॒तुरे॒वाधि॑ सोमपी॒थमव॑रुन्धे।

न हि पि॒ता प्र॒मीय॑माण॒ आहै॒ष सो॑मपी॒थ इति॑। इ॒न्द्रि॒यं वै सो॑मपी॒थः।

इ॒न्द्रि॒यमे॒व सो॑मपी॒थमव॑ रुन्धे। तेने॑न्द्रि॒येण॑

द्वि॒तीयां॑ जा॒याम॒भ्य॑श्नुते।।57।।

131003

एतद्वै ब्राह्मणं पुरा वाजवश्रवसा
विदामक्रन्। तस्मात्ते द्वेद्वे जाये अभ्याक्षत।
य एवं वेद।अभि द्वितीयां जायामश्नुते। अग्नये कव्यवाहनाय स्वधा
नम इत्याह। य एव पितृणामग्निः। तं प्रीणाति। तिस्र आहुतीर्जुहोति।
त्रिर्निदधाति। षट्थ्संपद्यन्ते ।।58।।
131004
षड्वा ऋतवः। ऋतूनेव प्रीणाति। तूष्णीं
मेक्षणमादधाति। अस्ति वा हि षष्ठ ऋतुर्न वा।
देवान् वै पितॄन्प्रीतान्। मनुष्याः पितरोऽनु प्रपिपते। तिस्र
आहुतीर्जुहोति। त्रिर्निदधाति। षट्थ्संपद्यन्ते। षड्वा ऋतवः।।59।।
131005
ऋतवः खलु वै देवाः पितरः। ऋतूनेव देवान्पितॄन्प्रीणाति। तान्प्रीतान्।
मनुष्याः पितरोऽनु प्रपिपते। सकृदाच्छिन्नं बर्हिर्भवति। सकृदिव
हि पितरः। त्रिर्निदधाति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति।
पराङावर्तते।।60।।
131006
ह्लीका हि पितरः। ओष्मणो व्यावृत उपास्ते। ऊष्मभागा हि पितरः।
ब्रह्मवादिनो वदन्ति। प्राश्यां (3) न प्राश्या (3) मिति। यत्प्राश्नीयात्।
जन्यमन्नमद्यात्। प्रमायुकस्स्यात्। यन्न प्राश्नीयात्। अहविस्स्यात्।।61।।
131007
पितृभ्य आवृश्च्येत। अवघ्रेयमेव। तन्नेव प्राशितं
नेवाप्राशितम्। वीरं वा वै पितरः प्रयन्तो हरन्ति। वीरं वा ददति। दशां
छिनत्ति। हरणभागा हि पितरः। पितॄनेव निरवदयते। उत्तर आयुषि
लोम छिन्दीत। पितृणां ह्येतर्हि नेदीयः।।62।।
131008
नमस्करोति। नमस्कारो हि पितृणाम्। नमो वः
पितरो रसाय। नमो वः पितरश्शुष्माय। नमो वः पितरो
जीवाय। नमो वः पितरस्स्वधायै। नमो वः पितरो मन्यवे। नमो वः
पितरो घोराय। पितरो नमो वः। य एतस्मिंल्लोके स्थ।।63।।
131009
युष्मांस्तेनु। येऽस्मिंल्लोके। मां

तेनु। य एतस्मिंल्लोँके स्थ। यूयं तेषां वसिंष्ठा भूयास्त। येऽस्मिल्लोँके।
अहं तेषां वसिंष्ठो भूयासुमित्याह। वसिंष्ठस्समानानां भवति। य
एवं विद्वान्पितृभ्य॑ꣳ करोति। एष वै मनुष्याणां यज्ञः।।64।।
131010
देवानां वा इतरे यज्ञाः । तेन वा एतत्पिंतृलोके चरति।
यत्पितृभ्य॑ꣳ करोति। स ईश्वरꣳ प्रमेतोः। प्राजापत्ययर्चा पुनरैति।
यज्ञो वै प्रजापतिः। यज्ञेनैव सह पुनरैति। न प्रमायुको भवति।
पितृलोके वा एतद्यजमानश्चरति। यत्पितृभ्य॑ꣳ करोति। स
ईश्वर आर्तिमार्तोः। प्रजापतिस्त्वावैनं तत उन्नेतुमर्हतीत्याहुः।
यत्प्राजापत्ययर्चा पुनरैति। प्रजापतिरेवैनं तत
उन्नयति। नार्तिमार्छति यजमानः।।65।।
131000
इत्यश्नुते पद्यन्ते पद्यन्ते षड्वा ऋतवो वर्तते ऽहविस्स्यान्नेदीयस्स्थ
यज्ञो यजमानश्चरति यत्पितृभ्य॑ꣳ करोति पञ्च च।।10।।
130000
देवासुरा अग्नीषोमयोर्देवा वै यथा दर्शं देवा वै
यदन्यैर्ग्रहैर्ब्रह्मवादिनो नाग्निंष्टोमो न सावित्रं देवस्याहं
तार्प्य॑ꣳ सप्तान्नहोमान्नृषदं त्वेन्द्रो वृत्रꣳ हत्वा दर्श।।10।।
देवासुरा वाज्यैवैनं तस्माद्वाजपेययाजी देवस्याहं
वाजस्यावरुद्ध्या इन्द्रियमेवास्मिन् ह्लोका हि पितरꣳ पञ्चषष्टिः।।65।।
।।देवासुरा यजमानः।। हरिः ओम्।। श्रीकृष्णार्पणमस्तु।
इति तैत्तिरीय ब्राह्मणे प्रथमाष्टके तृतीय प्रपाठकः

140000
तैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थ प्रपाठक प्रारंभः । हरिः ओम्।।
140101
उ॒भये॒ वा ए॒ते प्र॒जाप॑ते॒रध्य॑सृज्यन्त । दे॒वाश्चासु॑राश्च । तान्न व्य॑जानात् । इ॒मे॑ऽन्य इ॒मे॑ऽन्य इति॑ ।
स दे॒वान॒ꣳशून॑करोत् । तान॒भ्य॑षुणोत् । तान्प॒वित्रे॑णापुनात् । तान्प॒रस्ता॑त्प॒वित्र॑स्य॒
व्य॑गृह्णात् । ते ग्रहा॑ अभवन्न् । तद्ग्रहा॑णां ग्रह॒त्वम् ।।1।।
140102
दे॒वता॒ वा ए॒ता यज॑मानस्य गृ॒हे गृ॑ह्यन्ते । यद्ग्रहाः॑ । वि॒दुरे॑नं दे॒वाः । यस्यै॒वं वि॒दुष॑
ए॒ते ग्रहा॑ गृ॒ह्यन्ते॑। ए॒षा वै सोम॒स्याहु॑तिः ।
यदु॑पा॒ꣳशुः । सोमे॑न दे॒वाꣳ स्त॑र्पया॒णीति॒ खलु॒ वै सोमे॑न यजते । यदु॑पा॒ꣳशुं जु॒होति॑
। सोमे॑नै॒व तद्दे॒वाꣳस्त॑र्पयति । यद्ग्रहा॑ञ्जु॒होति॑ ।।2।।
140103
दे॒वा ए॒व तद्दे॒वान्ग॑च्छन्ति । यच्च॑म॒साञ्जु॒होति॑ । तेनै॒वानु॑रूपेण॒ यज॑मानस्सुव॒र्गं
लो॒कमे॑ति । किं न्वे॑तदग्र॑ आसी॒दित्या॑हुः ।
यत्पात्रा॒णीति॑ । इ॒यं वा ए॒तदग्र॑ आसीत् । मृ॒न्मया॑नि॒ वा ए॒तान्या॑सन्न् । तैर्दे॒वा न व्या॒वृत॑मगच्छन्न्
। त ए॒तानि॑ दारु॒मया॑णि॒ पात्रा॑ण्यपश्यन्न् ।
तान्य॑कुर्वत ।।3।।
140104
तैर्वै॑ ते व्या॒वृत॑मगच्छन्न् । यद्दा॑रु॒मया॑णि॒ पात्रा॑णि॒ भव॑न्ति । व्या॒वृत॑मे॒व तैर्यज॑मानो
गच्छति । यानि॑ दारु॒मया॑णि॒ पात्रा॑णि॒
भव॑न्ति । अ॒मुमे॒व तैर्लो॒कम॒भिज॑यति । यानि॑ मृ॒न्मया॑नि । इ॒ममे॒व तैर्लो॒कम॒भिज॑यति ।
ब्र॒ह्म॒वा॒दिनो॑ वदन्ति । काश्चत॑स्रस्स्था॒लीर्वा॑यु॒व्या॑स्सोम॒-
ग्रह॑णी॒रिति॑ । दे॒वा वै पृश्नि॑मदुहन्न् ।।4।।
140105
तस्या॑ ए॒ते स्तना॑ आसन्न् । इ॒यं वै पृश्निः॑ । ताम॑दि॒त्या आ॑दित्यस्था॒ल्या चतु॑ष्पदꣳ प॒शून॑दुहन्न् ।
यदा॑दित्यस्था॒ली भव॑ति ।
चतु॑ष्पद ए॒व तया॑ प॒शून् यज॑मान इ॒मां दु॑हे । तामिन्द्र॑ उक्थ्यस्था॒ल्येन्द्रि॒यम॑दुहत् ।
यदु॑क्थ्यस्था॒ली भव॑ति । इ॒न्द्रि॒यमे॒व त॒या यज॑मान इ॒मां दु॑हे ।
तां विश्वे॑दे॒वा आ॑ग्रयणस्था॒ल्योर्ज॑मदुहन्न् । यदा॑ग्रयणस्था॒ली भव॑ति ।।5।।
140106
ऊर्ज॑मे॒व त॒या यज॑मान इ॒मां दु॑हे । तां मनु॒ष्या॑ ध्रुवस्था॒ल्याऽऽयु॑रदुहन्न् । यद्ध्रु॑वस्था॒ली भव॑ति ।
आयु॑रे॒व त॒या यज॑मान

इ॒मां दु॑हे । स्था॒ल्या गृ॑ह्णाति । वा॒य॒व्ये॑न जुहोति । तस्मा॑द॒न्येन॒ पात्रे॑ण प॒शून्दु॒हन्ति॑
। अ॒न्येन॒ प्रति॑गृह्णन्ति । अथो᳚ व्या॒वृत॑मे॒व तद्यज॑मानो गच्छति ।।6।।
140100
ग्र॒ह॒त्वं ग्रहा᳚ञ्जु॒होत्य॑कुर्वतादुह्नन्नाग्रयणस्था॒ली भव॑ति॒ नव॑ च ।।1।।
140201
यु॒वꣳ सु॒राम॑मश्विना । नमु॑चावासु॒रे सचा᳚ । वि॒पि॒पा॒ना शु॑भस्पती । इन्द्रं॒ कर्म॑ स्वावतम् । पु॒त्रमि॑व
पि॒तरा॑व॒श्विनो॒भा ।
इन्द्राव॑तु॒ं कर्म॑णा द॒ꣳसना॑भिः । यथ्सु॒राम॒ं व्यपि॑ब॒श्शची॑भिः । सर॑स्वती त्वा मघवन्नभीष्णात्
। अहा᳚व्यग्ने ह॒वि॒रा॒स्ये॑ते । स्रु॒चीव॑ घृ॒तं च॒मू इ॑व॒ सोम॑ः ।।7।।
140202
वा॒ज॒सनि॑ꣳ र॒यिम॒स्मे सु॒वीर॑म् । प्र॒श॒स्तं धे॑हि य॒शस॑ं बृ॒हन्त॑म् । यस्मि॒न्नश्वा॑स
ऋ॒ष॒भास॑ उ॒क्षण॑ः । व॒शा मे॒षा अ॑वसृ॒ष्टास॒
आहु॑ताः । की॒ला॒ल॒पे सोम॑पृष्ठाय वे॒धसे᳚ । हृ॒दा म॒तिं ज॑नय॒ चारु॑म॒ग्नये᳚ । नाना॒ हि
वा᳚ं दे॒वहि॑त॒ꣳ सदो॑ मि॒त म् । मा सꣳसृ॑क्षाथां पर॒मे व्यो॑मन्न् ।
सु॒रा॒ त्वमसि॑ शु॒ष्मिणी॒ सोम॑ ए॒षः । मा मा॑ हिꣳसी॒स्स्वां योनि॑मावि॒शन्न् ।।8।।
140203
यदत्र॑ शि॒ष्टꣳ र॒सिन॑स्सुतस्य॑ । यदिन्द्रो॒ अपि॑ब॒च्छची॑भिः । अ॒हं तद॑स्य॒ मन॑सा शि॒वेन॑
। सोम॒ꣳ राजा॑नमि॒ह भ॑क्षयामि । द्वे
स्रु॒ती अ॑शृणवं पितृ॒णाम् । अ॒हं दे॒वाना॑मु॒त मर्त्या॑नाम् । ताभ्या॑मि॒दं विश्व॒ं भुव॑न॒ꣳ
समे॑ति । अ॒न्त॒रा पू॒र्व॒मप॑रं च के॒तुम् । यस्ते॑ देव वरुण
गा॒य॒त्रछ॑न्दा॒ः पाश॑ः । तं त॑ ए॒तेनाव॑यजे ।।9।।
140204
यस्ते॑ देव वरुण त्रि॒ष्टुप्छ॑न्दा॒ः पाश॑ः । तं त॑ ए॒तेनाव॑यजे । यस्ते॑ देव वरु॒ण॒ जग॑तीछन्दा॒ः पाश॑ः । तं
त॑ ए॒तेनाव॑यजे ।
सोमो॒ वा ए॒तस्य॑ रा॒ज्यमाद॑त्ते । यो राजा॒ सन्रा॒ज्यो वा॒ सोमे॑न॒ यज॑ते । दे॒व॒सु॒वामे॒तानि॑
ह॒वीꣳषि॑ भवन्ति । ए॒ताव॑न्तो॒ वै दे॒वानाꣳ॑ स॒वाः । त
ए॒वास्मै॑ स॒वान्प्रय॑च्छन्ति । त ए॑न॒ं पुन॑स्सुवन्ते रा॒ज्याय॑ । दे॒व॒सू राजा॑ भवति ।।10।।
140200
सोम॑ आवि॒शन् य॑जे रा॒ज्यायैकं॑ च ।।2।।
140301
उद॑स्थाद्दे॒व्यदि॑तिर्विश्वरू॒पी । आयु॑र्य॒ज्ञप॑तावधात् । इन्द्रा॑य कृण्व॒ती भा॒गम् । मि॒त्राय॒ वरु॑णाय च ।
इ॒यं वा अ॑ग्नि॒हो॒त्री ।

इ॒यं वा ए॒तस्य॒ निषी॑दति । यस्या॑ग्निहो॒त्री नि॒षीद॑ति । तामु॒त्था॑पयेत् । उद॑स्थाद्दे॒व्यदि॑ति॒रिति॑ । इ॒यं वै दे॒व्यदि॑तिः ।।11।।
140302
इ॒माme॒वास्मा॒ उत्था॑पयति । आयु॑र्य॒ज्ञप॑तावध॒ादित्या॑ह । आयु॑रे॒वास्मि॒न्दधाति । इन्द्रा॑य कृण्व॒ती भा॒गं मि॒त्राय॒ वरु॑णाय॒
चेत्या॑ह । य॒था॒य॒जुरे॒वैतत् । अर्व॑र्तिं॒ वा ए॒षैतस्य॑ पा॒प्मानं॑ प्रति॒ख्याय॒ निषी॑दति
। यस्या॑ग्निहो॒त्र्युप॑सृष्टा नि॒षीद॑ति । तां दु॒ग्ध्वा ब्रा॑ह्म॒णाय॑ दद्यात् ।
यस्यान्नं॒ नाद्यात् । अर्व॑र्तिमे॒वास्मि॒न्पा॒प्मानं॒ प्रति॑मुञ्चति ।।12।।
140303
दु॒ग्ध्वा द॑दाति । न ह्यद॑ष्टा॒ दक्षि॑णा दी॒यते॑ । पृ॒थि॒वीं वा ए॒तस्य॒ पय॒ꣳ प्रवि॑शति
। यस्या॑ग्निहो॒त्रं दु॒ह्यमा॑न॒ स्कन्द॑ति । यद॒द्य
दु॒ग्धं पृ॑थि॒वीमस॑क्त । यदोष॑धीर॒प्यस॑र॒द्यदापः॑ । पयो॑ गृ॒हेषु॒ पयो॑ अघ्नि॒यासु॑ । पयो॑ व॒थ्सेषु॒ पयो॑ अस्तु॒ तन्मयीत्या॑ह । पय॑ ए॒वात्मन्गृ॒हेषु॑ प॒शुषु॑ धत्ते ।
अ॒प उप॑सृजति ।।13।।
140304
अ॒द्भिरे॒वैन॑दाप्नोति । यो वै य॒ज्ञस्या॒र्ते॒ नाना॑र्त॒ꣳ स॒ꣳ सृ॒जति॑ । उ॒भे वै ते तर्ह्या॒र्छ॑तः । आर्छ॑ति॒ खलु॒ वा ए॒तद॑ग्निहो॒त्रम् ।
यद्दु॒ह्यमा॑न॒ स्कन्द॑ति । यद॑भिदु॒ह्यात् । आर्ते॒ नाना॑र्तं य॒ज्ञस्य॒ सꣳसृ॑जेत् । तदे॒व या॒दृक्कीदृक्च॑ होत॒व्य॑म् । अथा॒न्यां दु॒ग्ध्वापुन॑र्होत॒व्य॑म् ।
अना॑र्तेनै॒वार्तं॑ य॒ज्ञस्य॒ निष्क॑रोति ।।14।।
140305
यद्युद्द्रु॒तस्य॒ स्कन्दे॑त् । यत्ततोऽहु॑त्वा॒ पुन॑रे॒यात् । य॒ज्ञं विच्छि॑न्द्यात् । यत्र॒ स्कन्दे॑त् । तन्नि॒षद्य॒ पुन॑र्गृह्णीयात् । यत्रै॒व स्कन्द॑ति । तत॑ ए॒वैन॒त्पुन॑-
र्गृह्णाति । तदे॒व या॒दृक्कीदृक्च॑ होत॒व्य॑म् । अथा॒न्यां दु॒ग्ध्वा पुन॑र्होत॒व्य॑म् । अना॑र्तेनै॒वार्तं॑
य॒ज्ञस्य॒ निष्क॑रोति ।।15।।
140306
वि वा ए॒तस्य॑ य॒ज्ञश्छि॑द्यते । यस्या॑ग्निहो॒त्रेऽधिश्रि॑ते॒ श्वाऽन्त॒रा धाव॑ति । रु॒द्रः खलु॒ वा ए॒षः । यद॒ग्निः । यद्गामन्व॒त्या व॒र्तये॑त् ।
रु॒द्राय॑ प॒शूनपि॑ दध्यात् । अ॒प॒शुर्यज॑मानस्स्यात् । यद॒पोऽन्वतिषि॒ञ्चेत् । अ॒ना॒द्यम॒ग्नेरापः॑
। अ॒ना॒द्यमा॑भ्या॒मपि॑ दध्यात् । गार्ह॑पत्या॒द्भस्मा॒दाय॑ ।
इ॒दं विष्णु॒र्विच॑क्रम॒ इति॑ वैष्ण॒व्यर्चाऽऽह॑व॒नीया॑द्भ॒ꣳसय॒न्नुद्र॑वेत् । य॒ज्ञो

वै विष्णु॑ः । य॒ज्ञेनै॒व य॒ज्ञꣳ संत॑नोति । भस्म॑ना प॒दमपि॑ वपति॒ शान्त्यै॑ ।।16।।
140300
वै दे॒व्यदि॑तिर्मु॒ञ्चति सृजति करोति करोत्याभ्या॒मपि॑ दध्या॒त् पञ्च॑ च ।।3।।
140401
नि वा ए॒तस्या॑हव॒नीयो॒ गार्ह॑पत्यं कामयते । निगार्ह॑पत्य आहव॒नीय॑म् । यस्या॒ग्निमनु॑द्धृत॒ꣳ सूर्यो॒ऽभि नि॒म्रोच॑ति । द॒र्भेण॒
हिर॑ण्यं प्र॒बद्ध्य॑ पु॒रस्ता॒॑द्धरेत् । अथा॒ग्निम् । अथा॒॑ग्निहो॒त्रम् । यद्धिर॑ण्यं पु॒रस्ता॒द्धर॑ति
। ज्योति॒र्वै हिर॑ण्यम् । ज्योति॑रे॒वैन॒ं पश्य॒न्नुद्धरति । यद॒ग्निं
पूर्व॒ꣳ हर॒त्यथा॒॑ग्निहो॒त्रम् ।।17।।
140402
भा॒ग॒धेये॑नै॒वैन॒ं प्रण॑यति । ब्रा॒ह्म॒ण आ॑र्षे॒य उद्ध॑रेत् । ब्रा॒ह्म॒णो वै सर्वा॑ दे॒वता॑ः
। सर्वा॑भिरे॒वैनं॑ दे॒वता॑भि॒रुद्धरति ।
अ॒ग्नि॒हो॒त्रमु॑प॒साद्यातमि॑तोरासीत । व्र॒तमे॒व ह॒तमनु॒ म्रियते । अन्त॒ं वा ए॒ष आ॒त्मनो॑
गच्छति । यस्ताम्य॑ति । अन्त॑मे॒ष य॒ज्ञस्य॑ गच्छति ।
यस्या॒ग्निमनु॑द्धृत॒ꣳ सूर्यो॒ऽभि नि॒म्रोच॑ति ।।18।।
140403
पुन॑स्स॒मन्य॑ जुहोति । अन्ते॑नै॒वान्त॑ं य॒ज्ञस्य॒ निष्क॑रोति । वरु॑णो॒ वा ए॒तस्य॑ य॒ज्ञं
गृ॒ह्णाति । यस्या॒ग्निमनु॑द्धृत॒ꣳ सूर्यो॒ऽभि
नि॒म्रोच॑ति । वा॒रु॒णं च॒रुं निर्व॑पेत् । तेनै॒व य॒ज्ञं निष्क्री॑णीते । नि वा ए॒तस्या॑हव॒नीयो॒
गार्ह॑पत्यं कामयते । नि गार्ह॑पत्य आहव॒नीय॑म् ।
यस्या॒ग्निमनु॑द्धृत॒ꣳ सूर्यो॒ऽभ्युदेति॑ । च॒तु॒र्गृ॒हीतमाज्य॑ं पु॒रस्ता॒॑द्धरेत् ।।19।।
140404
अथा॒ग्निम् । अथा॒॑ग्निहो॒त्रम् । यदाज्य॑ं पु॒रस्ता॒द्धर॑ति । ए॒तद्वा अ॒ग्नेः प्रि॒यं धाम॑
। यदाज्य॑म् । प्रि॒येणै॒वैन॒ं धाम्ना॒ सम॑र्धयति ।
यद॒ग्निं पूर्व॒ꣳ हर॒त्यथा॒॑ग्निहो॒त्रम् । भा॒ग॒धेये॑नै॒वैन॒ं प्रण॑यति । ब्रा॒ह्म॒ण आ॑र्षे॒य
उद्ध॑रेत् । ब्रा॒ह्म॒णो वै सर्वा॑ दे॒वता॑ः ।।20।।
140405
सर्वा॑भिरे॒वैनं॑ दे॒वता॑भि॒रुद्धरति । परा॑ची॒ वा ए॒तस्मै॑ व्यु॒च्छन्ती॒ व्यु॑च्छति ।
यस्या॒ग्निमनु॑द्धृत॒ꣳ सूर्यो॒ऽभ्युदेति॑ । उ॒षाः के॒तुना॑
जुषताम् । य॒ज्ञं दे॒वेभि॑रिन्वि॒तम् । दे॒वेभ्यो॒ मधु॑मत्तम॒ स्वाहेति॑ प्र॒त्यङ्ङि॒षद्याज्ये॑न
जुहुयात् । प्र॒तीची॑मे॒वास्मै॒ विवा॑सयति । अ॒ग्नि॒हो॒त्रमु॑प॒साद्या

तमितोरासीत । व्रतमेव हतमनु म्रियते । अन्तं वा एष आत्मनो गच्छति ।।21।।
140406 यस्ताम्यति । अन्तमेष यज्ञस्य गच्छति । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति
। पुनस्समन्य जुहोति । अन्तेनैवान्तं यज्ञस्य
निष्करोति । मित्रो वा एतस्य यज्ञं गृह्णाति । यस्याग्निमनुद्धृतꣳ सूर्योऽभ्युदेति
। मैत्रं चरुं निर्वपेत् । तेनैव यज्ञं निष्क्रीणीते । यस्याहवनीयेऽ
नुद्वाते गार्हपत्य उद्वायेत् ।।22।।
140407
यदाहवनीयमनुद्वाप्य गार्हपत्यं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् ।
यद्वै यज्ञस्य वास्तव्यं क्रियते । तदनु
रुद्रोऽवचरति । यत्पूर्वमन्ववस्येत् । वास्तव्यमग्निमुपासीत । रुद्रोऽस्य पशून्घातुकस्स्यात्
। आहवनीयमुद्वाप्य । गार्हपत्यं मन्थेत् ।। 23 ।।
140408
इतꣳ प्रथमं जज्ञे अग्निः । स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा
जगत्या । देवेभ्यो हव्यं वहतु प्रजानन्निति ।
छन्दोभिरेवैन स्वाद्योनेꣳ प्रजनयति । गार्हपत्यं मन्थति । गार्हपत्यं वा अन्वाहिताग्नेꣳ
पशव उप तिष्ठन्ते । स यदुद्वायति । तदनु पशवोऽप
क्रामन्ति । इषे रय्यै रमस्व ।। 24 ।।
140409
सहसे द्युम्नाय । ऊर्जेऽपत्यायेत्याह । पशवो वै रयिः । पशूनेवास्मै रमयति । सारस्वतौ त्वोथ्सौ
समिन्धातामित्याह ।
ऋख्सामे वै सारस्वतावुथ्सौ । ऋख्सामाभ्यामेवैनꣳ समिन्धे । सम्राडसि विराडसीत्याह
। रथन्तरं वै सम्राट् । बृहद्विराट् ।25।।
140410
ताभ्यामेवैनꣳ समिन्धे । वज्रो वै चक्रम् । वज्रो वा एतस्य यज्ञं विच्छिनत्ति । यस्यानो वा
रथोवाऽन्तराऽग्नी याति ।
आहवनीयमुद्वाप्य । गार्हपत्यादुद्धरेत् । यदग्ने पूर्वं प्रभृतं पदꣳ हि ते
। सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनु सं भरैतम् । सं नस्सृज सुमत्या
वाजवत्येति ।।26।।
140411
पूर्वेणैवास्य यज्ञेन यज्ञमनु संतनोति । त्वमग्ने सप्रथा असीत्याह । अग्निस्सर्वा
देवताः । देवताभिरेव यज्ञꣳ संतनोति । अग्नये

पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् । अग्निमेव पथिकृत स्वेन भागधेयेनोप
धावति । स एवैनं यज्ञियं पन्थामपि नयति । अनड्वान्दक्षिणा ।
वही ह्येष समृद्ध्यै ।।27।।
140400
हरत्यथाग्निहोत्रं निम्रोचति हरेद्देवता गच्छत्युद्वायेन्मन्थेद्रमस्व बृहद्विराडिति नव च ।।4।।
(नि वै पूर्वं त्रीणि निम्रोचति दर्भेण यद्धिरण्यमग्निहोत्रं पुनर्वरुणो वारुणं नि
वा एतस्याभ्युदेति चतुर्गृहीतमाज्यं यदाज्यं पराच्युषाः पुनर्मित्रो मैत्रं
यस्याहवनीयेऽनुद्वाते गार्हपत्यो यद्वै मन्थेदुद्धरेत् ।। )
140501
यस्य प्रातस्सवने सोमोऽतिरिच्यते । माध्यन्दिनꣳ सवनं कामयमानोऽभ्यतिरिच्यते ।
गौर्धयति मरुतामिति धयद्वतीषु
कुर्वन्ति । हिनस्ति वै सन्ध्यधीतम् । सन्धीव खलु वा एतत् । यथ्सवनस्यातिरिच्यते ।
यद्धयद्वतीषु कुर्वन्ति । सन्धेश्शान्त्यै । गायत्रꣳ साम
भवति पञ्चदशस्स्तोमः । तेनैव प्रातस्सवनान्नयन्ति ।।28।।
140502
मरुत्वतीषु कुर्वन्ति । तेनैव माध्यन्दिनाथ्सवनान्नयन्ति । होतुश्श्रमसमनून्नयन्ते । होताऽनु शꣳसति
। मध्यत एव यज्ञꣳ
समादधाति । यस्य माध्यन्धिने सवने सोमोऽतिरिच्यते । आदित्यं तृतीयसवनं
कामयमानोऽभ्यतिरिच्यते
। गौरिवीतꣳ साम भवति ।
अतिरिक्तं वै गौरिवीतम् । अतिरिक्तं यथ्सवनस्यातिरिच्यते ।।29।।
140503
अतिरिक्तस्य शान्त्यै । बण्महाꣳ असि सूर्येति कुर्वन्ति । यस्यैवादित्यस्य सवनस्य
कामेनातिरिच्यते । तेनैवैनं कामेन
समर्धयन्ति । गौरिवीतꣳ साम भवति । तेनैव माध्यन्दिनाथ्सननान्नयन्ति । सप्तदशस्स्तोमः
। तेनैव तृतीयसवनान्नयन्ति । होतुश्श्रमसमनून्नयन्ते ।
होताऽनु शꣳसति ।।30।।
140504
मध्यत एव यज्ञꣳ समादधाति । यस्य तृतीयसवने सोमोऽतिरिच्येत । उक्थ्यं कुर्वीत
। यस्योक्थ्येऽतिरिच्येत । अतिरात्रं
कुर्वीत । यस्यातिरात्रेऽतिरिच्यते । तत्त्वै दुष्प्रज्ञानम् । यजमानं वा एतत्पशव

आ॒साद्य॑यन्ति । बृ॒हथ्साम॑ भवति । बृ॒हद्वा इ॒माल्लोँ॒कान्दा॑धार ।

बार्॒हता॑ः प॒शव॑ः । बृ॒ह॒तैवास्मै॑ प॒शून्दा॑धार । शि॒पि॒वि॒ष्टव॑तीषु कुर्व॑न्ति । शि॒पि॒वि॒ष्टो

वै दे॒वानां॑ पु॒ष्टम् । पु॒ष्ट्यै॒वैन॒ꣳ सम॑र्धयन्ति ।

होतु॑श्चम॒समनून्न॑यन्ते । होताऽनु॑शꣳसति । म॒ध्य॒त ए॒व य॒ज्ञꣳ स॒माद॑धाति ।।31।।

140500

य॒न्ति॒ सर्व॑नस्याति॒रिच्य॑ते शꣳसति दाधारा॒ष्टौ च॑ ।।5।।

140601

एकै॑क॒ो वै ज॒नता॑या॒मिन्द्र॑ः । एकं॒ वा ए॒ताविन्द्र॑म॒भि सꣳसु॑नुतः । यौ द्वौ सꣳ सु॒नु॒तः

। प्र॒जाप॑ति॒र्वा ए॒ष विता॑यते । यद्य॒ज्ञः ।

तस्य॒ ग्रावा॑णो॒ दन्ता॑ः । अ॒न्य॒त॒रं वा ए॒ते सꣳसु॑न्व॒तोर्नि॑र्बफ्सति । पूर्वे॑णोप॒सृत्या॑

दे॒व॒ता इत्या॑हुः । पू॒र्वो॑प॒सृ॒तस्य॒ वै श्रेया॑न्भवति । एति॑व॒न्त्याज्या॑नि

भवन्त्य॒भिजि॑त्यै ।।32।।

140602

म॒रुत्व॑तीः प्रति॒पद॑ः । म॒रुतो॒ वै दे॒वाना॒मप॑राजितम॒ायत॑नम् । दे॒वाना॑मे॒वाप॑राजित

आ॒यत॑ने यतते । उ॒भे बृ॑हद्रथन्त॒रे भ॑वतः ।

इ॒यं वाव र॑थन्त॒रम् । अ॒सौ बृ॒हत् । आ॒भ्यामे॒वैन॑म॒न्तरे॑ति । वा॒चश्च॒ मन॑सश्च । प्रा॒णाच्चा॑पा॒नाच्च॑

। दि॒वश्च॑ पृथि॒व्याश्च॑ ।।33।।

140603

सर्व॑स्माद्वि॒त्ताद्वेद्या॑त् । अ॒भि॒व॒र्तो ब्र॑ह्मसा॒मं भ॑वति । सु॒व॒र्गस्य॑ लो॒कस्या॒भिवृ॑त्त्यै

। अ॒भि॒जिद्भ॑वति । सु॒व॒र्गस्य॑ लो॒कस्या॒भिजि॑त्यै ।

वि॒श्व॒जिद्भ॑वति । विश्व॑स्य॒ जित्यै॑ । यस्य॒ भूयाꣳ॑सो यज्ञक्र॒तव॒ इत्या॑हुः । स दे॒वता॑

वृ॒ङ्क्त इति॑ । यद्य॑ग्निष्टो॒मस्सोम॑ः प॒रस्ता॒थ्स्यात् ।।34।।

140604

उ॒क्थ्यं॑ कुर्वीत । यद्यु॒क्थस्स्यात् । अ॒ति॒रा॒त्रं कु॑र्वीत । य॒ज्ञ॒क्र॒तुभि॑रे॒वास्य॑

दे॒वता॑ वृङ्क्ते । यो वै छन्दो॑भिरभि॒भव॑ति ।

स सꣳसु॑न्व॒तोर॒भिभ॑वति । सं॒वे॒शाय॑ त्वोपवे॒शाय॒ त्वेत्या॑ह । छन्दाꣳ॑सि॒ वै सं॑वे॒श उ॑पवे॒शः

। छन्दो॑भिरे॒वास्य॒ छन्दाꣳ॑स्य॒भिभ॑वति । इ॒ष्टर्गो॒ वा

ऋ॒त्विजा॑मध्व॒र्युः ।।35।।

140605

इ॒ष्टर्ग॒ः खलु॒ वै पू॒र्वोर्ष्टुः क्षीय॑ते । प्रा॒णा॑पानौ मृ॒त्योर्मा॑ पात॒मित्या॑ह । प्रा॒णा॒पा॒नयो॑रे॒व

श्र॑यते । प्रा॒णा॑पा॒नौ मा मा॑

हासिष्टमित्याह । नैनं पुराऽऽयुषः प्राणापानौ जहितः । आर्तिं वा एते निर्यन्ति । येषां
दीक्षितानां प्रमीयते । तं यदवव्रजेयुः ।
क्रूरकृतामिवैषां लोकस्स्यात् । आहर दहेति ब्रूयात् ।।36।।
140606
तं दक्षिणतो वेद्यै निधाय । सर्पराज्ञिया ऋग्भिस्स्तुयुः । इयं वै सर्पतो राज्ञी
। अस्या एवैनं परिददति । व्यृद्धं
तदित्याहुः । यथ्स्तुतमननुशस्तमिति । होता प्रथमः प्राचीनावीती मार्जालीयं परीयात्
। यामीरनुब्रुवन्न् । सर्पराज्ञीनां कीर्तयेत् ।
उभयोरेवैनं लोकयोः परिददति ।।37।।
140607
अथो धुवन्त्येवैनम् । अथो न्येवास्मै ह्नुवते । त्रिः परियन्ति । त्रय इमे लोकाः
। एभ्य एवैनं लोकेभ्यो धुवते । त्रिः पुनः
परियन्ति । षट्थ्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं धुवते । अग्न आयूंषि पवस
इति प्रतिपदं कुर्वीरन्न् । रथन्तरसामैषाꣳ सोमस्स्यात् ।
आयुरेवात्मन्दधते । अथो पाप्मानमेव विजहतो यन्ति ।।38।।
140600
अभिजित्यै पृथिव्याश्च स्यादध्वर्युर्ब्रूयाल्लोकयोः परिददति कुर्वीरन्त्रीणि च ।।6।।
140701
असुर्यं वा एतस्माद्वर्णं कृत्वा । पशवो वीर्यमप क्रामन्ति । यस्य यूपो विरोहति
। त्वाष्ट्रं बहुरूपमालभेत । त्वष्टा वै
रूपाणामीशे । य एव रूपाणामीशे । सोऽस्मिन्पशून् वीर्यं यच्छति । नास्मात्पशवो
वीर्यमप क्रामन्ति । आर्तिं वा एते निर्यन्ति । येषां
दीक्षितानामग्निरुद्वायति ।।39।।
140702
यदाहवनीय उद्वायेत् । यत्तं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् । यदाहवनीय
उद्वायेत् । अग्नीद्ध्रादुद्धरेत् ।
यदाग्नीद्ध्र उद्वायेत् । गार्हपत्यादुद्धरेत् । यद्गार्हपत्य उद्वायेत् । अत एव पुनर्मन्थेत् ।।40।।
140703
अत्र वाव स निलयते । यत्र खलु वै निलीनमुत्तमं पश्यन्ति । तदेनमिच्छन्ति । यस्माद्दारोरुद्वायेत् ।
तस्यारणी कुर्यात् ।
क्रुमुकमपि कुर्यात् । एषा वा अग्नेः प्रिया तनूः । यत्क्रुमुकः । प्रिययैवैनन्तनुवा

समर्धयति । गार्हपत्यं मन्थति ।।41।।
140704
गार्हपत्यो वा अग्नेर्योनिः । स्वादेवैनय्योनेर्जनयति । नास्मै भ्रातृव्यञ्जनयति । यस्य
सोम उपदस्येत् । सुवर्णं हिरण्यन्द्वेधा
विच्छिद्य । ऋजीषेऽन्यदाधूनुयात् । जुहुयादन्यत् । सोममेवाभिषुणोति । सोमञ्जुहोति
। सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् ।।42।।
140705
तथ्सुवर्णं हिरण्यमभवत् । यथ्सुवर्णं हिरण्यङ्कुर्वन्ति । प्रिययैवैनन्तनुवा
समर्धयन्ति । यस्याक्रीतं सोममपहरेयुः ।
क्रीणीयादेव । सैव ततः प्रायश्चित्तिः । यस्य क्रीतमपहरेयुः । आदाराꣳश्च फाल्गुनानि
चाभिषुणुयात् । गायत्री यꣳ सोममाहरत् । तस्य योऽꣳशुः
पराऽपतत् ।।43।।
140706
त आदारा अभवन्न् । इन्द्रो वृत्रमहन्न् । तस्य वल्कः पराऽपतत् । तानि फाल्गुनान्यभवन्न् । पशवो
वै फाल्गुनानि ।
पशवस्सोमो राजा । यदादाराꣳश्च फाल्गुनानि चाभिषुणोति । सोममेव राजानमभिषुणोति
। शृतेन प्रातस्सवने श्रीणीयात् । दध्ना मध्यन्दिने ।।44।।
140707
नीतमिश्रेण तृतीयसवने । अग्निष्टोमस्सोमस्स्याद्रथन्तरसामा । य एवर्त्विजो वृतास्स्युः । त
एनय्याँजयेयुः ।
एकाङ्गान्दक्षिणान्दद्यात्तेभ्य एव । पुनस्सोमङ्क्रीणीयात् । यज्ञेनैव तद्यज्ञमिच्छति
। सैव ततः प्रायश्चित्तिः । सर्वाभ्यो वा एष देवताभ्यस्सर्वेभ्यः
पृष्ठेभ्य आत्मानमागुरते । यस्सत्रायागुरते । एतावान्खलु वै पुरुषः । यावदस्य
वित्तम् । सर्ववेदसेन यजेत । सर्वपृष्ठोऽस्य सोमस्स्यात् ।
सर्वाभ्य एव देवताभ्यस्सर्वेभ्यः पृष्ठेभ्य आत्मानन्निष्क्रीणीते ।।45।।
140700
उद्वायति मन्थेन्मन्थत्यक्रामत्पराऽपतन्मध्यन्दिन आगुरते पञ्च च ।।7।।
140801
पवमानस्सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा । पुनन्तु मा देवजनाः ।
पुनन्तु मनवो धिया ।
पुनन्तु विश्व आयवः । जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण देव

दीद्यत् । अग्ने क्रत्वा क्रतूꣳ रनु ।।46।।
140802
यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे । उभाभ्यान्देव सवितः
। पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे ।
वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तस्सधमाद्येषु
। वय स्याम पतयो रयीणाम् ।।47।।
140803
वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयोभूः । द्यावापृथिवी पयसा
पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् ।
बृहद्भिस्सवितस्तृभिः । वर्षिष्ठैर्देव मन्मभिः । अग्ने दक्षैः पुनाहि मा । येन देवा
अपुनत । येनापो दिव्यङ्कशः । तेन दिव्येन ब्रह्मणा ।।48।।
140804
इदं ब्रह्म पुनीमहे । यः पावमानीरध्येति । ऋषिभिस्संभृतꣳ रसम् । सर्वꣳ स पुतमश्नाति ।
स्वदितं मातरिश्वना ।
पावमानीर्यो अध्येति । ऋषिभिस्संभृतꣳ रसम् । तस्मै सरस्वती दुहे । क्षीरꣳ
सर्पिर्मधूदकम् । पावमानीस्स्वस्त्ययनीः ।।49।।
140805
सुदुघा हि पयस्वतीः । ऋषिभिस्सम्भृतो रसः । ब्राह्मणेष्वमृतꣳ हितम् । पावमानीर्दिशन्तु
नः । इमल्लोँकमथो अमुम् ।
कामान्थ्समर्धयन्तु नः । देवीर्देवैस्समाभृताः । पावमानीस्स्वस्त्ययनीः । सुदुघा
हि घृतश्चुतः । ऋषिभिस्सम्भृतो रसः ।।50।।
140806
ब्राह्मणेष्वमृतꣳ हितम् । येन देवाः पवित्रेण । आत्मानं पुनते सदा । तेन
सहस्रधारेण । पावमान्यः पुनन्तु मा । प्राजापत्यं
पवित्रम् । शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे ।
इन्द्रस्सुनीती सह मा पुनातु । सोमस्स्वस्त्या वरुणस्समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ।।51।।
140800
अनु रयीणां ब्रह्मणा स्वस्त्ययनीस्सुदुघा हि घृतश्चुत ऋषिभिस्सम्भृतो रसः पुनातु त्रीणि च ।।8।।
140901
प्रजा वैसत्रमासत तपस्तप्यमाना अजुह्वतीः । देवा अपश्यञ्चमसङ्घृतस्य पूर्ण स्वधाम् ।
तमुपोदतिष्ठन्तमजुहवुः ।

तेनार्धमास ऊर्जमवारुन्धत । तस्मादर्धमासे देवा इज्यन्ते । पितरोऽपश्यञ्चमसङ्कृतस्य

पूर्ण स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेन मास्यूर्जमवारुन्धत । तस्मान्मासि

पितृभ्यः क्रियते । मनुष्या अपश्यञ्चमसङ्कृतस्य पूर्ण स्वधाम् ।।52।।

140902

तमुपोदतिष्ठन्तमजुहवुः । तेन द्वयीमूर्जमवारुन्धत । तस्माद्विरह्नो मनुष्येभ्य

उप ह्रियते । प्रातश्च सायञ्च । पशवोऽपश्य-

ञ्चमसङ्कृतस्य पूर्ण स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेन त्रयीमूर्जमवारुन्धत

। तस्मात्त्रिरह्नः पशवः प्रेरते । प्रातस्सङ्गवे सायम् । असुरा

अपश्यञ्चमसङ्कृतस्य पूर्ण स्वधाम् ।।53।।

140903

तमुपोदतिष्ठन्तमजुहवुः । तेन सवँथ्सर ऊर्जमवारुन्धत । ते देवा अमन्यन्त । अमी वा इदमभूवन्न् ।

यद्वय स्म इति । त

एतानि चातुर्मास्यान्यपश्यन्न् । तानि निरवपन्न् । तैरेवैषान्तामूर्जमवृञ्जत । ततो देवा अभवन्न् ।

पराऽसुराः ।।54।।

140904

यद्यजते । यामेव देवा ऊर्जमवारुन्धत । तान्तेनावरुन्धे । यत्पितृभ्यः करोति । यामेव पितर

ऊर्जमवारुन्धत ।

तान्तेनावरुन्धे । यदावसथेऽन्नं हरन्ति । यामेव मनुष्या ऊर्जमवारुन्धत । तान्तेनावरुन्धे

। यद्दक्षिणान्ददाति ।।55।।

140905

यामेव पशव ऊर्जमवारुन्धत । तान्तेनावरुन्धे । यच्चातुर्मास्यैर्यजते । यामेवासुरा ऊर्जमवारुन्धत ।

तान्तेनावरुन्धे ।

भवत्यात्मना । परास्य भ्रातृव्यो भवति । विराजो वा एषा विक्रान्तिः । यच्चातुर्मास्यानि

। वैश्वदेवेनास्मिल्लोँके प्रत्यतिष्ठत् । वरुणप्रघासैरन्तरिक्षे ।

साकमेधैरमुष्मिल्लोँके । एष ह त्वावैतथ्सर्वं भवति । य एवँव्विद्वांश्चातुर्मास्यैर्यजते ।।56।।

140900

मनुष्या अपश्यञ्चमसङ्कृतस्य पूर्ण स्वधामसुरा अपश्यञ्चमसङ्कृतस्य पूर्ण स्वधामसुरा

ददात्यतिष्ठच्चत्वारि च ।।9।।

141001

अग्निर्वाव सँव्वथ्सरः । आदित्यः परिवथ्सरः । चन्द्रमा इदावथ्सरः । वायुरनुवथ्सरः । यद्वैश्वदेवेन

यजते । अग्निमेव

तथ्सँव्वथ्स॒रमा॑प्नोति । तस्मा॑द्वैश्वदे॒वेन॒ यज॑मानः । सँव्व॒थ्स॒रीणा॑ꣳ स्व॒स्तिमाशा॑स्त॒
इत्याशा॑सीत । यद्व॑रुणप्रघ॒ासैर्यज॑ते । आ॒दि॒त्यमे॒व
तत्प॑रिवथ्स॒रमा॑प्नोति ।।57।।
141002
तस्मा॑द्वरुणप्रघ॒ासैर्यज॑मानः । प॒रि॒व॒थ्स॒रीणा॑ꣳ स्व॒स्तिमाशा॑स्त॒ इत्याशा॑सीत । यथ्सा॑कमे॒धैर्यज॑ते ।
च॒न्द्रम॑समे॒व
तदि॑दावथ्स॒रमा॑प्नोति । तस्मा॑त्साकमे॒धैर्यज॑मानः । इ॒दा॒व॒थ्स॒रीणा॑ꣳ स्व॒स्तिमाशा॑स्त॒
इत्याशा॑सीत । यत्पि॑तृय॒ज्ञेन॒ यज॑ते । दे॒वाने॒व तद॒न्वव॑स्यति ।
अथ॒वा अ॑स्य वा॒युश्चा॑नुवथ्स॒रश्चाप्रीता॒वुच्छि॑ष्येते । यच्छु॑नासी॒रीये॑ण॒ यज॑ते ।।58।।
141003
वा॒युमे॒व तद॑नुवथ्स॒रमा॑प्नोति । तस्मा॑च्छुनासी॒रीये॑ण॒ यज॑मानः । अ॒नु॒व॒थ्स॒रीणा॑ꣳ स्व॒स्तिमाशा॑स्त॒
इत्याशा॑सीत । सँव्व॒थ्स॒रँव्वा
ए॒ष ई॑प्स॒तीत्या॑हुः । यश्चा॑तु॒र्मा॒स्यैर्यज॑त॒ इति॑ । ए॒ष ह॒ त्वै सँव्वथ्स॒रमा॑प्नोति
। य ए॒वँव्वि॒द्वाꣳश्चा॑तु॒र्मा॒स्यैर्यज॑ते । विश्वे॑ दे॒वास्सम॑यजन्त ।
ते॑ऽग्निमे॒वाय॑जन्त । त ए॒तँल्लोकम॑जयन्न् ।।59।।
141004
यस्मि॑न्न॒ग्निः । यद्वै॑श्वदे॒वेन॒ यज॑ते । ए॒तमे॒व ल॒ोकञ्ज॑यति । यस्मि॑न्न॒ग्निः । अ॒ग्नेरे॒व
सायु॑ज्य॒मुपै॑ति । य॒दा वै॑श्वदे॒वेन॒ यज॑ते ।
अथ॑ सँव्वथ्स॒रस्य॑ गृ॒हप॑तिमाप्नोति । य॒दा सँव्वथ्स॒रस्य॑ गृ॒हप॑तिम॒ाप्नोति॑ । अथ॑ सहस्रय॒ाजिन॑माप्नोति
। य॒दा स॑हस्रय॒ाजिन॑म॒ाप्नोति॑ ।।60।।
141005
अथ॑ गृहमे॒धिन॑माप्नोति । य॒दा गृ॑हमे॒धिन॑म॒ाप्नोति॑ । अथा॒ग्निर्भ॑वति । य॒दाग्निर्भव॑ति
। अथ॒ गौर्भ॑वति । ए॒षा वै वै॑श्वदे॒वस्य॒
मात्रा॑ । ए॒तद्वा ए॒तेषा॑मव॒मम् । अतो॑त॒ो वा उत्त॑राणि॒ श्रेयाꣳ॑सि भवन्ति । यद्विश्वे॑ दे॒वास्स॒मय॑जन्त
। तद्वै॑श्वदे॒वस्य॑ वैश्वदेव॒त्वम् ।।61।।
141006
अथा॑दि॒त्यो वरु॑ण॒ꣳ रा॑जानँव्वरुणप्रघ॒ासैर॑यजत । स ए॒तँल्लोकम॑जयत् । यस्मि॑न्नादि॒त्यः ।
यद्व॑रुणप्रघ॒ासैर्यज॑ते । ए॒तमे॒व
ल॒ोकञ्ज॑यति । यस्मि॑न्नादि॒त्यः । आ॒दि॒त्यस्यै॒व सायु॑ज्य॒मुपै॑ति । यदा॑दि॒त्यो वरु॑ण॒ꣳ
राजा॑नँव्वरुणप्रघ॒ासैरय॑जत । तद्व॑रुणप्रघ॒ासानाँ॑व्वरुणप्रघास॒त्वम् ।
अथ॒ सोमो॒ राज॒ा छन्दाꣳ॑सि साकमे॒धैर॑यजत ।।62।।

141007
स एतँल्लोकमजयत् । यस्मिं श्चन्द्रमा विभाति । यथ्साकमेधैर्यजते । एतमेव लोकञ्जयति
। यस्मिं श्चन्द्रमा विभाति ।
चन्द्रमस एव सायुज्यमुपैति । सोमो वै चन्द्रमाः । एष ह त्वै साक्षाथ्सोमं भक्षयति
। य एवँव्विद्वान्थ्साकमेधैर्यजते । यथ्सोमश्च राजा छन्दाꣳसि
च समैधन्त ।।63।।
141008
तथ्साकमेधानाꣳ साकमेधत्वम् । अथर्तवꣳ पितरꣳ प्रजापतिं पितरं पितृयज्ञेनायजन्त
। त एतँल्लोकमजयन् । यस्मिन्नृतवः ।
यत्पितृयज्ञेन यजते । एतमेव लोकञ्जयति । यस्मिन्नृतवः । ऋतूनामेव सायुज्यमुपैति
। यदृतवꣳ पितरꣳ प्रजापतिं पितरं पितृयज्ञेनायजन्त ।
तत्पितृयज्ञस्य पितृयज्ञत्वम् ।।64।।
141009
अथौषधय इमन्देवन्त्र्यम्बकैरयजन्त प्रथेमहीति । ततो वै ता अप्रथन्त । य एवँव्विद्वाꣳ
स्त्र्यम्बकैर्यजते । प्रथते प्रजया
पशुभिः । अथ वायुꣳ परमेष्ठिनꣳ शुनासीरीयेणायजत । स एतँल्लोकमजयत् । यस्मिन्वायुः
। यच्छुनासीरीयेण यजते । एतमेव लोकञ्जयति ।
यस्मिन्वायुः ।।65।।
141010
वायोरेव सायुज्यमुपैति । ब्रह्मवादिनो वदन्ति । प्र चातुर्मास्ययाजी मीयता (3) न प्रमीयता (3) इति
। जीवन्वा
एष ऋतूनप्येति । यदि वसन्ता प्रमीयते । वसन्तो भवति । यदि ग्रीष्मे ग्रीष्मः
। यदि वर्षासु वर्षाः । यदि शरदि शरत् । यदि हेमन् हेमन्तः ।
ऋतुर्भूत्वा सँव्वथ्सरमप्येति । सँव्वथ्सरꣳ प्रजापतिः । प्रजापतिर्वावैषः । ।।66।।
141000
परिवथ्सरमाप्नोति शुनासीरीयेण यजतेऽजयन्थ्सहस्रयाजिनमाप्नोति वैश्वदेवत्वꣳ
साकमेधैरयजत समैधन्त पितृयज्ञत्वञ्जयति यस्मिन्वायुरहेमन्तस्त्रीणि च ।।10।।
140000
उभये युवꣳ सुरामुदस्थान्नि वै यस्य प्रातस्सवन एकैकोऽसुर्यं पवमानꣳ प्रजा
वै सत्रमासताग्निर्वाव सँव्वथ्सरो दश ।।10।।
उभये वा उदस्थाथ्सर्वाभिर्मध्यतोऽत्र वाव ब्राह्मणेष्वथ गृहमेधिनꣳ षट्थ्षष्टिः ।। उभये वा वैषः

।।66।।

हरिः ओम् ।। श्रीकृष्णार्पणमस्तु ।

चतुर्थ प्रपाठकस्समाप्तः

150000
तैत्तिरीयब्राह्मणे प्रथमाष्टके पंचमप्रपाठक प्रारंभः । हरिः ओम् ।
150101
अ॒ग्नेः᳚ कृत्ति॑काः । शु॒क्रं पु॒रस्ता॒ज्ज्योति॑र॒वस्ता᳚त् । प्र॒जाप॑ते रोहि॒णी । आप॑ः पु॒रस्ता॒दोष॑धयो॒ऽवस्ता᳚त् । सोम॑स्येन्व॒का
वित॑तानि । पु॒रस्ता॒द्वय॑न्तो॒ऽवस्ता᳚त् । रु॒द्रस्य॑ बा॒हू । मृ॒ग॒यव॑ः पु॒रस्ता᳚द्विक्षा॒रो॑ऽवस्ता᳚त् । आदि॑त्यै॒ पुन॑र्वसू । वात॑ः पु॒रस्ता॑दु॒आर्द्रम॒वस्ता᳚त् ।।1।।
150102
बृह॒स्पते᳚स्ति॒ष्यः॑ । जुह्व॑तः पु॒रस्ता॒द्यज॑माना अ॒वस्ता᳚त् । स॒र्पाणा॑माश्रे॒षाः । अ॒भ्या॒गच्छ॑न्तः पु॒रस्ता॑दभ्या॒नृत्य॑न्तो॒ऽवस्ता᳚त् ।
पि॒तृ॒णां म॒घाः । रु॒दन्त॑ः पु॒रस्ता॑दपभ्र॒ꣳशो॑ऽवस्ता᳚त् । अ॒र्य॒म्णः पूर्वे॒ फल्गु॑नी । जा॒या पु॒रस्ता॑दृष॒भो॑ऽवस्ता᳚त् । भग॒स्योत्त॑रे । व॒ह॒तव॑ः
पु॒रस्ता॒द्वह॑माना अ॒वस्ता᳚त् ।।2।।
150103
दे॒वस्य॑ सवि॒तुर् हस्त॑ः । प्र॒स॒वः पु॒रस्ता᳚थ्स॒नि॒र॒वस्ता᳚त् । इन्द्र॑स्य चि॒त्रा । ऋ॒तं पु॒रस्ता᳚थ्स॒त्यम॒वस्ता᳚त् । वा॒योर्निष्ट्या᳚ व्र॒तति॑ः ।
पु॒रस्ता॒दसि॑द्धिर॒वस्ता᳚त् । इ॒न्द्रा॒ग्नियो᳚र्विशा॑खे । यु॒गानि॑ पु॒रस्ता᳚त्कृ॒षमा॑णा
अ॒वस्ता᳚त् । मि॒त्रस्या॑नूरा॒धाः । अ॒भ्या॒रोह॑त्पु॒रस्ता॑द॒भ्यारू॑ढम॒वस्ता᳚त् ।।3।।
150104
इन्द्र॑स्य रोहि॒णी । शृ॒णत्पु॒रस्ता᳚त्प्रतिशृ॒णद॒वस्ता᳚त् । निर्ऋ॑त्यै मूल॒वर्ह॑णी । प्र॒ति॒भ॒ञ्जन्त॑ः पु॒रस्ता᳚त्प्रतिशृ॒णन्तो॒ऽवस्ता᳚त् ।
अ॒पां पूर्वा॑ अषा॒ढाः । वर्च॑ः पु॒रस्ता᳚थ्समि॑तिर॒वस्ता᳚त् । विश्वे᳚षान्दे॒वाना॒मुत्त॑राः । अ॒भि॒जय॑त्पु॒रस्ता॑दु॒भिजि॑तम॒वस्ता᳚त् । विष्णो᳚श्श्रो॒णा पृ॒च्छमा॑नाः ।
पु॒रस्ता॒त्पन्था॑ अ॒वस्ता᳚त् ।।4।।
150105
वसू॑ना॒ꣳ श्रवि॑ष्ठाः । भू॒तं पु॒रस्ता᳚द्भूति॑र॒वस्ता᳚त् । इन्द्र॑स्य श॒तभि॑षक् । वि॒श्वव्य॑चाः पु॒रस्ता᳚द्विश्वक्षि॑तिर॒वस्ता᳚त् । अ॒जस्यैक॑पद॒ः
पूर्वे᳚ प्रोष्ठप॒दाः । वै॒श्वा॒न॒रं पु॒रस्ता᳚द्वैश्वावस॒वम॒वस्ता᳚त् । अहे᳚र्बु॒ध्नियस्योत्त॑रे । अ॒भि॒षि॒ञ्चन्त॑ः पु॒रस्ता॑दभिषु॒ण्वन्तो॒ऽवस्ता᳚त् । पू॒ष्णो रे॒वती᳚ । गाव॑ः
पु॒रस्ता᳚द्वथ्सा अ॒वस्ता᳚त् । अ॒श्विनो॑रश्व॒युजौ᳚ । ग्राम॑ः पु॒रस्ता᳚थ्सेना॒ऽवस्ता᳚त् । य॒मस्या॑प॒भर॑णीः । अ॒प॒कर्ष॑न्तः पु॒रस्ता॑दप॒वह॑न्तो॒ऽवस्ता᳚त् । पू॒र्णा

पश्चाद्यत्तं देवा अदधुः ।।5।।
150100
आर्द्रमवस्ताद्वहमाना अवस्तादभ्यारूढमवस्तात्पन्था अवस्ताद्वथ्सा अवस्तात्पञ्च च ।।1।।
150201
यत्पुण्यन्नक्षत्रम् । तद्बट्कुर्वीतोपव्युषम् । यदा वै सूर्य उदेति । अथ नक्षत्रन्नैति
। यावति तत्र सूर्यो गच्छेत् । यत्र जघन्यं
पश्येत् । तावति कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । एवꣳ ह वै यज्ञेषुञ्च
शतद्युम्नञ्च मात्थ्स्यो निरवसाययाञ्चकार ।।6।।
150202
यो वै नक्षत्रियं प्रजापतिंव्वेद । उभयोगरेनल्लोकयोर्विदुः । हस्त एवास्य हस्तः
। चित्रा शिरः । निष्ट्या हृदयम् । ऊरू
विशाखे । प्रतिष्ठाऽनूराधाः । एष वै नक्षत्रियꣳ प्रजापतिः । य एवव्वेद । उभयोरेनल्लोकयोर्विदुः
।।7।।
150203
अस्मिंश्चामुष्मिंश्च । याङ्कामयेत दुहितरं प्रिया स्यादिति । तान्निष्ट्यायान्दद्यात्
। प्रियैव भवति । नेव तु पुनरागच्छति ।
अभिजिन्नाम नक्षत्रम् । उपरिष्टादषाढानाम् । अवस्ताच्छ्रोणायै । देवासुरास्सय्यँत्ता
आसन्न् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन्न् ।।8।।
150204
यदभ्यजयन्न् । तदभिजितोऽभिजित्त्वम् । यङ्कामयेतानपजय्यञ्जयेदिति । तमेतस्मिन्नक्षत्रे
यातयेत् । अनपजय्यमेव जयति ।
पापपराजितमिव तु । प्रजापतिꣳ पशूनसृजत । ते नक्षत्त्रन्नक्षत्त्रमुपातिष्ठन्त । ते
समावन्त एवाभवन्न् । ते रेवतीमुपातिष्ठन्त ।।9।।
150205
ते रेवत्यां प्राभवन्न् । तस्माद्रेवत्यां पशूनाङ्कुर्वीत । यत्किञ्चार्वाचीनꣳ
सोमात् । प्रैव भवन्ति । सलिलव्वाँ इदमन्तरासीत् ।
यदतरन्न् । तत्तारकाणान्तारकत्वम् । यो वा इह यजते । अमुꣳ स लोकन्नक्षते ।
तन्नक्षत्राणान्नक्षत्रत्वम् ।।10।।
150206
देवगृहा वै नक्षत्राणि । य एवँव्वेद । गृह्येव भवति । यानि वा इमानि पृथिव्याश्चित्राणि । तानि
नक्षत्राणि ।
तस्मादश्लीलनाम श्चित्रे । नावस्येन्न यजेत । यथा पापाहे कुरुते । तादृगेव तत्

। देवनक्षत्राणि वा अन्यानि ।।11।।
150207
यमनक्षत्राण्यन्यानि । कृत्तिकाः प्रथमम् । विशाखे उत्तमम् । तानि देवनक्षत्राणि ।
अनूराधाः प्रथमम् ।
अपभरणीरुत्तमम् । तानि यमनक्षत्राणि । यानि देवनक्षत्राणि । तानि दक्षिणेन परियन्ति । यानि
यमनक्षत्राणि ।।12।।
150208
तान्युत्तरेण । अन्वेषामराथ्स्मेति । तदनूराधाः । ज्येष्ठमेषामवधिष्मेति । तज्ज्येष्ठघ्नी
। मूलमेषावृक्षामेति । तन्मूलवर्हणी ।
यन्नासहन्त । तदषाढाः । यदश्लोणत् ।।13।।
150209
तच्छ्रोणा । यदशृणोत् । तच्छ्रविष्ठाः । यच्छतमभिषज्यन् । तच्छतभिषक् । प्रोष्ठपदेषूदयच्छन्त ।
रेवत्यामरवन्त ।
अश्वयुजोरयुञ्जत । अपभरणीष्वपावहन् । तानि वा एतानि यमनक्षत्राणि । यान्येव
देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह
एव कुरुते ।।14।।
150200
चकारैवव्वेदोभयोरेनल्लोकयोर्विदुरजयन्रेवतीमुपातिष्ठन्त नक्षत्रत्वमन्यानि
यानि यमनक्षत्राण्यश्लोणद्यमनक्षत्राणि त्रीणि च ।।2।।
150301
देवस्य सवितुः प्रातः प्रसवः प्राणः । वरुणस्य सायमासवोऽपानः । यत्प्रतीचीनं
प्रातस्तनात् । प्राचीनँ सङ्गवात् । ततो
देवा अग्निष्टोमन्निरमिमत । तत्तदात्तवीर्यन्निर्मार्गः । मित्रस्य सङ्गवः । तत्पुण्यन्तेजस्व्यहः
। तस्मात्तर्हि पशवस्समायन्ति । यत्प्रतीचीनँ सङ्गवात् ।।15।।
150302
प्राचीनं मध्यन्दिनात् । ततो देवा उक्थ्यन्निरमिमत । तत्तदात्तवीर्यन्निर्मार्गः ।
बृहस्पतेर्मध्यन्दिनः । तत्पुण्यन्तेजस्व्यहः ।
तस्मात्तर्हि तेक्ष्णिष्ठन्तपति । यत्प्रतीचीनं मध्यंदिनात् । प्राचीनमपराह्णात्
। ततो देवाष्षोडशिनन्निरमिमत । तत्तदात्तवीर्यन्निर्मार्गः ।।16।।
150303
भगस्यापराह्णः । तत्पुण्यन्तेजस्व्यहः । तस्मादपराह्णे कुमार्यो भगमिच्छमानाश्चरन्ति
। यत्प्रतीचीनमपराह्णात् । प्राचीनँ

सायात् । ततो देवा अतिरात्रन्निरमिमत । तत्तदात्तवीर्यन्निर्मार्गः । वरुणस्य सायम्
। तत्पुण्यन्तेजस्व्यहः । तस्मात्तर्हि नानृतव्वँदेत् ।।17।।
150304
ब्राह्मणो वा अष्टाविꣳशो नक्षत्राणाम् । समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि
। चत्वार्यश्लीलानि । तानि नव । यच्च
परस्तान्नक्षत्राणाय्यँच्चावस्तात् । तान्येकादश । ब्राह्मणो द्वादशः । य एवव्विद्वान्थ्सव्वँथ्सरव्व्रँतञ्चरति
। सव्वँथ्सरेणैवास्य व्रतङ्गुप्तं भवति ।
समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि । चत्वार्यश्लीलानि । तानि नव । आग्नेयी
रात्रिः । ऐन्द्रमहः । तान्येकादश । आदित्यो द्वादशः । य
एवव्विद्वान्थ्सव्वँथ्सरव्व्रँतञ्चरति । सव्वँथ्सरेणैवास्य व्रतङ्गुप्तं भवति ।।18।।
150300
सङ्गवाथ्षोडशिनन्निरमिमत तत्तदात्तवीर्यन्निर्मार्गो वदेद्भवति समानस्याह्नः पञ्च
पुण्यानि नक्षत्राण्यष्टौ च ।।3।।
150401
ब्रह्मवादिनो वदन्ति । कति पात्राणि यज्ञं वहन्तीति । त्रयोदशेति ब्रूयात् । स यद्ब्रूयात् । कस्तानि
निरमिमीतेति ।
प्रजापतिरिति ब्रूयात् । स यद्ब्रूयात् । कुतस्तानि निरमिमीतेति । आत्मन इति ।
प्राणापानाभ्यामेवोपाꣳश्वन्तर्यामौ निरमिमीत ।।19।।
150402
व्यानादुपाꣳशुसवनम् । वाच ऐन्द्रवायवम् । दक्षक्रतुभ्यां मैत्रावरुणम् । श्रोत्रादाश्विनम्
। चक्षुषश्शुक्रामन्थिनौ । आत्मन
आग्रयणम् । अङ्गेभ्य उक्थ्यम् । आयुषो ध्रुवम् । प्रतिष्ठाया ऋतुपात्रे । यज्ञं वाव
तं प्रजापतिर्निरमिमीत । स निर्मितो नाद्ध्रियत सम्म्लीयत । स
एतान्प्रजापतिरपिवापानपश्यत् । तान्निरवपत् । तैर्वै स यज्ञमप्यवपत् । यदपिवापा भवन्ति । यज्ञस्य
धृत्या असम्लँयाय ।।20।।
150400
उपाꣳश्वन्तर्यामौ निरमिमीतामिमीत षट्च ।।4।।
150501
ऋतमेव परमेष्ठि । ऋतन्नात्येति किञ्चन । ऋते समुद्र आहितः । ऋते भूमिरिय
श्रिता । अग्निस्तिग्मेन शोचिषा । तप
आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये

। स॒त्येन॒ परि॑वर्तये । तप॑सा॒ऽस्यानु॑वर्तये । शि॒वेना॒स्योप॑वर्तये ।
श॒ग्मेना॑स्या॒भिव॑र्तये । तदृ॒तन्तथ्स॒त्यम् । तद्व्रतन्तच्छ॑केयम् । तेन॑ शकेय॒न्तेन॑ राध्यासम् ।। 21 ।।
150502
यद्धर्मः॑ प॒र्यव॑र्तयत् । अन्ता॑न्पृथि॒व्या दि॒वः । अ॒ग्निरीशा॑न॒ ओज॑सा । वरु॑णो धी॒तिभि॑स्स॒ह
। इन्द्रो॑ म॒रुद्भि॒स्सखि॑भिस्स॒ह ।
अ॒ग्निस्ति॒ग्मेन॑ शो॒चिषा॑ । तप॒ आक्रा॑न्तमु॒ष्णिहा॑ । शिर॒स्तप॒स्याहि॑तम् । वै॒श्वा॒न॒रस्य॒
तेज॑सा । ऋ॒तेना॑स्य॒ निव॑र्तये । स॒त्येन॒ परि॑वर्तये । तप॑सा॒ऽ
स्यानु॑वर्तये । शि॒वेना॒स्योप॑वर्तये । श॒ग्मेना॑स्या॒भिव॑र्तये । तदृ॒तन्तथ्स॒त्यम् । तद्व्रतन्तच्छ॑केयम्
। तेन॑ शकेय॒न्तेन॑ राध्यासम् ।। 22 ।।
150503
यो अ॒स्याः॑ पृ॑थि॒व्यास्त्व॒चि । नि॒व॒र्तय॒त्योष॑धीः । अ॒ग्निरीशा॑न॒ ओज॑सा । वरु॑णो धी॒तिभि॑स्स॒ह
। इन्द्रो॑ म॒रुद्भि॒स्सखि॑भिस्स॒ह ।
अ॒ग्निस्ति॒ग्मेन॑ शो॒चिषा॑ । तप॒ आक्रा॑न्तमु॒ष्णिहा॑ । शिर॒स्तप॒स्याहि॑तम् । वै॒श्वा॒न॒रस्य॒
तेज॑सा । ऋ॒तेना॑स्य॒ निव॑र्तये । स॒त्येन॒ परि॑वर्तये । तप॑सा॒ऽ
स्यानु॑वर्तये । शि॒वेना॒स्योप॑वर्तये । श॒ग्मेना॑स्या॒भिव॑र्तये । तदृ॒तन्तथ्स॒त्यम् । तद्व्रतन्तच्छ॑केयम्
। तेन॑ शकेय॒न्तेन॑ राध्यासम् ।।23।।
150504
एकं॒ मास॒मुद॑सृजत् । प॒र॒मे॒ष्ठी प्र॒जाभ्यः॑ । तेना॑भ्यो॒ मह॒ आव॑हत् । अ॒मृतं॒ मर्त्या॑भ्यः । प्र॒जामनु॒
प्रजा॑यसे । तदु॑ ते
मर्त्या॒मृत॑म् । येन॒ मासा॑ अर्धमा॒साः । ऋ॒तवः॑ परिवथ्स॒राः । येन॒ ते ते॑ प्रजापते । ई॒जा॒नस्य॒
न्यव॑र्तयन्न् । तेना॒हम॒स्य ब्रह्म॑णा । निव॑र्तयामि
जी॒वसे॑ । अ॒ग्निस्ति॒ग्मेन॑ शो॒चिषा॑ । तप॒ आक्रा॑न्तमु॒ष्णिहा॑ । शिर॒स्तप॒स्याहि॑तम् ।
वै॒श्वा॒न॒रस्य॒ तेज॑सा । ऋ॒तेना॑स्य॒ निव॑र्तये । स॒त्येन॒ परि॑वर्तये ।
तप॑सा॒ऽस्यानु॑वर्तये । शि॒वेना॒स्योप॑वर्तये । श॒ग्मेना॑स्या॒भिव॑र्तये । तदृ॒तन्तथ्स॒त्यम्
। तद्व्रतन्तच्छ॑केयम् । तेन॑ शकेय॒न्तेन॑ राध्यासम् ।।24।।
150500
(परि॑वर्तये स॒हाभिव॑र्तय उ॒ष्णिहा॑ राध्यास॒न्न्यव॑र्तय॒न्नुप॑वर्तये च॒त्वारि॑ च) । ऋ॒तमे॒व
षोड॑श । यद्धर्मो॑ यो अ॒स्याः सप्तद॑शसप्तदश ।
एकं॒ मासं॒ चतु॑र्विꣳशतिः ।।5।।
150601
दे॒वा वै यद्य॒ज्ञेऽकु॑र्वत । तदसु॑रा अकुर्वत । तेऽसु॑रा ऊ॒र्ध्वं पृ॒ष्ठेभ्यो॒ नाप॑श्यन्न् । ते केशा॒नग्रे॑ऽवपन्त

। अथ॒ श्मश्रू॑णि ।
अथो॑पप॒क्षौ । तत॒स्तेऽवा॑ञ्च आयन्न् । परा॑ऽभवन्न् । यस्यै॒वव्वँप॑न्ति । अवा॑ङेति ।।25।।
150602
अथो॒ परै॒व भ॑वति । अथ॑ दे॒वा ऊ॒र्ध्वं पृ॒ष्ठेभ्यो॑ऽपश्यन्न् । त उ॑पप॒क्षावग्रे॑ऽवपन्त । अथ॒ श्मश्रू॑णि ।
अथ॒ केशा॑न् ।
तत॒स्ते॑ऽभवन्न् । सु॒व॒र्गल्लो॒कमा॑यन्न् । यस्यै॒वव्वँप॑न्ति । भव॑त्या॒त्मना॑ । अथो॑ सुव॒र्गल्लो॒कमे॑ति ।।26।।
150602
अथै॒तन्मनु॑र्व॒प्त्रे मि॑थु॒नम॑पश्यत् । स श्मश्रू॒ण्यग्रे॑ऽवपत । अथो॑पप॒क्षौ । अथ॒ केशा॑न्
। तत॒ो वै स प्राजा॑यत प्र॒जया॑ प॒शुभि॑ः ।
यस्यै॒वव्वँप॑न्ति । प्र प्र॒जया॑ प॒शुभि॑र्मिथु॒नैर्जा॑यते । दे॒वा॒सु॒रास्सय्यँ॑त्ता आसन्न्
। ते स॑व्वँथ्स॒रे व्याय॑च्छन्त । तान्दे॒वाश्चा॑तु॒र्मा॒स्यैरे॒वाभि प्रायु॑ञ्जत ।।27।।
150603
वै॒श्व॒दे॒वेन॑ च॒तुरो॑ मा॒सो॑ऽवृञ्जतेन्द्र॑राजानः । ताञ्छी॒र्॒षन्नि चाव॑र्तयन्त॒ परि॑
च । व॒रु॒ण॒प्र॒घा॒सैश्च॒तुरो॑ मा॒सो॑ऽवृञ्जत॒ वरु॑णराजानः ।
ताञ्छी॒र्॒षन्नि चाव॑र्तयन्त॒ परि॑ च । सा॒क॒मे॒धैश्च॒तुरो॑ मा॒सो॑ऽवृञ्जत॒ सोम॑राजानः ।
ताञ्छी॒र्॒षन्नि चाव॑र्तयन्त॒ परि॑ च । या स॑व्वँथ्स॒र उ॑पजी॒वाऽऽसी॑त् ।
ताम॑षामवृञ्जत । ततो॑ दे॒वा अभ॑वन्न् । पराऽसु॑राः ।।28।।
150604
य ए॒वँव्वि॒द्वाꣳश्चा॑तु॒र्मा॒स्यैर्यज॑ते । भ्रातृ॑व्यस्यै॒व मा॒सो वृ॒क्त्वा । शी॒र्॒षन्नि
च॑ व॒र्तय॑ते॒ परि॑ च । यैषा स॑व्वँथ्स॒र उ॑पजी॒वा । वृ॒ङ्क्ते
तां भ्रातृ॑व्यस्य । क्षु॒धाऽस्य॒ भ्रातृ॑व्य॒ꣳ परा॑ भवति । लो॒हि॒ता॒य॒सेन॒ निव॑र्तयते ।
यद्वा इ॒माम॒ग्निर्॒ ऋ॒तावाग॑ते निव॒र्तय॑ति । ए॒तदे॒वैनाꣳ॑ रू॒पङ्कृ॒त्वा
निव॑र्तयति । सा तत॒श्श्वश्व॒ो भूय॑सी॒ भव॑न्त्येति ।।29।।
150605
प्रजा॑यते । य ए॒वँव्वि॒द्वाल्लो॑हितायसेन॑ निव॒र्तय॑ते । ए॒तदे॒व रू॒पङ्कृ॒त्वा निव॑र्तयते
। स तत॒श्श्वश्व॒ो भू॒या॒न्भव॑न्नेति । प्रैव जा॑यते ।
त्रे॒ण्या श॑ल॒ल्या निव॑र्तयेत । त्रीणि॑त्रीणि वै दे॒वाना॑मृ॒द्धानि॑ । त्रीणि॒ छन्दाꣳ॑सि ।
त्रीणि॒ सव॑नानि । त्रय॑ इ॒मे ल॒ोकाः ।।30।।
150606
ऋ॒ध्यामे॒व तद्वी॒र्यं॑ ए॒षु लो॒केषु॒ प्रति॑ तिष्ठति । यच्चा॑तु॒र्मा॒स्यया॒ज्या॑त्मन॒ो नाव॒द्येत्
। दे॒वेभ्य॒ आव॑ृश्च्येत । च॒तृ॒षु च॑तृ॒षु॒ मासे॑षु

निर्वर्तयेत । प॒रोक्ष॑मे॒व तद्दे॒वेभ्य॑ आ॒त्मनोऽव॑द्यत्यना॑व्रस्काय । दे॒वाना॒व्वाँ ए॒ष
आनी॑तः । यश्चा॑तु॒र्मास्ययाजी । य ए॒वव्विँ॒द्वान्नि च॑ व॒र्तय॑ते॒ परि॑ च ।
दे॒वता॑ ए॒वाप्यै॑ति । नास्य॑ रु॒द्रः प्र॒जां प॒शून॒भि म॑न्यते ।।31।।
150600
ए॒त्ये॒त्य॒यु॒ञ्ज॒तासु॑रा एति लो॒का म॑न्यते ।।6।।
150701
आयु॑षः प्रा॒णः सन्त॑नु । प्रा॒णाद॑पा॒नः सन्त॑नु । अ॒पा॒नाद्व्या॒नः सन्त॑नु । व्या॒नाच्चक्षु॒स्सन्त॑नु
। चक्षु॑ष॒श्श्रोत्र॒ꣳ सन्त॑नु ।
श्रोत्रा॒न्मन॒स्सन्त॑नु । मन॑सो॒ वाच॒ꣳ सन्त॑नु । वा॒च आ॒त्मान॒ꣳ सन्त॑नु । आ॒त्मनः॑
पृ॒थि॒वीः सन्त॑नु । पृ॒थि॒व्या अ॒न्तरि॑क्ष॒ꣳ सन्त॑नु । अ॒न्तरि॑क्षा॒द्दिव॒ꣳ
सन्त॑नु । दि॒व॒स्सु॒व॒स्सन्त॑नु ।।32।।
150700
अ॒न्तरि॑क्ष॒ꣳ सन्त॑नु॒ द्वे च॑ ।।7।।
150801
इन्द्रो॑ दधी॒चो अ॒स्थभि॑ः । वृ॒त्राण्यप्र॑तिष्कुतः । ज॒घान॑ नव॒तीर्नव॑ । इ॒च्छन्नश्व॑स्य॒ यच्छिर॑ः ।
पर्व॑ते॒ष्वप॑श्रितम् ।
तद्वि॑दच्छर्य॒णाव॑ति । अत्राह॒ गोरम॑न्वत । नाम॒ त्वष्टु॑रपी॒च्य॑म् । इ॒त्था च॒न्द्रम॑सो गृ॒हे
। इन्द्र॒मिद्गा॒थिनो॑ बृ॒हत् ।। 33 ।।
150802
इन्द्र॑म॒र्केभि॑र॒र्किण॑ः । इन्द्र॒व्वाँणी॑रनूषत । इन्द्र॒ इद्धर्यो॒स्सचा॑ । संमि॑श्ल॒ आव॑चो॒
युजा॑ । इन्द्रो॑ व॒ज्री हि॑र॒ण्यय॑ः । इन्द्रो॑
दी॒र्घाय॒ चक्ष॑से । आ सूर्य॒ꣳ रोहयद्दि॒वि । विगोभि॒रद्रि॒मैरयत् । इन्द्र॒ वाजे॑षु नो अव । स॒हस्र॑प्रधनेषु
च ।। 34 ।।
150803
उ॒ग्र उ॒ग्राभि॑रू॒तिभि॑ः । तमिन्द्र॒व्वाँजयामसि । म॒हे वृ॒त्राय॒ हन्त॑वे । स वृषा॑ वृष॒भो भु॑वत् । इन्द्र॒स्स
दाम॑ने कृ॒तः ।
ओजि॑ष्ठ॒स्स बले॑ हि॒तः । द्यु॒म्नी श्लो॒की स सो॒म्य॑ः । गि॒रा वज्रो॒ न सम्भृ॑तः । सब॑लो॒
अन॑पच्युतः । व॒व॒क्षुरु॒ग्रो अस्तृ॑तः ।। 35 ।।
150800
बृ॒हच्चास्तृ॑तः ।। 8 ।।
150901
दे॒वा॒सु॒रास्सय्यँ॑त्ता आसन्न् । स प्र॒जाप॑ति॒रिन्द्र॒ञ्ज्येष्ठं पु॒त्रमप॒ न्य॑धत्त । नेदे॑न॒मसु॒रा

बलीयाꣳसोऽहनन्निति । प्रह्लादो ह वै
कायाधवः । विरोचनꣳ स्वं पुत्रमप न्यधत्त । नेदेनन्देवा अहनन्निति । ते देवाः
प्रजापतिमुपसमेत्योचुः । नाराजकस्य यूद्धमस्ति ।
इन्द्रमन्विच्छामेति । तय्यँज्ञक्रतुभिरन्वैच्छन् ।। 36 ।।
150902 तय्यँज्ञक्रतुभिर्नान्वविन्दन् । तमिष्टिभिरन्वैच्छन् । तमिष्टिभिरन्वविन्दन्
। तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय
इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । तस्मा
एतमाग्नावैष्णवमेकादशकपालन्दीक्षणीयन्निरवपन्
। तदपद्रुत्यातन्वत । तान्पत्नीसय्याँजान्त
उपानयन् ।। 37 ।।
150903
ते तदन्तमेव कृत्वोदद्रवन् । ते प्रायणीयमभि समारोहन् । तदपद्रुत्यातन्वत
। ताञ्छय्य्वँन्त उपानयन् । ते तदन्तमेव
कृत्वोदद्रवन् । त आतिथ्यमभिसमारोहन् । तदपद्रुत्यातन्वत । तानिडान्त उपानयन्
। ते तदन्तमेव कृत्वोदद्रवन् । तस्मादेता एतदन्ता
इष्टयस्सन्तिष्ठन्ते ।।38।।
150904
एवꣳ हि देवा अकुर्वत । इति देवा अकुर्वत । इत्यु वै मनुष्याः कुर्वते । ते देवा ऊचुः । यद्वा
इदमुच्चैर्यज्ञेन चराम ।
तन्नोऽसुराः पाप्माऽनुविन्दन्ति । उपाꣳशूपसदा चराम । तथा नोऽसुराः पाप्मा नानुवेथ्स्यन्तीति
। त उपाꣳशूपसदमतन्वत । त्रिस एव
सामिधेनीरनूच्य ।।39।।
150905
स्रुवेणाघारमाघार्य । तिस्रः पराचीराहुतीर् हुत्वा । स्रुवेणोपसदञ्जुहवाञ्चक्रुः
। उग्रव्वँचो अपावधीन्त्वेषव्वँचो अपावधीꣳ
स्वाहेति । अशनयापिपासे ह वा उग्रव्वँचः । एनश्च वैरहत्यञ्च त्वेषव्वँचः ।
एतꣳ ह वाव तच्चतुर्धाविहितं पाप्मानन्देवा अपजघ्निरे । तथो
एवैतदेवव्विद्यजमानः । तिस्र एव सामिधेनीरनूच्य । स्रुवेणाघारमाघार्य ।।40।।
150906
तिस्रः पराचीराहुतीरहुत्वा । स्रुवेणोपसदञ्जुहोति । उग्रव्वँचो अपावधीन्त्वेषव्वँचो
अपावधीꣳ स्वाहेति । अशनयापिपासे

ह॒ वा उ॒ग्रव्वँच॑ः । एन॑श्च॒ वैर॑हत्यञ्च॒ त्वे॒षव्वँच॑ः । ए॒तमे॒व तच्च॑तु॒र्धाविहि॒तं पा॒प्मान॒य्यँज॑मा॒नोऽप॑हते
। ते॑ऽभि॒नीयै॒वाह॑ः प॒शुमाऽल॑भन्त । अह्न॑ ए॒व
तद्दे॒वा अर्व॑र्तिं पा॒प्मान॑ं मृ॒त्युमप॑जघ्निरे । तेना॑भि॒नीये॑व॒ रात्रे॑ः प्राच॑रन्न् ।
रात्रि॑या ए॒व तद्दे॒वा अर्व॑र्तिं पा॒प्मान॑ं मृ॒त्युमप॑जघ्निरे ।।41।।
150907
तस्मा॑दभि॒नीयै॒वाह॑ः प॒शुमाल॑भेत । अह्न॑ ए॒व तद्यज॑मा॒नोऽर्व॑र्तिं पा॒प्मान॒ं भ्रातृ॑व्या॒नप॑नुदते
। तेना॑भि॒नीये॑व॒ रात्रे॑ः प्रच॑रेत् ।
रात्रि॑या ए॒व तद्यज॑मा॒नोऽर्व॑र्तिं पा॒प्मान॒ं भ्रातृ॑व्या॒नप॑नुदते । स ए॒ष उ॑पवस॒थीयेऽह॑न्द्विदेव॒त्य॑ः
प॒शुराल॑भ्यते । द्व॒यव्वाँ अ॒स्मिल्लोँ॒के यज॑मानः । अस्थि॑
च मा॒ꣳसञ्च॑ । अस्थि॑ चै॒व तेन॑ मा॒ꣳसञ्च॒ यज॑मान॒स्सस्कु॑रुते । ता वा ए॒ता॑ः पञ्च॑
दे॒वता॑ः । अ॒ग्नीषोमा॑व॒ग्निर्मि॒त्रावरु॑णौ ।।42।।
150908
प॒ञ्चप॒ञ्ची वै यज॑मानः । त्वङ्मा॒ꣳस स्नावाऽस्थि॑ म॒ज्जा । ए॒तमे॒व
तत्प॑ञ्चधाविहि॒तमा॒त्मान॑व्वँरुणपा॒शान्मु॑ञ्चति । भे॒ष॒जता॑यै
निर्वरुण॒त्वाय॑ । तꣳ स॒प्तभि॒श्छन्दो॑भिः प्रा॒तर॑ह्वयन्न् । तस्मा॑थ्स॒प्त च॑तुरु॒त्त॒राणि॒
छन्दा॑ꣳसि प्रातरनुवा॒केऽनू॑च्यन्ते । तमे॒तयो॑पस॒मेत्योपा॑सीदन्न् । उपा॑स्मै
गायता नर॒ इति॑ । तस्मा॑दे॒तया॑ बहिष्पवमा॒न उ॑प॒सद्य॑ः ।।43।।
150900
ऐ॒च्छ॒न्न॒न॒य॒स्ति॒ष्ठ॒न्ते॒ऽनूच्या॒नूच्य॑ स्रु॒वेणा॑घा॒रमा॒घार्य॒ रात्रि॑या ए॒व
तद्दे॒वा अर्व॑र्तिं पा॒प्मान॑ं मृ॒त्युमप॑जिघ्निरे मि॒त्रावरु॑णौ॒ नव॑ च।।9।।
(दे॒वा यज॑मानो दे॒वा दे॒वा यज॑माने॒ यज॑मानोऽलभन्त॒ प्राच॑रल्लँभेत॒
प्रच॑रे॒दाल॑भ॒न्ताल॑भेत मृ॒त्युमप॑जघ्नि॒रे भ्रातृ॑व्यान् ।।)
151001
स स॑मु॒द्र उ॑त्तर॒तः प्राज्व॑लद्भू॒म्य॒न्तेन॑ । ए॒ष वाव स स॑मु॒द्रः । यच्चात्वा॑लः । ए॒ष उ॑वे॒व स भू॑म्य॒न्तः ।
यद्वे॑त्य॒न्तः ।
तदे॒तत्त्रि॑श॒लन्त्रि॑पूरु॒षम् । तस्मा॒त्तन्त्रि॑वित॒स्तङ्ख॑नन्ति । स सु॑वर्णरज॒ताभ्या॑ङ्कु॒शीभ्या॒ं
परि॑गृहीत आसीत् । तय्यँदु॒स्या अध्य॒जन॑यन्न् । तस्मा॑दादि॒त्यः ।।44।।
151002
अथ॒ यथ्सु॑वर्णरज॒ताभ्या॑ङ्कु॒शीभ्या॒ं परि॑गृहीत॒ आसी॑त् । साऽस्य॑ कौशि॒कता॑ । तन्त्रि॒वृता॒ऽभि प्रास्तु॑वत
। तन्त्रि॒वृताऽद॑दत ।
तन्त्रि॒वृताऽह॑रन्न् । याव॑ती त्रि॒वृतो॒ मात्रा॑ । तं प॑ञ्चद॒शेना॒भि प्रास्तु॑वत । तं प॑ञ्चद॒शेनाद॑दत।

तं प॑ञ्चद॒शेनाह॑रन् । याव॑ती पञ्चद॒शस्य॒ मात्रा॑ ।।45।।
151003
तः॑ स॑प्तद॒शेना॒भि प्रास्तु॑वत । तः॑ स॑प्तद॒शेनाद॑दत । तः॑ स॑प्तद॒शेनाह॑रन् । याव॑ती सप्तद॒शस्य॒ मात्रा॑ । तस्य॑ सप्तद॒शेन॑
ह्रियमा॑णस्य॒ तेज॒ो हरो॑ऽपतत् । तमे॑कवि॒ꣳशेना॒भि प्रास्तु॑वत । तमे॑कवि॒ꣳशेनाद॑दत
। तमे॑कवि॒ꣳशेनाह॑रन् । याव॑त्येकवि॒ꣳशस्य॒ मात्रा॑ । ते
यत्त्रि॒वृता॑ स्तु॒वते॑ ।।46।।
151004
त्रि॒वृतै॒व तद्यज॑माना॒माद॑दते । तन्त्रि॒वृतै॒व ह॑रन्ति । याव॑ती त्रि॒वृत॒ो मात्रा॑ । अ॒ग्निर्वै॒
त्रि॒वृत् । याव॒द्वा अ॒ग्नेर्द॑ह॑तो धू॒म
उ॒देत्यानु॒व्येति॑ । ताव॑ती त्रि॒वृत॒ो मात्रा॑ । अ॒ग्नेरे॒वैन॒न्तत् । मात्रा॒ꣳ सायु॑ज्यः
सल॒ोकता॑ङ्गमयन्ति । अथ॒ यत्प॑ञ्चद॒शेन॑ स्तु॒वते॑ । प॒ञ्चद॒शेनै॒व
तद्यज॑माना॒माद॑दते ।।47।।
151005
तं प॑ञ्चद॒शेनै॒व ह॑रन्ति । याव॑ती पञ्चद॒शस्य॒ मात्रा॑ । च॒न्द्रमा॒ वै प॑ञ्चद॒शः । ए॒ष हि
प॑ञ्चद॒श्यामा॑पक्षीयते॑ । प॒ञ्चद॒श्यामा॑पू॒र्यते॑ ।
च॒न्द्रम॑स ए॒वैन॒न्तत् । मात्रा॒ꣳ सायु॑ज्यः सल॒ोकता॑ङ्गमयन्ति । अथ॒ यथ्स॑प्तद॒शेन॑ स्तु॒वते॑
। स॒प्त॒द॒शेनै॒व तद्यज॑माना॒माद॑दते । तः॑ स॑प्तद॒शेनै॒व ह॑रन्ति ।।48।।
151006
याव॑ती सप्तद॒शस्य॒ मात्रा॑ । प्र॒जाप॑ति॒र्वै स॑प्तद॒शः । प्र॒जाप॑तेरे॒वैन॒न्तत् । मात्रा॒ꣳ सायु॑ज्यः
सल॒ोकता॑ङ्गमयन्ति । अथ॒
यदे॑कवि॒ꣳशेन॑ स्तु॒वते॑ । ए॒क॒वि॒ꣳशेनै॒व तद्यज॑माना॒माद॑दते । तमे॑कवि॒ꣳशेनै॒व
ह॑रन्ति । याव॑त्येकवि॒ꣳशस्य॒ मात्रा॑ । अ॒सौ वा आ॑दि॒त्य ए॑कवि॒ꣳशः ।
आ॒दि॒त्यस्यै॒वैन॒न्तत् ।।49।।
151007
मात्रा॒ꣳ सायु॑ज्यः सल॒ोकता॑ङ्गमयन्ति । ते कु॒श्यौ॑ । व्य॑घ्नन् । ते अ॑होरा॒त्रे अ॑भवताम्
। अह॑रे॒व सु॒वर्णा॑ऽभवत् । र॒ज॒ता रात्रिः॑ । स यदा॑दि॒त्य उ॒देति॑ ।
ए॒ताम॒ेव तथ्सु॒वर्णा॑ङ्कु॒शीमनु॒ समे॑ति । अथ॒ यद॑स्त॒मेति॑ । ए॒ताम॒ेव तद्र॑ज॒ताङ्कु॒शीमनु॒
स॒व्विँ॑शति । प्र॒ह्लादो॑ ह॒ वै का॑याधवः । वि॒रोच॑न॒ स्वं
पु॒त्रमुदा॑स्यत् । स प्र॑द॒रो॑ऽभवत् । तस्मा॑त्प्रद॒राद॑ुद॒कन्नाचा॑मेत् ।।50।।
151000

आदित्यः पञ्चदशस्य मात्राँ स्तुवते पञ्चदशेनैव तद्यजमानमाददते सप्तदशेनैव
हरन्त्यादित्यस्यैवैनं तद्विंशति चत्वारि च ।।10।।
151101
ये वै चत्वारस्स्तोमाः । कृतन्तत् । अथ ये पञ्च । कलिस्सः । तस्माच्चतुष्टोमः । तच्चतुष्टोमस्य
चतुष्टोमत्वम् । तदाहुः ।
कतमानि तानि ज्योतीꣳषि । य एतस्य स्तोमा इति । त्रिवृत्पञ्चदशस्सप्तदश एकविꣳशः ।।51।।
151102
एतानि वाव तानि ज्योतीꣳषि । य एतस्य स्तोमाः । सोऽब्रवीत् । सप्तदशेन ह्रियमाणो व्यलेशिषि ।
भिषज्यतमेति ।
तमश्विनौ धानाभिरभिषज्यताम् । पूषा करम्भेण । भारती परिवापेण । मित्रावरुणौ पयस्यया ।
तदाहुः ।।52।।
151103
यदश्विभ्यान्धानाः । पूष्णः करम्भः । भारत्यै परिवापः । मित्रावरुणयोः पयस्याऽथ
। कस्मादेतेषाꣳ हविषामिन्द्रमेव
यजन्तीति । एता ह्येनन्देवता इति ब्रूयात् । एतैर्हविर्भिरभिषज्य स्तस्मादिति
। तव्वँसवोऽष्टाकपालेन प्रातस्सवनेऽभिषज्यन् । रुद्रा
एकादशकपालेन माध्यन्दिने सवने । विश्वे देवा द्वादशकपालेन तृतीयसवने ।।53।।
151104
स यदष्टाकपालान्प्रातस्सवने कुर्यात् । एकादशकपालान्माध्यन्दिने सवने ।
द्वादशकपालाꣳस्तृतीयसवने । विलोम तद्यज्ञस्य
क्रियेत । एकादशकपालानेव प्रातस्सवने कुर्यात् । एकादशकपालान्माद्यन्दिने सवने ।
एकादशकपालाꣳस्तृतीयसवने
। यज्ञस्य सलोमत्वाय ।
तदाहुः । यद्वसूनां प्रातस्सवनम् । रुद्राणां माध्यन्दिनꣳ सवनम् । विश्वेषान्देवानान्तृतीयसवनम्
। अथ कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति ।
एता ह्येनन्देवता इति ब्रूयात् । एतैर्हविर्भिरभिषज्य स्तस्मादिति ।।54।।
151100
एकविꣳश आहुस्तृतीयसवने प्रातस्सवनं पञ्च च।।11।।
151201
तस्यावाचोऽवपादादबिभयुः । तमेतेषु सप्तसु छन्दस्स्वश्रयन् । यदश्रयन् । तच्छ्रायन्तीयस्य
श्रायन्तीयत्वम् । यदवारयन् ।

तद्वारवन्तीयस्य वारवन्तीयत्वम् । तस्यावाच एवावपादादबिभयुः । तस्मा एतानि सप्त चतुरुत्तराणि छन्दाꣳस्युपादधुः । तेषामति त्रीण्यरिच्यन्त ।
न त्रीण्युदभवन् ।।55।।
151202
स बृहतीमेवास्पृशत् । द्वाभ्यामक्षराभ्याम् । अहोरात्राभ्यामेव । तदाहुः । कतमा सा देवाक्षरा बृहती । यस्यान्तत्प्रत्यतिष्ठत् ।
द्वादश पौर्णमास्यः । द्वादशाष्टकाः । द्वादशामावास्याः । एषा वाव सा देवाक्षरा बृहती ।।56।।
151203
यस्यान्तत्प्रत्यतिष्ठदिति । यानि च छन्दाꣳस्यत्यरिच्यन्त । यानि च नोदभवन् । तानि निर्वीर्याणि हीनान्यमन्यन्त ।
साऽब्रवीद्बृहती । मामेव भूत्वा । मामुप सꣳश्रयतेति । चतुर्भिरक्षरैरनुष्टुग्बृहतीन्नोदभवत् । चतुर्भिरक्षरैꣳ᳚ पङ्क्तिर्बृहतीमत्यरिच्यत । तस्यामेतानि चत्वार्यक्षराण्यपच्छिद्यादधात् ।।57।।
151204
ते बृहती एव भूत्वा । बृहतीमुप समश्रयताम् । अष्टाभिरक्षरैरुष्णिग्बृहतीन्नोदभवत् । अष्टाभिरक्षरैस्त्रिष्टुग्बृहतीमत्यरिच्यत ।
तस्यामेतान्यष्टावक्षराण्यपच्छिद्यादधात् । ते बृहती एव भूत्वा । बृहतीमुप समश्रयताम् । द्वादशभिरक्षरैर्गायत्री बृहतीन्नोदभवत् ।
द्वादशभिरक्षरैर्जगती बृहतीमत्यरिच्यत । तस्यामेतानि द्वादशाक्षराण्यपच्छिद्यादधात् ।।58।।
151205
ते बृहती एव भूत्वा । बृहतीमुप समश्रयताम् । सोऽब्रवीत्प्रजापतिः । छन्दाꣳसि रथो मे भवत । युष्माभिरहमेतमध्वानमनु
सञ्चराणीति । तस्य गायत्री च जगती च पक्षावभवताम् । उष्णिक्च त्रिष्टुप्च प्रष्ट्यौ । अनुष्टुप्च पङ्क्तिश्च धुर्यौ । बृहत्येवोद्धिरभवत् ।
स एतञ्छन्दोरथमास्थाय । एतमध्वानमनु समचरत् । एतꣳ ह वै छन्दोरथमास्थाय । एतमध्वानमनु सञ्चरति । येनैष एतथ्सञ्चरति ।
य एवंविद्वान्थ्सोमेन यजते । य उ चैनमेवँवेद ।।59।।
151200
अभवन्वाव सा देवाक्षरा बृहत्यदधाद्द्वादशाक्षराण्यपच्छिद्यादधादास्थाय षट्च ।।12।।
अग्नेः कृत्तिका यत्पुण्यन्देवस्य सवितुर्ब्रह्मवादिनः कत्यृतमेव देवा वा आयुषः प्राणमिन्द्रो दधीचो देवासुरास्स प्रजापतिस्स समुद्रो ये वै

च॒त्वार॒स्तस्यावा॑चो॒ द्वाद॑श ।।12।।
150000
अ॒ग्ने॑ कृत्ति॑का देवगृ॒हा ऋ॒तमे॒वर्ध्या॑मे॒व ति॒स्रः परा॑ची॒र्ये वै च॒त्वारो॒ नव॑पञ्चा॒शत् ।। 59 ।।
अ॒ग्ने॑ कृत्ति॑का॒ य उ॑चैनमे॒वव्वेँ॑द ।।
हरि॑ः ओम् ।। श्रीकृष्णार्पणमस्तु ।

160000
तैत्तिरीयब्राह्मणे प्रथमाष्टके षष्ठप्रपाठक प्रारंभः । हरिः ओम् ।।
160101
अनु॑मत्यै पु॒रो॒डाश॑म॒ष्टाक॑पाल॒न्निर्व॑पति । ये प्र॒त्यञ्च॒श्शम्या॑या अव॒शीय॑न्ते । तन्नैर्॑ऋ॒तमेक॑कपालम् ।
इ॒यव्वाँ॑ अनु॑मतिः ।
इ॒यन्निर्‌ऋ॑तिः । नै॒र्‌ऋ॒तेन॒ पूर्वे॑ण॒ प्रच॑रति । पा॒प्मान॑मे॒व निर्‌ऋ॑तिं॒ पूर्वा॒न्नि॒रव॑दयते
। एक॑कपालो भवति । ए॒क॒धैव निर्‌ऋ॑तिन्नि॒रव॑दयते ।
यद॑हु॑त्वा॒ गार्ह॑पत्य ई॒युः ।।1।।
160102
रु॒द्रो भू॒त्वाऽग्निर॑नू॒त्थाय॑ । अ॒ध्व॒र्युञ्च॒ यज॑मानञ्च हन्यात् । वीहि॒ स्वाहाऽऽहु॑तिञ्जु॒षा॒ण
इत्या॑ह । आहु॑त्यै॒वैन॑ꣳ शमयति ।
नार्ति॒माछ॑र्त्यध्व॒र्युर्न यज॑मानः । ए॒को॒ल्मु॒केन॑ यन्ति । तद्धि निर्‌ऋ॑त्यै भाग॒धेय॑म्
। इ॒मान्दिश॑य्यँन्ति । ए॒षा वै निर्‌ऋ॑त्यै॒ दिक् । स्वाया॑मे॒व
दि॒शि निर्‌ऋ॑तिन्नि॒रव॑दयते ।।2।।
160103
स्वकृ॑त॒ इरि॑णे जुहोति प्रद॒रे वा॑ । ए॒तद्वै निर्‌ऋ॑त्या आ॒यत॑नम् । स्व ए॒वायत॑ने॒ निर्‌ऋ॑तिन्नि॒रव॑दयते ।
ए॒ष ते॑ निर्‌ऋते भा॒ग
इत्या॑ह । निर्दि॑शत्ये॒वैना॑म् । भूते॑ ह॒विष्म॑त्य॒सीत्या॑ह । भूति॑मे॒वोपाव॑र्तते । मु॒ञ्चेमम॑ꣳह॑स॒
इत्या॑ह । अꣳह॑स ए॒वैनं॑ मुञ्चति । अ॒ङ्गु॒ष्ठाभ्या॑ञ्जुहोति ।।3।।
160104
अ॒न्त॒त ए॒व निर्‌ऋ॑तिन्नि॒रव॑दयते । कृ॒ष्णव्वाँस॑ः कृ॒ष्णतू॑ष॒न्दक्षि॑णा । ए॒तद्वै निर्‌ऋ॑त्यै
रू॒पम् । रू॒पेणै॒व निर्‌ऋ॑तिन्नि॒रव॑दयते ।
अप्र॑तीक्ष॒माय॑न्ति । निर्‌ऋ॑त्या अ॒न्तर्हि॑त्यै । स्वाहा॒ नमो॒ य इ॒दञ्च॒कारेति॒ पुन॒रेत्य॒
गार्ह॑पत्ये जुहोति । आहु॑त्यै॒व न॑म॒स्यन्तो॒ गार्ह॑पत्यमु॒पाव॑र्तन्ते ।
आ॒नु॒म॒तेन॒ प्रच॑रति । इ॒यव्वाँ॑ अनु॑मतिः ।।4।।
160105
इ॒यमे॒वास्मै॑ रा॒ज्यमनु॑ मन्यते । धे॒नुर्दक्षि॑णा । इ॒मामे॒व धे॒नुङ्कु॑रुते । आ॒दि॒त्यञ्च॒रुन्निर्व॑पति
। उ॒भयी॑ष्वे॒व प्र॒जास्व॒भिषि॑च्यते ।
दैवी॑षु च॒ मानु॑षीषु च । वरो॒ दक्षि॑णा । वरो॒ हि रा॒ज्यꣳ समृ॑द्ध्यै ।
आ॒ग्ना॒वै॒ष्ण॒वमेका॑दशकपाल॒न्निर्व॑पति
। अ॒ग्निस्सर्वा॑ दे॒वताः॑ ।।5।।
160106

विष्णुर्यज्ञः । देवताश्चैव यज्ञञ्चाव रुन्धे । वामनो वही दक्षिणा । यद्वही । तेनाग्नेयः
। यद्वामनः । तेन वैष्णवस्समृद्ध्यै ।
अग्नीषोमीयमेकादशकपालन्निर्वपति । अग्नीषोमाभ्याव्वाँ इन्द्रो वृत्रमहन्निति
। यदग्नीषोमीयमेकादशकपालन्निर्वपति ।।6।।
160107
वार्त्रघ्नमेव विजित्यै । हिरण्यन्दक्षिणा समृद्ध्यै । इन्द्रो वृत्रꣳ हत्वा । देवताभिश्चेन्द्रियेण
च व्यार्ध्यत । स एतमैन्द्राग्न
मेकादशकपालमपश्यत् । तन्निरवपत् । तेन वै स देवताश्चेन्द्रियञ्चावारुन्ध ।
यदैन्द्राग्नमेकादशकपालन्निर्वपति
। देवताश्चैव तेनेन्द्रियञ्च
यजमानोऽवरुन्धे । ऋषभो वही दक्षिणा ।।7।।
160108
यद्वही । तेनाग्नेयः । यदृषभः । तेनैन्द्रस्समृद्ध्यै । आग्नेयमष्टाकपालन्निर्वपति
। ऐन्द्रन्दधि । यदाग्नेयो भवति । अग्निर्वै
यज्ञमुखम् । यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते । यदैन्द्रन्दधि ।।8।।
160109
इन्द्रियमेवावरुन्धे । ऋषभो वही दक्षिणा । यद्वही । तेनाग्नेयः । यदृषभः । तेनैन्द्रस्समृद्ध्यै
। यावतीर्वै प्रजा ओषधीना
महुतानामाश्नन्न् । ताः पराऽभवन् । आग्रयणं भवति हुताद्याय । यजमानस्यापराभावाय ।।9।।
160110
देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम् । तावेतमैन्द्राग्नन्द्वादशकपालन्निरवृणाताम्
। यदैन्द्राग्नो भवत्युज्जित्यै ।
द्वादशकपालो भवति । द्वादश मासास्सव्वँथ्सरः । सव्वँथ्सरेणैवास्मा अन्नमवरुन्धे
। वैश्वदेवश्चरुर्भवति । वैश्वदेवव्वाँ अन्नम् । अन्नमेवास्मै
स्वदयति ।।10।।
160111
प्रथमजो वथ्सो दक्षिणा समृद्ध्यै । सौम्य श्यामाकञ्चरुन्निर्वपति । सोमो वा
अकृष्टपच्यस्य राजा । अकृष्टपच्यमेवास्मै
स्वदयति । वासो दक्षिणा । सौम्यꣳ हि देवतया वासस्समृद्ध्यै । सरस्वत्यै चरुन्निर्वपति
। सरस्वते चरुम् । मिथुनमेवाव रुन्धे । मिथुनौ गावौ
दक्षिणा समृद्ध्यै । एति वा एष यज्ञमुखादृध्याः । योऽग्नेर्देवताया एति । अष्टावेतानि

ह॒वीꣳषि॑ भवन्ति । अ॒ष्टाक्ष॑रा गाय॒त्री । गा॒य॒त्रो᳚ऽग्निः ।
तेनै॒व य॑ज्ञमु॒खाद्दध्या॑ अ॒ग्नेर्दे॒वता॑यै॒ नैति॑ ।।11।।
160100
ई॒युर्नि॒रव॑दयतेऽङ्गु॒ष्ठाभ्या᳚ञ्जु॒होत्यनु॒मतिर्दे॒वता॑ नि॒र्वप॑ति व॒ही दक्षि॑णा॒ यदै॒न्द्रन्दध्यप॑राभावाय
स्वदयति॒ गावौ॒ दक्षि॑णा॒ सम॑ृद्ध्यै॒ षट्च॑ ।।1।।
160201
वै॒श्व॒दे॒वेन॒ वै प्र॒जाप॑तिः॒ प्र॒जा अ॑सृजत । तास्सृ॒ष्टा न प्राजा॑यन्त । सो᳚ऽग्निर॑कामयत ।
अ॒हमि॒मा॒ः प्रज॑नयेय॒मिति॑ । स
प्र॒जाप॑तये॒ शुच॑मदधात् । सो॑ऽशोचत्प्र॒जामि॒च्छमा॑नः । तस्मा॒द्यञ्च॑ प्र॒जा भु॒नक्ति॒ यञ्च॒
न । तावु॒भौ शो॑चतः॒ प्र॒जामि॒च्छमा॑नौ । तास्व॒ग्निमप्य॑सृजत् ।
ता अ॒ग्निरध्यै᳚त् ।।12।।
160202
सोमो॒ रेतो॑ऽदधात् । स॒वि॒ता प्राज॑नयत् । सर॑स्वती॒ वाच॑मदधात् । पू॒षाऽपो॑षयत् । ते वा ए॒ते
त्रिस्स॑व्वँथ्स॒रस्य॒ प्रयु॑ज्यन्ते ।
ये दे॒वाः॒ पुष्टि॑पतयः । स॒व्वँ॒थ्स॒रो वै प्र॒जाप॑तिः । स॒व्वँ॒थ्स॒रेणै॒वास्मै᳚ प्र॒जाः॒
प्राज॑नयत् । ताः॒ प्र॒जा जा॒ता म॒रुतो᳚ऽघ्नन्न् । अ॒स्मानपि॒ न प्रायु॑क्षतेति॑ ।।13।।
160203
स ए॒तं प्र॒जाप॑तिर्मारु॒तꣳ स॒प्तक॑पालमपश्यत् । तन्निर॑वपत् । तत॒ो वै प्र॒जाभ्यो॑ऽकल्पत । यन्मा॑रु॒तो
नि॑रु॒प्यते᳚ । य॒ज्ञस्य॒
क्लृ॒प्त्यै᳚ । प्र॒जाना॒मघा॑ताय । स॒प्तक॑पालो भवति । स॒प्तग॑णा॒ वै म॒रुत॑ः । ग॒ण॒श ए॒वास्मै॒
विश॑ङ्कल्पयति । स प्र॒जाप॑तिरशोचत् ।।14।।
160204
याः॒ पूर्वा᳚ः॒ प्र॒जा अस॑ृक्षि । म॒रुत॒स्ता अ॑वधिषुः । क॒थमप॑रास्सृजे॒येति॑ । तस्य॒ शुष्म॑ आ॒ण्डं
भू॒तन्निर॑वर्तत । तद्व्युद॑हरत् ।
तद॑पोषयत् । तत्प्राजा॑यत । आ॒ण्डस्य॒ वा ए॒तद्रू॒पम् । यदा॒मिक्षा᳚ । यद्व्यु॒द्धर॑ति ।।15।।
160205
प्र॒जा ए॒व तद्यज॑मानः॒ पोषयति । वै॒श्व॒दे॒व्या॑मिक्षा॑ भवति । वै॒श्व॒दे॒व्यो॑ वै प्र॒जाः
। प्र॒जा ए॒वास्मै॒ प्रज॑नयति । वाजि॑न॒मान॑यति ।
प्र॒जास्वे॒व प्रजा॑तासु॒ रेतो॑ दधाति । द्या॒वा॒पृ॒थि॒व्य॑ एक॑कपालो भवति । प्र॒जा ए॒व प्रजा॑ता॒
द्यावा॑पृथि॒वीभ्या॑मुभ॒यत॒ः परि॑ गृह्णाति । दे॒वा॒सु॒रास्सय्यँ॑त्ता
आसन्न् । सो᳚ऽग्निर॑ब्रवीत् ।।16।।
160206

मामग्रे यजत । मया मुखेनासुराञ्जेष्यथेति । मान्द्वितीयमिति सोमोऽब्रवीत् ।
मया राज्ञा जेष्यथेति । मान्तृतीयमिति सविता ।
मया प्रसूता जेष्यथेति । माञ्चतुर्थीमिति सरस्वती । इन्द्रियँव्वोऽहन्धास्यामीति
। मां पञ्चममिति पूषा । मया प्रतिष्ठया जेष्यथेति ।।17।।
160207
तेऽग्निना मुखेनासुरानजयन्न् । सोमेन राज्ञा । सवित्रा प्रसूताः । सरस्वतीन्द्रियमदधात्
। पूषा प्रतिष्ठाऽऽसीत् । ततो वै
देवा व्यजयन्त । यदेतानि हवीꣳषि निरुप्यन्ते विजित्यै । नोत्तरवेदिमुपवपति । पशवो
वा उत्तरवेदिः । अजाता इव ह्येतर्हि पशवः ।।18।।
160200
ऐदित्यशोचद्युद्धरत्यब्रवीत्प्रतिष्ठया जेष्यथेत्येतर्हि पशवः ।।2।।
160301
त्रिवृद्बर्हिर्भवति । माता पिता पुत्रः । तदेव तन्मिथुनम् । उल्बङ्गर्भो जरायु
। तदेव तन्मिथुनम् । त्रेधा बर्हिस्सन्नद्धं भवति ।
त्रय इमे लोकाः । एष्वेव लोकेषु प्रति तिष्ठति । एकधा पुनस्सन्नद्धं भवति । एक इव ह्ययँल्लोकः
।।19।।
160302
अस्मिन्नेव तेन लोके प्रतितिष्ठति । प्रसुवो भवन्ति । प्रथमजामेव पुष्टिमव
रुन्धे । प्रथमजो वथ्सो दक्षिणा समृद्ध्यै ।
पृषदाज्यङ्गृह्णाति । पशवो वै पृषदाज्यम् । पशूनेवाव रुन्धे । पञ्चगृहीतं
भवति । पाङ्क्ता हि पशवः । बहुरूपं भवति ।।20।।
160303
बहुरूपा हि पशवस्समृद्ध्यै । अग्निं मन्थन्ति । अग्निमुखा वै प्रजापतिः प्रजा
असृजत । यदग्निं मन्थन्ति । अग्निमुखा एव
तत्प्रजा यजमानस्सृजते । नव प्रयाजा इज्यन्ते । नवानूयाजाः । अष्टौ हवीꣳषि । द्वावाघारौ ।
द्वावाज्यभागौ ।।21।।
160304
त्रिꣳशथ्संपद्यन्ते । त्रिꣳशदक्षरा विराट् । अन्नव्विराट् । विराजैवान्नाद्यमवरुन्धे
। यजमानो वा एककपालः । तेज आज्यम् ।
यदेककपाल आज्यमानयति । यजमानमेव तेजसा समर्धयति । यजमानो वा एककपालः । पशव
आज्यम् ।।22।।
160305

यदेक॑कपाल॒ आज्य॑म॒नय॑ति । यज॑मानमे॒व प॒शुभि॒स्सम॑र्धयति । यदल्प॑म॒नये॓त् । अल्पा॑ एनं प॒शवो॑
भु॒ञ्जन्त॒ उप॑तिष्ठेरन् ।
यद्ब॒ह्वा॑नये॓त् । ब॒हव॑ एनं प॒शवोऽभु॑ञ्जन्त॒ उप॑तिष्ठेरन् । ब॒ह्वा॑नीया॒विः पृ॒ष्ठं कु॑र्यात्
। ब॒हव॑ ए॒वैनं॑ प॒शवो॑ भु॒ञ्जन्त॒ उप॑तिष्ठन्ते । यज॑मानो॒ वा
एक॑कपालः । यदेक॑कपालस्याव॒द्येत् ।।23।।
160306
यज॑मान॒स्याव॑द्येत् । उद्वा॒ माद्ये॒द्यज॑मानः । प्र वा॑ मीयेत । स॒कृदे॒व हो॑त॒व्यः॑ । स॒कृदि॑व॒ हि
सु॑व॒र्गो ल॒ोकः । हु॒त्वाऽभि
जु॑होति । यज॑मानमे॒व सु॑व॒र्गल्लो॒ँकङ्ग॑मयि॒त्वा । तेज॑स॒ा सम॑र्धयति । यज॑मानो॒ वा एक॑कपालः ।
सु॒व॒र्गो ल॒ोक आ॑हव॒नीयः॑ ।।24।।
160307
यदेक॑कपालमाहव॒नीये॑ जु॒होति॑ । यज॑मानमे॒व सु॑व॒र्गल्लो॒ँकङ्ग॑मयति । यद्धस्ते॑न जु॒हु॒यात् ।
सु॒व॒र्गाल्लो॒काद्यज॑मान॒मव॑विध्येत् ।
स्रु॒चा जु॑होति । सु॒व॒र्गस्य॑ ल॒ोकस्य॒ सम॑ष्ट्यै । यत्प्राङ्पद्ये॑त । दे॒व॒लो॒कम॒भिज॑येत्
। यद्द॑क्षि॒णा पि॑तृल॒ोकम् । यत्प्र॒त्यक् ।।25।।
160308
रक्षा॑ꣳसि य॒ज्ञꣳ ह॑न्युः । यदुद॒ङ् । म॒नु॒ष्य॒ल॒ोकम॒भिज॑येत् । प्रति॑ष्ठितो होत॒व्यः॑
। एक॑कपाल॒ँव्वै प्र॑ति॒तिष्ठ॑न्त॒न्द्यावा॑पृथि॒वी
अनु॒ प्रति॑तिष्ठतः । द्यावा॑पृथि॒वी ऋ॒तवः॑ । ऋ॒तून् य॒ज्ञः । य॒ज्ञय्यँज॑मानः । यज॑मानं प्र॒जाः
। तस्मा॒त्प्रति॑ष्ठितो होत॒व्यः॑ ।।26।।
160309
वा॒जिनो॑ यजति । अ॒ग्निर्वा॒युस्सूर्यः॑ । ते वै वा॒जिनः॑ । ताने॒व तद्य॑जति । अथो॒ खल्वा॑हुः । छन्दा॑ꣳसि॒
वै वा॒जिन॒ इति॑ ।
तान्ये॒व तद्य॑जति । ऋ॒क्सा॒मे वा इन्द्र॑स्य॒ हरी॑ सोम॒पानौ॑ । तयोः॑ परि॒धय॑ आ॒धान॑म् । वाजि॑नं
भाग॒धेय॑म् ।।27।।
160310
यदप्र॑हृत्य परि॒धीञ्जु॑हु॒यात् । अ॒न्तरा॑धानाभ्याङ्घा॒सं प्रय॑च्छेत् । प्र॒हृत्य॑ परि॒धीञ्जु॑होति
। निरा॑धानाभ्यामे॒व घा॒सं प्रय॑च्छति ।
ब॒र्॒हिषि॑ विषि॒ञ्चन्वाजि॑न॒मान॑यति । प्र॒जा वै ब॒र्॒हिः । रेत॒ो वाजि॑नम् । प्र॒जास्वे॒व
रेतो॑ दधाति । स॒मु॒प॒हूय॑ भक्षयन्ति । ए॒तथ्सो॑मपीथा॒ ह्ये॑ते ।
अथो॑ आ॒त्मन्ने॒व रेतो॑ दधते । यज॑मान उत्त॒मो भ॑क्षयति । प॒शवो॒ वै वाजि॑नम् । यज॑मान ए॒व

पशून्प्रतिष्ठापयन्ति ।।28।।
160300
लोको बहुरूपं भवत्याज्यभागौ पशव आज्यमवद्येदाहवनीयᳲ प्रत्यक्तस्मात्प्रतिष्ठितो
होतव्यौ भागधेयमेते चत्वारि च ।।3।।
160401
प्रजापतिस्सविता भूत्वा प्रजा असृजत । ता एनमत्यमन्यन्त । ता अस्मादपाक्रामन् । ता वरुणो
भूत्वा प्रजा
वरुणेनाग्राहयत् । ताᳲ प्रजा वरुणगृहीताः । प्रजापतिं पुनरुपाधावन्नाथमिच्छमानाः
। स एतान्प्रजापतिर्वरुणप्रघासानपश्यत् । तान्निरवपत् ।
तैर्वै स प्रजा वरुणपाशादमुञ्चत् । यद्वरुणप्रघासा निरुप्यन्ते ।।29।।
160402
प्रजानामवरुणग्राहाय । तासान्दक्षिणो बाहुर्न्यक्क आसीत् । सव्यᳲ प्रसृतः । स
एतान्द्वितीयान्दक्षिणतो वेदिमुदहन् ।
ततो वै स प्रजानान्दक्षिणं बाहुं प्रासारयत् । यद्द्वितीयान्दक्षिणतो वेदिमुद्धन्ति
। प्रजानामेव तद्यजमानो दक्षिणं बाहुं प्रसारयति ।
तस्माच्चातुर्मास्ययाज्यमुष्मिंल्लोक उभयाबाहुः । यज्ञाभिजित ह्यस्य । पृथमात्राद्वेदी असंभिन्ने भवतः
।।30।।
160403
तस्मात्पृथमात्रव्व्यँꣳसौ । उत्तरस्याँव्वेद्यामुत्तरवेदिमुप वपति । पशवो वा उत्तरवेदिः
। पशूनेवावरुन्धे । अथो यज्ञपरुषोऽ
नन्तरित्यै । एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । अथैष ऐन्द्राग्नो भवति । प्राणापानौ
वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति ।।31।।
160404
प्राणापानावेवावरुन्धे । ओजो बलव्वाँ एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । ओजो
बलमेवावरुन्धे ।
मारुत्यामिक्षा भवति । वारुण्यामिक्षा । मेषी च मेषश्च भवतः । मिथुना एव प्रजा
वरुणपाशान्मुञ्चति । लोमशौ भवतो मेध्यत्वाय ।।32।।
160405
शमीपर्णान्युप वपति । घासमेवाभ्यामपियच्छति । प्रजापतिमन्नाद्यन्नोपानमत् । स
एतेन शतेध्मेन हविषाऽन्नाद्यमवारुन्ध ।
यत्परश्शतानि शमीपर्णानि भवन्ति । अन्नाद्यस्यावरुद्ध्यै । सौम्यानि वै करीराणि

। सौम्या खलु वा आहुतिर्दिवो वृष्टिञ्च्यावयति । यत्करीराणि
भवन्ति । सौम्ययैवाहुत्या दिवो वृष्टिमवरुन्धे । काय एककपालो भवति । प्रजानाङ्कन्त्वाय
। प्रतिपूरुषङ्करम्भपात्राणि भवन्ति । जाता एव प्रजा
वरुणपाशान्मुञ्चति । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा वरुणपाशान्मुञ्चति ।।33।।
160400
निरुप्यन्ते भवतो भवति मेध्यत्वाय रुन्धे षट्च ।।4।।
160501
उत्तरस्याँव्वेद्यामन्यानि हवीꣳषि सादयति । दक्षिणायां मारुतीम् । अपधुरमेवैना युनक्ति । अथो
ओज एवासामव हरति ।
तस्माद्ब्रह्मणश्च क्षत्राच्च विशोँऽन्यतोऽपक्रमिणीः । मारुत्या पूर्वया प्रचरति
। अनृतमेवाव यजते । वारुण्योत्तरया । अन्तत एव वरुणमव यजते ।
यदेवाध्वर्युः करोति ।।34।।
160502
तत्प्रतिप्रस्थाता करोति । तस्माद्यच्छ्रेयाँन्करोति । तत्पापीयान्करोति । पत्नीँव्वाँचयति
। मेध्यामेवैनाङ्करोति । अथो तप
एवैनामुप नयति । यज्जारꣳ सन्तन्न प्रब्रूयात् । प्रियं ज्ञातिꣳ रुन्ध्यात् । असौ
मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयति ।।35।।
160503
प्रघास्यान् हवामह इति पत्नीमुदानयति । अह्नतैवैनाम् । यत्पत्नी पुरोनुवाक्यामनु
ब्रूयात् । निर्वीर्यो यजमानस्स्यात् ।
यजमानोऽन्वाह । आत्मन्नेव वीर्यन्धत्ते । उभौ याज्याꣳ सवीर्यत्वाय । यद्ग्रामे
यदरण्य इत्याह । यथोदितमेव वरुणमव यजते । यजमानदेवत्यो
वा आहवनीयः ।।36।।
160504
भ्रातृव्यदेवत्यो दक्षिणः । यदाहवनीये जुहुयात् । यजमानव्वँरुणपाशेन ग्राहयेत्
। दक्षिणेऽग्नौ जुहोति । भ्रातृव्यमेव
वरुणपाशेन ग्राहयति । शूर्पेण जुहोति । अन्यमेव वरुणमव यजते । शीर्‌षन्नधि निधाय
जुहोति । शीर्‌षत एव वरुणमव यजते । प्रत्यङ्
तिष्ठञ्जुहोति ।।37।।
160505
प्रत्यङ्ङेव वरुणपाशान्निर्मुच्यते । अक्रन्कर्मकर्मकृत इत्याह । देवानृणन्निरवदाय

। अनृणा गृहानुपप्रेतेति वावैतदाह ।
वरुणगृहीतँव्वा एतद्यज्ञस्य । यद्यजुषा गृहीतस्यातिरिच्यते । तुषाँश्च निष्कासश्च
। तुषैँश्च निष्कासेन चावभृथमवैति । वरुणगृहीतेनैव
वरुणमवयजते । अपोऽवभृथमवैति ।।38।।
160506
अप्सु वै वरुणः । साक्षादेव वरुणमवयजते । प्रतियुतो वरुणस्य पाश इत्याह । वरुणपाशादेव
निर्मुच्यते ।
अप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । एधोऽस्येधिषीमहीत्याह । समिधैवाग्निन्नमस्यन्त
उपायन्ति । तेजोऽसि तेजो मयि धेहीत्याह । तेज
एवात्मन्धत्ते ।।39।।
160500
करोति ग्राहयत्याहवनीयस्तिष्ठञ्जुहोत्यपोऽवभृथमवैति धत्ते ।।5।।
160601
देवासुरास्सँय्यत्ता आसन् । सोऽग्निरब्रवीत् । ममेयमनीकवती तनूः । तां प्रीणीत । अथासुरानभि
भविष्यथेति । ते देवा
अग्नयेऽनीकवते पुरोडाशमष्टाकपालन्निरवपन् । सोऽग्निरनीकवान्थ्स्वेन भागधेयेन प्रीतः
। चतुर्धाऽनीकान्यजनयत । ततो देवा अभवन् ।
पराऽसुराः ।।40।।
160602
यदग्नयेऽनीकवते पुरोडाशमष्टाकपालन्निर्वपति । अग्निमेवानीकवन्त स्वेन भागधेयेन
प्रीणाति । सोऽग्निरनीकवान्थ्स्वेन
भागधेयेन प्रीतः । चतुर्धाऽनीकानि जनयते । असौ वा आदित्योऽग्निरनीकवान् । तस्य
रश्मयोऽनीकानि । साकँ सूर्येणोद्यता निर्वपति ।
साक्षादेवास्मा अनीकानि जनयति । तेऽसुराः पराजिता यन्तः । द्यावापृथिवी उपाश्रयन् ।।41।।
160603
ते देवा मरुद्भ्यस्सान्तपनेभ्यश्चरुन्निरवपन् । यन्मरुद्भ्यस्सान्तपनेभ्यश्चरुन्निर्वपति
। द्यावापृथिवीभ्यामेव तदुभयतो यजमानो
भ्रातृव्यान्थ्सन्तपति । मध्यन्दिने निर्वपति । तर्हि हि तेक्ष्णिष्ठन्तपति । चरुर्भवति
। सर्वत एवैनान्थ्सन्तपति । ते देवाश्श्वोविजयिनस्सन्तः ।
सर्वासान्दुग्धे गृहमेधीयञ्चरुन्निरवपन् ।।42।।
160604

आशिता एवाद्योपवसाम । कस्य वाऽहेदम् । कस्य वा श्वो भवितेति । स शृतोऽभवत् ।
तस्याहुतस्य नाश्नन् । न हि
देवा अहुतस्याश्नन्ति । तेऽब्रुवन् । कस्मा इमꣳ होष्याम इति । मरुद्भ्यो गृहमेधिभ्य
इत्यब्रुवन् । तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः ।।43।।
160605
ततो देवा अभवन् । पराऽसुराः । यस्यैवँविदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति
। भवत्यात्मना । पराऽस्य भ्रातृव्यो
भवति । यद्वै यज्ञस्य पाकत्रा क्रियते । पशव्यन्तत् । पाकत्रा वा एतत्क्रियते ।
यन्नेध्माबर्हिर्भवति । न सामिधेनीरन्वाह ।।44।।
160606
न प्रयाजा इज्यन्ते । नानूयाजाः । य एवँवेद । पशुमान्भवति । आज्यभागौ यजति । यज्ञस्यैव
चक्षुषी नान्तरेति ।
मरुतो गृहमेधिनो यजति । भागधेयेनैवैनान्त्समर्धयति । अग्निं स्विष्टकृतँयजति
प्रतिष्ठित्यै । इडान्तो भवति । पशवो वा इडा ।
पशुष्वेवोपरिष्टात्प्रति तिष्ठति ।।45।।
160600
असुरा अश्रयन्गृहमेधीयञ्चरुन्निरनपन्नजुहवुरन्वाहेडान्तो भवति द्वे च ।।6।।
160701
यत्पत्नी गृहमेधीयस्याश्नीयात् । गृहमेध्येव स्यात् । वि त्वस्य यज्ञ ऋध्येत । यन्नाश्नीयात् ।
अगृहमेधी स्यात् । नास्य
यज्ञो व्यृद्ध्येत । प्रतिवेशं पचेयुः । तस्याश्नीयात् । गृहमेध्येव भवति । नास्य यज्ञो व्यृद्ध्यते
।।46।।
160702
ते देवा गृहमेधीयेनेष्ट्वा । आशिता अभवन् । आञ्जताभ्यञ्जत । अनु वथ्सानवासयन्
। तेभ्योऽसुराः क्षुधं प्राहिण्वन् ।
सा देवेषु लोकमवित्वा । असुरान्पुनरगच्छत् । गृहमेधीयेनेष्ट्वा । आशिता भवन्ति । आञ्जतेऽभ्यञ्जते
।।47।।
160703
अनु वथ्सान् वासयन्ति । भ्रातृव्यायैव तद्यजमानः क्षुधं प्रहिणोति । ते देवा गृहमेधीयेनेष्ट्वा
। इन्द्राय निष्कासन्न्यदधुः ।
अस्मानेव श्व इन्द्रो निहितभाग उपावर्तितेति । तानिन्द्रो निहितभाग उपावर्तत । गृहमेधीयेनेष्ट्वा

। इन्द्राय निष्क्रासन्निर्दध्यात् । इन्द्र एवैन्
न्निर्हितभाग उपावर्तते । गार्हपत्ये जुहोति ।।48।।
160704
भागधेयेनैवैनꣳ समर्धयति । ऋषभमाह्वयति । वषट्कार एवास्य सः । अथो इन्द्रियमेवतद्वीर्यँय्यजमानो
भ्रातृव्यस्य वृङ्क्ते ।
इन्द्रो वृत्रꣳ हत्वा । परां परावतमगच्छत् । अपाराधमिति मन्यमानः । सोऽब्रवीत् ।
क इदव्वेँदिष्यतीति । तेऽब्रुवन्मरुतो वरव्वृँणामहै ।।49।। अथ वयँव्वेदाम।
160705
अस्मभ्यमेव प्रथमꣳ हविर्निरुप्याता इति । त एनमध्यक्रीडन् । तत्क्रीडिनाङ्क्रीडित्वम्
। यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ
हविर्निरुप्यते विजित्यै । साकꣳ सूर्येणोद्यता निर्वपति । एतस्मिन्वै लोक इन्द्रो
वृत्रमहन्थ्समृद्ध्यै । एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । एतद्ब्राह्मण
ऐन्द्राग्नः । अथैष ऐन्द्रश्चरुर्भवति ।।50।।
160706
उद्धारव्वाँ एतमिन्द्र उदहरत । वृत्रꣳ हत्वा । अन्यासु देवतास्वधि । यदेष ऐन्द्रश्चरुर्भवति
। उद्धारमेव तँय्यजमान उद्धरते ।
अन्यासु प्रजास्वधि । वैश्वकर्मण एककपालो भवति । विश्वान्येव तेन कर्माणि यजमानोऽवरुन्धे
।।51।।
160700
ऋद्ध्यतेऽभ्यञ्जते जुहोति वृणामहै भवत्यष्टौ च ।।7।।
160801
वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ता वरुणप्रघासैर्वरुणपाशादमुञ्चत् ।
साकमेधैः प्रत्यस्थापयत् । त्र्यम्बकै
रुद्रन्निरवादयत । पितृयज्ञेन सुवर्गल्लोकमगमयत् । यद्वैश्वदेवेन यजते । प्रजा
एव तद्यजमानस्सृजते । ता वरुणप्रघासैर्वरुणपाशान्मुञ्चति ।
साकमेधैः प्रतिष्ठापयति । त्र्यम्बकै रुद्रन्निरवदयते ।।52।।
160802
पितृयज्ञेन सुवर्गँल्लोकङ्गमयति । दक्षिणतः प्राचीनावीती निर्वपति । दक्षिणावृद्धि
पितृणाम् । अनादृत्य तत् । उत्तरत
एवोपवीय निर्वपेत् । उभये हि देवाश्च पितरश्चेज्यन्ते । अथो यदेव दक्षिणार्धेऽधिश्रयति
। तेन दक्षिणावृत् । सोमाय पितृमते पुरोडाशꣳ

षड्कपालन्निर्वपति । सव्वँथ्सरो वै सोमः पितृमान् ।।53।।
160803
सव्वँथ्सरमेव प्रीणाति । पितृभ्यो बर्हिषद्भ्यो धानाः । मासा वै पितरो बर्हिषदः
। मासानेव प्रीणाति । यस्मिन्वा ऋतौ
पुरुषः प्रमीयते । सोऽस्यामुष्मिंल्लोके भवति । बहुरूपा धाना भवन्ति । अहोरात्राणामभिजित्यै
। पितृभ्योऽग्निष्वात्तेभ्यो मन्थम् । अर्धमासा वै
पितरोऽग्निष्वात्ताः ।।54।।
160804
अर्धमासानेव प्रीणाति । अभिवान्यायै दुग्धे भवति। सा हि पितृदेवत्यन्दुहे
। यत्पूर्णम् । तन्मनुष्याणाम् । उपर्यर्धो
देवानाम् । अर्धः पितृणाम् । अर्ध उपमन्थति । अर्धो हि पितृणाम्। एकयोपमन्थति ।।55।।
160805
एका हि पितृणाम् । दक्षिणोपमन्थति । दक्षिणावृद्धि पितृणाम् । अनारभ्योपमन्थति । तद्धि
पितॄन्गाच्छति ।
इमान्दिशँव्वेदिमुद्धन्ति । उभये हि देवाश्च पितरश्चेज्यन्ते । चतुस्स्रक्तिर्भवति
। सर्वा ह्यनु दिशः पितरः । अखाता भवति ।।56।।
160806
खाता हि देवानाम् । मध्यतोऽग्निराधीयते । अन्ततो हि देवानामाधीयते । वर्षीयानिध्म
इध्माद्भवति व्यावृत्त्यै । परि
श्रयति । अन्तर्हितो हि पितृलोको मनुष्यलोकात् । यत्परुषि दिनम् । तद्देवानाम् । यदन्तरा ।
तन्मनुष्याणाम् ।।57।।
160807
यथ्समूलम् । तत्पितृणाम् । समूलं बर्हिर्भवति व्यावृत्त्यै । दक्षिणा स्तृणाति
। दक्षिणावृद्धि पितृणाम् । त्रिः पर्येति ।
तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । त्रिः पुनः पर्येति । षट्थ्सं पद्यन्ते ।।58।।
160808
षड्वा ऋतवः । ऋतूनेव प्रीणाति । यत्प्रस्तरय्यँजुषा गृह्णीयात् । प्रमायुको यजमानस्स्यात् । यन्न
गृह्णीयात् ।
अनायतनस्स्यात् । तूष्णीमेव न्यस्येत् । न प्रमायुको भवति । नानायतनः । यत्त्रीन्परिधीन्
परिदध्यात् ।।59।।
160809
मृत्युना यजमानं परिगृह्णीयात् । यन्न परिदध्यात् । रक्षांसि यज्ञं हन्युः । द्वौ परिधी परिदधाति ।

रक्षसामपहत्यै ।
अथो मृत्योरेव यजमानमुथ्सृजति । यत्त्रीणि त्रीणि हवीꣳष्युदाहरेयुः । त्रयस्त्रय
एषाꣳ साकं प्रमीयेरन् । एकैकमनूचीनान्युदाहरन्ति । एकैक
एवैषामन्वञ्चः प्रमीयते । कशिपु कशिपव्याय । उपबर्हणमुपबर्हण्याय । आञ्जनमाञ्जन्याय
। अभ्यञ्जनमभ्यञ्जन्याय । यथाभागमेवैनान्प्रीणाति ।।60।।
160800
निरवदयते पितृमानग्निष्वात्ता एकयोप मन्थत्यखाता भवति मनुष्याणां पद्यन्ते परिदध्यान्मीयते पञ्च च
।।8।।
160901
अग्नये देवेभ्यः पितृभ्यस्समिध्यमानायानु ब्रूहीत्याह । उभये हि देवाश्च
पितरश्चेज्यन्ते । एकामन्वाह । एका हि पितृणाम् ।
त्रिरन्वाह । त्रिर्हि देवानाम् । आघारावाघारयति । यज्ञपरुषोरनन्तरित्यै । नार्षेयव्वृँणीते । न
होतारम् ।।61।।
160902
यदार्षेयं वृणीत । यद्धोतारम् । प्रमायुको यजमानस्स्यात् । प्रमायुको होता ।
तस्मान्न वृणीते । यजमानस्य होतुर्गोपीथाय ।
अप बर्हिषः प्रयाजान् यजति । प्रजा वै बर्हिः । प्रजा एव मृत्योरुथ्सृजति । आज्यभागौ यजति
।।62।।
160903
यज्ञस्यैव चक्षुषी नान्तरेति । प्राचीनावीती सोमय्यँजति । पितृदेवत्या हि
। एषाऽऽहुतिः । पञ्चकृत्वोऽव द्यति । पञ्च ह्येता
देवताः । द्वे पुरोऽनुवाक्ये । याज्या देवता वषट्कारः । ता एव प्रीणाति । सन्ततमव द्यति ।।63।।
160904
ऋतूनाꣳ सन्तत्यै । प्रैवेभ्यः पूर्वया पुरोऽनुवाक्ययाऽऽह । प्रणयति द्वितीयया ।
गमयति याज्यया । तृतीये वा इतो लोके
पितरः । अह्न एवैनान्पूर्वया पुरोऽनुवाक्ययाऽत्यानयति । रात्रियै द्वितीयया
। ऐवैनान् याज्यया गमयति । दक्षिणतोऽवदाय । उदङ्ङति क्रामति
व्यावृत्त्यै ।।64।।
160905
आ स्वधेत्याश्रावयति । अस्तु स्वधेति प्रत्याश्रावयति । स्वधा नम इति वषट्करोति । स्वधाकारो हि
पितृणाम् । सोममग्रे

यजति । सोमप्रयाजा हि पितरः । सोमं पितृमन्तंय्यँजति । सव्वँथ्सरो वै सोमः पितृमान्
। सव्वँथ्सरमेव तद्यजति । पितॄन्बर्हिषदो यजति ।।65।।
160906
ये वै यज्वानः । ते पितरो बर्हिषदः । तानेव तद्यजति । पितॄनग्निष्वात्तान् यजति । ये वा
अयज्वानो गृहमेधिनः । ते
पितरोऽग्निष्वात्ताः । तानेव तद्यजति । अग्निङ्कव्यवाहनय्यँजति । य एव पितृणामग्निः । तमेव
तद्यजति ।।66।।
160907
अथो यथाऽग्नि स्विष्टकृतय्यँजति । तादृगेव तत् । एतत्ते तत ये च त्वामन्विति तिसृषु स्रक्तीषु
निदधाति । तस्मादा
तृतीयात्पुरुषान्नाम न गृह्णन्ति । एतावन्तो हीज्यन्ते । अत्र पितरो यथाभागं मन्दध्वमित्या
ह। ह्लीका हि पितरः । उदञ्चो निष्क्रामन्ति । एषा वै
मनुष्याणान्दिक् । स्वामेव तद्दिशमनुनिष्क्रामन्ति ।।67।।
160908
आहवनीयमुपतिष्ठन्ते । न्येवास्मै तद्ध्नुवते । यथ्सत्याहवनीये । अथान्यत्र चरन्ति ।
आतमितोरुपतिष्ठन्ते ।
अग्निमेवोपद्रष्टारङ्कृत्वा । पितॄन्निरवदयन्ते । अन्तव्वाँ एते प्राणानाँङ्गच्छन्ति
। य आतमितोरुप तिष्ठन्ते । सुसन्दृशन्त्वा वयमित्याह ।।68।।
160909
प्राणो वै सुसन्दृक् । प्राणमेवात्मन्दधते । योजा न्विन्द्र ते हरी इत्याह । प्राणमेव
पुनरयुक्त । अक्षन्नमीमदन्त हीति
गार्हपत्यमुपतिष्ठन्ते । अक्षन्नमीमदन्ताथ त्वोपतिष्ठामह इति वावैतदाह । अमीमदन्त
पितरस्सोम्या इत्यभि प्रपद्यन्ते । अमीमदन्त पितरोऽथ
त्वाऽभि प्रपद्यामह इति वावैतदाह । अपः परिषिञ्चति । मार्जयत्येवैनान् ।।69।।
160910
अथो तर्पयत्येव । तृप्यति प्रजया पशुभिः । य एवँव्वेद । अप बर्हिषावनूयाजौ यजति । प्रजा वै
बर्हिः । प्रजा एव
मृत्योरुथ्सृजति । चतुरः प्रयाजान् यजति । द्वावनूयाजौ । षट्थ्सं पद्यन्ते । षड्वा ऋतवः
। ऋतूनेव प्रीणाति । न पत्यन्वाँस्ते । न सय्याँजयन्ति ।
यत्पत्यन्वासीत । यथ्सय्याँजयेयुः । प्रमायुका स्यात् । तस्मान्नान्वाँस्ते । न सय्याँजयन्ति । पत्नियै
गोपीथाय ।।70।।

160900
होतारमाज्यभागौ यजति सन्ततमवद्यति व्यावृत्त्यै बरिहिषदो यजति तमेव तद्यजत्यनु
निष्क्रामन्त्याहैनानृतवो नव च ।।9।।
161001
प्रतिपूरुषमेककपालान्निर्वपति । जाता एव प्रजा रुद्रान्निरवदयते । एकमतिरिक्तम्
। जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते ।
एककपाला भवन्ति । एकधैव रुद्रन्निरवदयते । नाभिघारयति । यदभिघारयेत् । अन्तरवचारिणꣳ
रुद्रङ्कुर्यात् । एकोल्मुकेन यन्ति ।।71।।
161002
तद्धि रुद्रस्य भागधेयम् । इमान्दिशय्यँन्ति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि
रुद्रन्निरवदयते । रुद्रो वा अपशुकाया
आहुत्यै नातिष्ठत । असौ ते पशुरिति निर्दिशेद्यन्द्विष्यात् । यमेव द्वेष्टि । तमस्मै
पशुन्निर्दिशति । यदि न द्विष्यात् । आखुस्ते पशुरिति ब्रूयात् ।।72।।
161003
न ग्राम्यान्पशून् हिनस्ति । नारण्यान् । चतुष्पथे जुहोति । एष वा अग्नीनां पड्बीशो
नाम । अग्निवत्येव जुहोति । मध्यमेन
पर्णेन जुहोति । स्रुग्घ्येषा । अथो खलु । अन्तमेनैव होतव्यम् । अन्तत एव रुद्रन्निरवदयते
।।73।।
161004
एष ते रुद्र भागस्सह स्वस्राऽम्बिकयेत्याह । शरद्वा अस्याम्बिका स्वसा ।
तया वा एष हिनस्ति । यꣳ हिनस्ति । तयैवैनꣳ
सह शमयति । भेषजङ्गव इत्याह । यावन्त एव ग्राम्याः पशवः । तेभ्यो भेषजङ्करोति
। अवाम्ब रुद्रमदिमहीत्याह । आशिषमेवैतामा शास्ते ।।74।।
161005
त्र्यम्बकय्यँजामह इत्याह । मृत्योर्मुक्षीय माऽमृतादिति वावैतदाह । उत्किरन्ति । भगस्य लीफ्सन्ते
। मूतेकृत्वाऽऽसजन्ति ।
यथा जनय्यँतेऽवसङ्करोति । तादृगेव तत् । एष ते रुद्र भाग इत्याह निरवत्त्यै
। अप्रतीक्षमा यन्ति । अपः परिषिञ्चति । रुद्रस्यान्तर्हित्यै ।
प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये त्र्यम्बकैश्चरन्ति । आदित्यञ्चरुं पुनरेत्य
निर्वपति । इयव्वाँ अदितिः । अस्यामेव प्रति तिष्ठन्ति ।।75।।
161000
यन्ति ब्रूयान्निरवदयते शास्ते सिञ्चति षट्च ।।10।।

160000

अनु॒मत्यै वैश्वदे॒वेन॒ तास्सृ॒ष्टास्त्रि॒वृत्प्र॒जाप॑तिस्सवि॒तोत्त॑रस्यान्देवासु॒रास्सो॑ऽग्निर्यत्पत्नी॑

वैश्वदे॒वेन॒ ता व॑रुणप्रघा॒सैर॒ग्नये॑ दे॒वेभ्य॑॰ प्रतिपूरु॒षन्दश॑ ।।10।।

अनु॒मत्यै प्रथम॒जो व॒थ्सो ब॑हुरू॒पा हि प॒शव॒स्तस्मा॑त्पृथम॒ात्रय्यँ॑द॒ग्नयेऽनी॑कवत उद्धारव्वाँ॑

अ॒ग्नये॑ दे॒वेभ्य॑॰ प्रतिपूरु॒षं पञ्च॑सप्ततिः।।75।।

अनु॒मत्यै॒ प्रति॑तिष्ठन्ति ।।

हरि॑ः ओम्।। श्रीकृष्णार्पणमस्तु ।

तैत्तिरीयकृष्णयजुर्ब्राह्मणे प्रथमाष्टके षष्ठप्रपाठकस्समाप्तः।

170000
सप्तमप्रपाठक प्रारंभः हरिः ओम्।।
170101
एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। अथेन्द्राय
शुनासीराय पुरोडाशन्द्वादशकपालन्निर्वपति। सव्वँथ्सरो वा
इन्द्राशुनासीरः। सव्वँथ्सरेणैवास्मा अन्नमव रुन्धे।
वायव्यं पयो भवति। वायुर्वै वृष्ट्यै प्रदापयिता। स एवास्मै
वृष्टिं प्रदापयति। सौर्य एककपालो भवति। सूर्येण वा
अमुष्मिँल्लोके वृष्टिर्धृता। स एवास्मै वृष्टिन्नियच्छति।।1।।
170102
द्वादशगवꣳ सीरन्दक्षिणा समृद्ध्यै।
देवासुरास्सय्यँत्ता आसन्।ते देवा अग्निमब्रुवन्। त्वया
वीरेणासुरानभिभवामेति। सोऽब्रवीत्। त्रेधाऽहमात्मानव्वि
करिष्य इति। स त्रेधाऽऽत्मानव्व्यँकुरुत। अग्निन्तृतीयम्।
रुद्रन्तृतीयम्। वरुणन्तृतीयम्।।2।।
170103
सोऽब्रवीत्। क इदन्तुरीयमिति। अहमितीन्द्रोऽब्रवीत्। सन्तु सृजावहा इति।
तौ समसृजेताम्। स इन्द्रस्तुरीयमभवत्। यदिन्द्रस्तुरीयमभवत्।
तदिन्द्रतुरीयस्यैन्द्रतुरीयत्वम्। ततो वै देवा व्यजयन्त।
यदिन्द्रतुरीयन्निरुप्यते विजित्यै।।3।।
170104
वहिनी धेनुर्दक्षिणा। यद्वहिनी। तेनाग्नेयी। यद्गौः। तेन रौद्री।
यद्धेनुः। तेनैन्द्री। यथ्स्त्री सती दान्ता। तेन वारुणी
समृद्ध्यै। प्रजापतिर्यज्ञमसृजत।।4।।
170105
तꣳ सृष्टꣳ
रक्षाꣳस्यजिघाꣳसन्। स एताꣳ प्रजापतिरात्मनो देवता निरमिमीत।
ताभिर्वै स दिग्भ्यो रक्षाꣳसि प्राणुदत।
यत्पञ्चावत्तीयञ्जुहोति। दिग्भ्य एव तद्यजमानो रक्षाꣳसि
प्रणुदते। समूढꣳ रक्षस्सन्दग्धꣳ रक्ष इत्याह।
रक्षाꣳस्येव सन्दहति। अग्नये रक्षोघ्ने स्वाहेत्याह।

दे॒वता॑भ्य ए॒व वि॑जिग्य॒नाभ्यो॑ भाग॒धेय॑ङ्करोति।
प्र॒ष्टि॒वा॒ही र॒थो दक्षि॑णा॒ सम॑ृद्ध्यै।।5।।
170106
इन्द्रो॑ वृ॒त्रꣳ ह॒त्वा। अस॑ुरान्पर॒ाभाव्य॑। नम॑ुचिमासु॒रन्नाल॑भत। तꣳ
श॒च्या॑ऽगृह्णात्। तौ सम॑लभेताम्। सो॑ऽस्माद॒भिशु॑नतरोऽभवत्।
सो॑ऽब्रवीत्। स॒न्धाꣳ सन्द॑धावहै। अथ॒ त्वाऽव॑ स्रक्ष्यामि। न म॒ा
शुष्के॑ण॒ नार्द्रेण॑ हनः।।6।।
170107
न दिव॒ा न नक्त॒मिति॑। स ए॒तम॒पां
फेन॑मसिञ्चत्। न वा ए॒ष शुष्क॒ो नार्द्रो व्य॑ुष्टाऽऽसीत्।
अनु॑दित॒स्सूर्य॑ः। न वा ए॒तद्दिव॒ा न नक्त॑म्। तस्यै॒तस्मि॑ल्लोके।
अ॒पां फेने॑न॒ शिर॒ उद॑वर्तयत्। तदे॑न॒मन्व॑वर्तत। मित्र॑द्रु॒गिति॑
170108
।।7।। स ए॒तान॑पाम॒ार्गान॑जनयत्। तान॑जुहोत्। तैर्वै॑ स रक्ष॒ाꣳस्यपा॑हत।
यद॑पामार्गह॒ोमो भव॑ति। रक्ष॑स॒ामप॑हत्यै। ए॒क॒ोल्म॒ुकेन॑ यन्ति। तद्धि
रक्ष॑सां भाग॒धेय॑म्।इ॒मान्दिश॑य्यँन्ति। ए॒षा वै रक्ष॑स॒ान्दिक्।
स्वाया॑मे॒व दि॒शि रक्षाꣳसि हन्ति
170109
।।8।। स्वकृ॑त॒ इरि॑णे जुहोति
प्रद॒रे वा॑। ए॒तद्वै रक्ष॑साम॒ायतन॑म्। स्व ए॒वायत॑ने॒ रक्षाꣳसि
हन्ति। पू॒र्णम॒ये॑न स्रु॒वेण॑ जुहोति। ब्रह्म॒ वै पू॒र्णः। ब्रह्म॑णै॒व
रक्षाꣳसि हन्ति। दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒व इत्या॑ह।
स॒वि॒तृप्र॑सूत ए॒व रक्षाꣳसि हन्ति। ह॒तꣳ रक्षोऽव॑धिष्म॒ रक्ष॒
इत्या॑ह। रक्ष॑स॒ाꣳ स्तृत्यै॑। यद्व॒स्ते॒ तद्दक्षि॑णा नि॒रव॑त्त्यै।
अप्र॑तीक्ष॒माय॑न्ति। रक्ष॑साम॒न्तर्हि॑त्यै।।9।।
170100
य॒च्छ॒ति॒ वरु॑ण॒न्तृतीय॒॑व्विजि॑त्या असृजत॒ सम॑ृद्ध्यै हन॒ो
मित्र॑द्रु॒गिति॑ हन्ति॒ स्तृत्यै॒ त्रीणि॑ च ।।1।।
170201
धा॒त्रे पु॑र॒ोडाश॒न्द्वाद॑शकपाल॒न्निर्व॑पति। सँव्व॒थ्स॒रो वै
धा॒ता। सँव्व॒थ्स॒रेणै॒वास्मै॑ प्र॒जाः प्रज॑नयति। अन्वे॒वास्म॒ा

अनुमतिर्मन्यते। राते राका। प्र सिनीवाली जनयति। प्रजास्वेव
प्रजातासु कुह्वा वाचन्दधाति। मिथुनौ गावौ दक्षिणा
समृद्ध्यै। आग्नावैष्णवमेकादशकपालन्निर्वपति।
ऐन्द्रावैष्णवमेकादशकपालम्।।10।।
170202
वैष्णवन्त्रिकपालम्।
वीर्यँव्वा अग्निः। वीर्यमिन्द्रः। वीर्यँव्विष्णुः। प्रजा
एव प्रजाता वीर्ये प्रतिष्ठापयति। तस्मात्प्रजा वीर्यावतीः।
वामन ऋषभो वही दक्षिणा। यद्वही। तेनाग्नेयः। यदृषभः।।11।।
170203
तेनैन्द्रः। यद्वामनः। तेन वैष्णवस्समृद्ध्यै।
अग्नीषोमीयमेकादशकपालन्निर्वपति।इन्द्रासोमीय
मेकादशकपालम्। सौम्यञ्चरुम्। सोमो वै रेतोधाः। अग्नि॑
प्रजानां प्रजनयिता। वृद्धानामिन्द्र॑ प्रदापयिता। सोम
एवास्मै रेतो दधाति।।12।।
170204
अग्नि॑ प्रजां प्रजनयति।
वृद्धामिन्द्र॑ प्रयच्छति। बभ्रुर्दक्षिणा समृद्ध्यै।
सोमापौष्णञ्चरुन्निर्वपति। ऐन्द्रापौष्णञ्चरुम्।
सोमो वै रेतोधाः। पूषा पशूनां प्रजनयिता। वृद्धानामिन्द्रः
प्रदापयिता। सोम एवास्मै रेतो दधाति। पूषा पशून्प्रजनयति।।13।।
170205
वृद्धानिन्द्र॑ प्रयच्छति। पौष्णश्चरुर्भवति। इयँव्वै पूषा।
अस्यामेव प्रतितिष्ठति। श्यामो दक्षिणा समृद्ध्यै। बहु वै
पुरुषो मेध्यमुपगच्छति। वैश्वानरन्द्वादशकपालन्निर्वपति।
सव्वँथ्सरो वा अग्निर्वैश्वानरः। सव्वँथ्सरेणैवैन स्वदयति।
हिरण्यन्दक्षिणा।।14।।
170206
पवित्रँव्वै हिरण्यम्। पुनात्येवैनम्।
बहु वै राजन्योऽनृतङ्करोति। उप जाम्यै हरते। जिनाति
ब्राह्मणम्। वदत्यनृतम्। अनृते खलु वै क्रियमाणे वरुणो

गृह्णाति। वारुणय्यँवमयञ्चरुन्निर्वपति।
वरुणपाशादेवैनं मुञ्चति। अश्वो दक्षिणा। वारुणो हि
देवतयाऽश्वस्समृद्ध्यै।।15।।
170200
ऐन्द्रावैष्णवमेकादशकपालँय्यदृषभो दधाति पूषा पशून्प्र
जनयति हिरण्यन्दक्षिणा दक्षिणैकञ्च।।2।।
170301
रत्निनामेतानि हवीꣳषि भवन्ति। एते वै राष्ट्रस्य
प्रदातारः। एतेऽपादातारः। य एव राष्ट्रस्य प्रदातारः।
येऽपादातारः। त एवास्मै राष्ट्रं प्रयच्छन्ति। राष्ट्रमेव
भवति। यथ्समाहृत्य निर्वपेत्। अरत्निनस्स्युः।
यथायथन्निर्वपति रत्नित्वाय।।16।।
170302
यथ्सद्यो निर्वपेत्।
यावतीमेकेन हविषाऽऽशिषमव रुन्धे। तावतीमवरुन्धीत।
अन्वहन्निर्वपति। भूयसीमेवाशिषमव रुन्धे। भूयसो
यज्ञक्रतूनुपैति। बार्हस्पत्यञ्चरुन्निर्वपति ब्रह्मणो
गृहे। मुखत एवास्मै ब्रह्म सश्यति। अथो ब्रह्मन्नेव
क्षत्रमन्वारम्भयति। शितिपृष्ठो दक्षिणा समृद्ध्यै।।17।।
170303
ऐन्द्रमेकादशकपालꣳ राजन्यस्य गृहे। इन्द्रियमेवावरुन्धे।
ऋषभो दक्षिणा समृद्ध्यै। आदित्यञ्चरुं महिष्यै गृहे।
इयँव्वा अदितिः। अस्यामेव प्रतितिष्ठति। धेनुर्दक्षिणा
समृद्ध्यै। भगाय चरुव्वाँवातायै गृहे। भगमेवास्मिन्दधाति।
विचित्तगर्भा पष्ठौही दक्षिणा समृद्ध्यै।।18।।
170304
नैर्ऋतञ्चरुं
परिवृक्त्यै गृहे कृष्णानां व्रीहीणान्नखनिर्भिन्नम्।
पाप्मानमेव निर्ऋतिन्निरवदयते। कृष्णा कूटा दक्षिणा
समृद्ध्यै। आग्नेयमष्टाकपालꣳ सेनान्यो गृहे।
सेनामेवास्य सश्यति। हिरण्यन्दक्षिणा समृद्ध्यै।

वा॒रु॒णन्दश॑कपालꣳ सू॒तस्य॑ गृ॒हे। व॒रु॒ण॒स॒वमे॒वाव॑ रुन्धे।
म॒हानि॑रष्टो॒ दख्षि॑णा॒ सम॑ृद्ध्यै। मा॒रु॒तꣳ
स॒प्तक॑पालङ्ग्रा॒म॒ण्यो॑ गृ॒हे।।19।।
170305
अन्न॒ँव्वै म॒रुत॑ः।
अन्न॑मे॒वाव॑ रुन्धे। पृश्नि॒र्दख्षि॑णा॒ सम॑ृद्ध्यै।
सा॒वि॒त्रन्द्वाद॑शकपालङ्क्ष॒त्तुर्गृ॒हे प्रसू॑त्यै।
उ॒प॒ध्व॒स्तो दख्षि॑णा॒ सम॑ृद्ध्यै। आ॒श्वि॒नन्द्वि॑कपा॒लꣳ
स॑ङ्ग्रही॒तुर्गृ॒हे। अ॒श्विनौ॒ वै दे॒वाना॑ं भि॒षजौ॑।
ताभ्या॑मे॒वास्मै॑ भेष॒जङ्क॑रोति। स॒वा॒त्यौ॑ दख्षि॑णा॒ सम॑ृद्ध्यै।
पौ॒ष्णञ्च॒रुं भा॑गदु॒घस्य॑ गृ॒हे।।20।।
170306
अन्न॒ँव्वै पू॒षा।
अन्न॑मे॒वाव॑ रुन्धे। श्या॒मो दख्षि॑णा॒ सम॑ृद्ध्यै।
रौ॒द्रङ्गा॑वीधु॒कञ्च॒रुम॑क्षावा॒पस्य॑ गृ॒हे। अ॒न्त॒त ए॒व
रु॒द्रन्नि॒रव॑दयते। श॒ब॒ल उ॒द्वा॑रो॒ दख्षि॑णा॒ सम॑ृद्ध्यै।
द्वाद॑शै॒तानि॑ ह॒वीꣳषि॑ भवन्ति। द्वाद॑श॒ मासा॑स्सँव्वथ्स॒रः।
स॒ँव्व॒थ्स॒रेणै॒वास्मै॑ रा॒ष्ट्रमव॑रुन्धे।रा॒ष्ट्रमे॒व भ॑वति।।21।।
170307
यन्न प्र॑ति नि॒र्वपे॑त्। र॒त्निन॑ आ॒शिषोऽव॑रुन्धीरन्। प्रति॒
निर्व॑पति। इन्द्रा॑य सु॒त्राम्णे॑ पु॒रो॒डाश॒मेका॑दशकपालम्।
इन्द्रा॑याꣳहो॒मुचे॑। आ॒शिष॑ ए॒वाव॑रुन्धे। अ॒यन्नो॒ राजा॑ वृ॒त्र॒हा
राजा॑ भू॒त्वा वृ॒त्रव॑ँध्या॒दित्या॑ह। आ॒शिष॑मे॒वैतामाशा॑स्ते।
मै॒त्रा॒बा॒र्॒ह॒स्प॒त्यं भ॑वति। श्वे॒तायै॑ श्वे॒तव॑थ्सायै दु॒ग्धे।।22।।
170308
बा॒र्॒ह॒स्प॒त्ये मै॒त्रमपि॑ दधाति। ब्रह्म॑ चै॒वास्मै॑
ख्ष॒त्रञ्च॑ स॒मीची॑ दधाति। अथो॒ ब्रह्म॑न्ने॒व ख्ष॒त्रं
प्रति॑ष्ठापयति। बा॒र्॒ह॒स्प॒त्येन॒ पूर्वे॑ण॒ प्रच॑रति। मु॒ख॒त
ए॒वास्मै॒ ब्रह्म॒ सश्य॑ति। अथो॒ ब्रह्म॑न्ने॒व ख्ष॒त्रम॒न्वा
र॑म्भयति। स्व॒य॒ङ्कृ॒ता वेदि॑र्भवति। स्व॒य॒न्दि॒नं ब॒र्॒हिः।
स्व॒य॒ङ्कृ॒त इ॒ध्मः। अन॑भिजितस्या॒भिजि॑त्यै।

तस्मा॒द्राज्ञा॒मर॑ण्यम॒भिजि॑तम्। सैव श्वे॒ता श्वे॒तव॑थ्सा॒

दक्षि॑णा॒ समृ॑द्ध्यै ।।23।।

170300

र॒लि॒त्वाय॒ समृ॑द्ध्यै पष्ठौही दक्षि॑णा॒ समृ॑द्ध्यै ग्राम॒ण्यो॑

गृहे भा॑गदु॒घस्य॑ गृहे भ॑वति दु॒ग्धे॑ऽभिजि॑त्यै॒ द्वे च॑ ।।3।।

170401

दे॒व॒सु॒वामे॒तानि॑ ह॒वीꣳषि॑ भवन्ति। ए॒ताव॑न्तो॒ वै दे॒वानाꣳ॑

स॒वाः। त ए॒वास्मै॑ स॒वान्प्रय॑च्छन्ति। त ए॑नꣳ सुवन्ते।

अ॒ग्निरे॒वैन॑ङ्गृहप॑तीनाꣳ सुवते। सोमो॒ व॒न॒स्पती॑नाम्। रु॒द्रः

प॑शू॒नाम्। बृह॒स्पति॑र्वा॒चाम्। इन्द्रो॑ ज्ये॒ष्ठाना॑म्।

मि॒त्रस्स॒त्याना॑म्।।24।।

170402

वरु॑णो॒ धर्म॑पतीनाम्। ए॒तदे॒व सर्व॑ं भवति।

स॒वि॒ता त्वा॑ प्रस॒वानाꣳ॑ सुवता॒मिति॒ हस्त॑ङ्गृह्णाति॒ प्रसू॑त्यै।

ये दे॑वा देव॒स्सुव॒स्थेत्या॑ह। य॒था॒य॒जुरे॒वैतत्। म॒ह॒ते

ख्ष॒त्राय॑ मह॒त आधि॑पत्याय मह॒ते जान॑राज्या॒येत्या॑ह।

आ॒शिष॑मे॒वैतामा शा॑स्ते। ए॒ष वो॑ भरता राजा॒ सोमो॒ऽस्माकं॑

ब्राह्म॒णाना॒ꣳ राजेत्या॑ह। तस्मा॒थ्सोम॑राजानो ब्राह्म॒णाः।

प्रति॒ त्यन्नाम॑ रा॒ज्यम॑धा॒यीत्या॑ह ।।25।।

170403

रा॒ज्यमे॒वास्मि॒न्

प्रति॑दधाति। स्वान्त॒नुव॒व्वँरु॑णो अशिश्रे॒दित्या॑ह।

व॒रु॒ण॒स॒वमे॒वाव॑रुन्धे। शुचे॑र्मि॒त्रस्य॒ व्रत्या॑ अभू॒मेत्या॑ह।

शुचि॑मे॒वैन॒व्व्रँत्य॑ङ्करोति। अम॑न्महि मह॒त ऋ॒तस्य॒ नामेत्या॑ह।

म॒नु॒त ए॒वैन॑म्। सर्वे॒ व्राता॒ वरु॑णस्याभूव॒न्नित्या॑ह।

सर्व॑व्रातमे॒वैन॑ङ्करोति। वि मि॒त्र ए॒वैरर॑ातिमतारी॒दित्या॑ह ।।26।।

170404

अरा॑तिमे॒वैन॑न्तारयति। असू॑षुदन्त य॒ज्ञिया॑ ऋ॒तेनेत्या॑ह।

स्व॒दय॑त्ये॒वैन॑म्। व्यु॑ त्रि॒तो जरि॒माण॑न्न आन॒डित्या॑ह।

आयु॑रे॒वास्मि॑न्दधाति। द्वाभ्या॑ँव्विमृ॑ष्टे। द्विपाद्यज॑मानः

प्रति॑ष्ठित्यै। अ॒ग्नी॒षो॒मीय॑स्य॒ चैका॑दशकपालस्य देवसु॒वाञ्च॑

ह॒वि॒षा॑मुग्नये॑ स्विष्ट॒कृते॑ स॒मव॑द्यति। दे॒वता॑भिरे॒वैन॑

मुभ॒यत॒ᳶ परि॑गृह्णाति। वि॒ष्णु॒क्र॒मान्क्र॑मते। विष्णु॑रे॒व

भू॒त्वेमाँ॒ल्लो॒कान॒भिज॑यति।।27।।

170400

स॒त्याना॑मधा॒यीत्या॑हाता॒री॒दित्या॑ह क्रमत॒ एक॑ञ्च।।4।।

170501

अ॒र्थेत॒स्स्थेति॑ जुहोति। आहु॑त्यै॒वैना॑ नि॒ष्क्रीय॑ गृह्णाति। अथो॑

ह॒विष्कृ॑तानामे॒वाभिघृ॑तानाङ्गृह्णाति। वह॑न्तीनाङ्गृह्णाति। ए॒ता वा

अ॒पाᳵ रा॒ष्ट्रम्। रा॒ष्ट्रमे॒वास्मै॑ गृह्णाति। अथो॒ श्रिय॑मे॒वैन॑

म॒भिव॑हन्ति। अ॒पां पति॑रु॒सीत्या॑ह। मि॒थु॒नमे॒वाक॑ः।

वृषा॑ऽस्यू॒र्मिरित्या॑ह ।।28।।

170502

ऊ॒र्मि॒मन्त॑मे॒वैन॑ङ्करोति।

वृ॒ष॒से॒नो॑ऽसीत्या॑ह। सेना॑मे॒वास्य॒ सश्य॑ति। व्र॒ज॒क्षित॒

स्स्थेत्या॑ह। ए॒ता वा अ॒पाँव्विश॑ः। विश॑मे॒वास्मै॒ पर्यू॑हति।

म॒रुता॒मोज॒स्स्थेत्या॑ह। अन्नँ॒व्वै म॒रुत॑ः। अन्न॑मे॒वाव॑रुन्धे।

सूर्य॑वर्चस॒स्स्थेत्या॑ह ।।29।।

170503

रा॒ष्ट्रमे॒व व॑र्च॒स्व्य॑कः।

सूर्य॑त्वचस॒स्स्थेत्या॑ह। स॒त्यव्वाँ ए॒तत्। यद्वर्॒ष॑ति।

अनृ॑त॒य्यँद॒ातप॑ति॒ वर्॒ष॑ति। स॒त्या॒नृ॒ते ए॒वाव॑रुन्धे। नैन॑ᳵ

सत्यानृ॒ते उ॑दि॒ते हि॑ंस्तः। य ए॒वँव्वेद॑। मान्दा॒स्स्थेत्या॑ह।

रा॒ष्ट्रमे॒व ब्र॑ह्मवर्च॒स्य॑कः ।।30।।

170504

वाशा॒स्स्थेत्या॑ह।

रा॒ष्ट्रमे॒व व॒श्य॑कः। शक्व॑री॒स्स्थेत्या॑ह। प॒शवो॒ वै शक्व॑रीः।

प॒शूने॒वाव॑रुन्धे। वि॒श्व॒भृत॒स्स्थेत्या॑ह। रा॒ष्ट्रमे॒व

प॑य॒स्व्य॑कः। ज॒न॒भृत॒स्स्थेत्या॑ह। रा॒ष्ट्रमे॒वेन्द्रि॒या॒व्य॑कः।

अ॒ग्नेस्ते॑ज॒स्या॑स्स्थेत्या॑ह ।।31।।

170505

रा॒ष्ट्रमे॒व ते॑ज॒स्व्य॑कः।

अपामोषधीनाꣳ रसस्स्थेत्याह। राष्ट्रमेव मधव्यमकः।
सारस्वतङ्ग्रहङ्गृह्णाति। एषा वा अपाम्पृष्ठम्। यथ्सरस्वती।
पृष्ठमेवैनꣳ समानानाङ्करोति। षोडशभिर्गृह्णाति। षोडशकलो
वै पुरुषः। यावानेव पुरुषः। तस्मिन्वीर्यन्दधाति।
षोडशभिर्जुहोति षोडशभिर्गृह्णाति। द्वात्रिꣳशथ्संपद्यन्ते।
द्वात्रिꣳशदक्षराऽनुष्टुक्। वागनुष्टुफ्सर्वाणि छन्दाꣳसि।
वाचैवैनꣳ सर्वेभिश्छन्दोभिरभिषिञ्चति ।।32।।
170500
ऊर्मिरित्याह सूर्यवर्चसस्थेत्याह ब्रह्मवर्चस्यक
स्तेजस्यास्स्थेत्याहैव पुरुषष्षट् च ।।5।।
170601
देवीरापस्सं मधुमतीर्मधुमतीभिस्सृज्यध्वमित्याह।
ब्रह्मणैवैनास्सꣳ सृजति। अनाधृष्टास्सीदतेत्याह।
ब्रह्मणैवैनास्सादयति। अन्तरा होतुश्च धिष्णियं
ब्राह्मणाच्छꣳसिनश्च सादयति। आग्नेयो वै होता। ऐन्द्रो
ब्राह्मणाच्छꣳसी। तेजसा चैवेन्द्रियेण चोभयतो राष्ट्रं
परिगृह्णाति। हिरण्येनोत्पुनाति। आहुत्यै हि पवित्राभ्या
मुत्पुनन्ति व्यावृत्त्यै ।।33।।
170602
शतमानं भवति। शतायुᳶ पुरुष
श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति।
अनिभृष्टमसीत्याह। अनिभृष्ट ह्येतत् । वाचो बन्धुरित्याह ।
वाचो ह्येष बन्धुः । तपोजा इत्याह । तपोजा ह्येतत् । सोमस्य
दात्रमसीत्याह ।।34।।
170603
सोमस्य ह्येतद्दात्रम्। शुक्रा व
श्शुक्रेणोत्पुनामीत्याह। शुक्रा ह्यापः। शुक्रꣳ हिरण्यम्।
चन्द्राश्चन्द्रेणेत्याह। चन्द्रा ह्यापः। चन्द्रꣳ हिरण्यम्।
अमृता अमृतेनेत्याह। अमृता ह्यापः। अमृतꣳ हिरण्यम् ।।35।।
170604
स्वाहा राजसूयायेत्याह। राजसूयाय ह्येना उत्पुनाति।

स॒ध॒मादो॑ द्यु॒म्निनी॒रूर्ज॑ ए॒ता इति॑ वारु॒ण्यर्चा गृ॑ह्णाति।
व॒रु॒ण॒स॒वमे॒वाव॑रुन्धे। एक॑या गृह्णाति। ए॒कु॒धैव यज॑माने
वी॒र्य॑न्दधाति। ख्ष॒त्त्रस्योल्ब॑मसि ख्ष॒त्त्रस्य॒ योनि॑र॒सीति॑
ता॒र्प्यञ्चो॒ष्णीषञ्च॒ प्रय॑च्छति सयोनि॒त्वाय॑। एक॑शतेन
दर्भपुञ्जी॒लैः᳚ प॑वयति। श॒तायु॒र्वै पुरु॑षश्श॒तवी॑र्यः।
आ॒त्मैक॑श॒तः ।।36।।
170605
यावा॑ने॒व पुरु॑षः। तस्मि॑न्वी॒र्य॑न्दधाति।
दध्या॑शयति। इ॒न्द्रि॒यमे॒वाव॑ रुन्धे। उ॒दु॒म्बर॑माशयति।
अ॒न्नाद्य॒स्याव॑रुद्ध्यै। शष्पा॒॑ण्याशयति। सुरा॑बलिमे॒वैन॑ङ्करोति।
आ॒विद॑ ए॒ता भ॑वन्ति। आ॒विद॑मे॒वैन॑ङ्गमयन्ति ।।37।।
170606
अ॒ग्निरे॒वैन॒ङ्गार्ह॑पत्येनावति। इन्द्र॑ इन्द्रि॒येण॑। पू॒षा
प॒शुभि॑ः। मि॒त्रावरु॑णौ प्राणाप॒ानाभ्या॒॑म्। इन्द्रो॑ वृ॒त्राय॒
वज्र॒मुद॑यच्छत्। स दिव॑मलिखत्। सो॑ऽर्य॒म्णः᳚ पन्था॑ अभवत्। स
आवि॑न्ने॒ द्यावा॑पृथि॒वी धृ॒तव्र॑ते॒ इति॒ द्यावा॑पृथि॒वी उपा॑धावत्।
स आ॒भ्यामे॒व प्रसू॑त॒ इन्द्रो॑ वृ॒त्राय॒ वज्रं॒ प्राह॑रत्।
आवि॑न्ने॒ द्यावा॑पृथि॒वी धृ॒तव्र॑ते॒ इति॒ यदाह॑ ।।38।।
170607
आ॒भ्यामे॒व प्रसू॑तो॒ यज॑मानो॒ वज्रं॒ भ्रातृ॑व्याय॒ प्रह॑रति। आवि॑न्ना
दे॒व्यदि॑तिर्वि॒श्वरू॒पीत्या॑ह। इ॒यँव्वै दे॒व्यदि॑तिर्वि॒श्वरू॒पी।
अ॒स्यामे॒व प्रति॑ तिष्ठति। आवि॑न्नोऽयम॒सावा॑मुष्याय॒णो॑ऽस्याँ
व्वि॒श्यस्मि॒न्राष्ट्र इत्या॑ह। वि॒शैवैन॑ꣳ राष्ट्रे॒ण॒ सम॑र्धयति।
म॒ह॒ते ख्ष॒त्त्राय॑ मह॒त आधि॑पत्याय मह॒ते जान॑राज्या॒येत्या॑ह।
आ॒शिष॑मे॒वैतामाशा॑स्ते। ए॒ष वो॑ भरत॒ा राज॒ा सोमो॒ऽस्माकं॑
ब्राह्म॒णाना॒ꣳ राजेत्या॑ह। तस्मा॒थ्सोम॑राजानो ब्राह्म॒णाः ।।39।।
170608
इन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्न इति॒ धनुः᳚ प्रय॑च्छति॒
विजि॑त्यै। श॒त्रु॒बाध॑ना॒स्स्थेतीषू॒न्। शत्रू॑ने॒वास्य॑ बाधन्ते।
पा॒त मा॑ प्र॒त्यञ्चं॑ पा॒त मा॑ ति॒र्यञ्च॑म॒न्वञ्चं॑ मा
पा॒तेत्या॑ह। ति॒स्रो वै श॑र॒व्या॑ः। प्र॒तीची॑ ति॒रश्च्य॒नूची॑।

ताभ्य॑ ए॒वैनं॑ पान्ति। दि॒ग्भ्यो मा॑ पा॒तेत्या॑ह। दि॒ग्भ्य ए॒वैनं॑
पान्ति। विश्वा॑भ्यो मा ना॒ष्ट्राभ्य॑ः पा॒तेत्या॑ह । अप॑रिमिताद॒वैनं॑
पान्ति। हिर॑ण्यवर्णावु॒षसाँ॑व्वि॒रोक इति॑ त्रि॒ष्टुभा॑ बा॒हू
उद्गृ॑ह्णाति। इ॒न्द्रि॒यँव्वै वी॒र्यं॑न्त्रि॒ष्टुक्। इ॒न्द्रि॒यमे॒व
वी॒र्य॑मु॒परि॑ष्टादा॒त्मन्ध॑त्ते ।।40।।
170600
व्यावृ॑त्त्यै दा॒त्रम॒सीत्या॑हा॒मृत॒ꣳ हिर॑ण्यमेकश॒तो
ग॑मय॒न्त्याह॑ ब्राह्म॒णा ना॒ष्ट्राभ्य॑ः पा॒तेत्या॑ह च॒त्वारि॑ च ।।6।।
170701
दिश॒ो व्यास्था॑पयति। दि॒शाम॒भिजि॑त्त्यै। यद॑नु प्र॒क्रामे॑त्। अ॒भि
दिशो॑ जयेत्। उत्तु मा॑द्येत्। मन॒साऽनु॒ प्रक्रा॑मति। अ॒भि दिशो॑ जयति।
नोन्मा॑द्यति। स॒मिध॒मा ति॒ष्ठेत्या॑ह। तेज॑ ए॒वाव॑रुन्धे ।।41।।
170702
उ॒ग्रामा ति॒ष्ठेत्या॑ह। इ॒न्द्रि॒यमे॒वाव॑रुन्धे। वि॒राज॒मा
ति॒ष्ठेत्या॑ह। अ॒न्नाद्य॑मे॒वाव॑रुन्धे। उदी॑ची॒मा ति॒ष्ठेत्या॑ह।
प॒शूने॒वाव॑रुन्धे। ऊ॒र्ध्वामाति॒ष्ठेत्या॑ह। सु॒व॒र्गमे॒व
लो॒कम॒भिज॑यति। अनू॒ज्जि॑हीते। सु॒व॒र्गस्य॑ लो॒कस्य॒
सम॑ष्ट्यै ।।42।।
170703
मा॒रु॒त ए॒ष भ॑वति। अन्नँ॒व्वै म॒रुत॑ः।
अन्न॑मे॒वाव॑रुन्धे। एक॑विꣳशतिकपालो भवति॒ प्रति॑ष्ठित्यै। यो॑ऽरण्ये
ऽनु॒वा॒क्यो॑ ग॒णः। तं म॑ध्य॒त उप॑दधाति। ग्रा॒म्यैरे॒व
प॒शुभि॑रार॒ण्यान्प॒शून्परि॑ गृह्णाति। तस्मा॑द्ग्रा॒म्यैः
प॒शभि॑रार॒ण्याः प॒शव॒ः परि॑गृहीताः। पृथि॑र्वै॒न्यः। अ॒भ्य॑षिच्यत।।43।।
170704
स रा॒ष्ट्रन्नाभ॑वत्। स ए॒तानि॑ पा॒र्थान्य॑पश्यत्। तान्य॑जुहोत्।
तैर्वै॑ स रा॒ष्ट्रम॑भवत्। यत्पा॒र्थानि॑ जु॒होति॑। रा॒ष्ट्रमे॒व भ॑वति।
बा॒र्ह॒स्प॒त्यं पूर्वे॑षामु॒त्त॒मं भ॑वति। ऐ॒न्द्रमु॒त्त॑रेषां प्र॒थ॒मम्।
ब्रह्म॑ चै॒वास्मै॑ ख्ष॒त्रञ्च॑ स॒मीची॑ दधाति। अथ॒ो ब्रह्म॑न्ने॒व
ख्ष॒त्त्रं प्रति॑ष्ठापयति ।।44।।
170705

षट्पुरस्तादभिषेकस्य जुहोति।

षडुपरिष्टात्। द्वादश संपद्यन्ते। द्वादश मासास्सव्वँथ्सरः।

सव्वँथ्सरः खलु वै देवानां पूः। देवानामेव पुरं मध्यतो

व्यवसर्पति। तस्य न कुतश्चनोपाव्याधो भवति। भूताना

मवेष्टीर्जुहोति। अत्रात्र वै मृत्युर्जायते। यत्रयत्रैव

मृत्युर्जायते। ततं एवैनमवयजते। तस्माद्राजसूयेनेजानो

नाभिचरितवै। प्रत्यगेनमभिचारस्स्तृणुते ।।45।।

170700

रुन्धे समष्ट्या असिच्यत स्थापयति जायते पञ्च च ।।7।।

170801

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूल

चर्मोपस्तृणाति। यैव सोमे त्विषिः। या शार्दूले। तामेवावरुन्धे।

मृत्योर्वा एष वर्णः। यच्छार्दूलः। अमृतꣳ हिरण्यम्।

अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति । अमृतमेव

मृत्योरन्तर्धत्ते। शतमानं भवति ।।46।।

170802

शतायुः पुरुष श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। दिद्योन्मा

पाहीत्युपरिष्टादधि निदधाति। उभयत एवास्मै शर्म दधाति।

अवेष्टा दन्दशूका इति क्लीबꣳ सीसेन विध्यति।

दन्दशूकानेवावयजते। तस्मात्क्लीबन्दन्दशूका दꣳशुकाः।

निरस्तन्नमुचेश्शिर इति लोहितायसन्निरस्यति। पाप्मानमेव

नमुचिन्निरवदयते। प्राणा आत्मनः पूर्वेऽभिषिच्या इत्याहुः।।47।।

170803

सोमो राजा वरुणः। देवा धर्मसुवश्च ये। ते ते वाचꣳ

सुवन्तान्ते ते प्राणꣳ सुवन्तामित्याह। प्राणानेवात्मनः

पूर्वानभिषिञ्चति। यद्ब्रूयात्। अग्नेस्त्वा तेजसा

ऽभिषिञ्चामीति। तेजस्व्येव स्यात्। दुश्चर्मा तु भवेत्।

सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह। सौम्यो वै देवतया

पुरुषः।।48।।

170804

स्वयैवैनन्देवतयाऽभिषिञ्चति।

अ॒ग्नेस्तेज॒सेत्या॑ह। तेज॑ ए॒वास्मि॒न्दधाति। सूर्य॑स्य॒
वर्च॒सेत्या॑ह। वर्च॑ ए॒वास्मि॒न्दधाति। इन्द्र॑स्येन्द्रि॒येणेत्या॑ह।
इ॒न्द्रि॒यमे॒वास्मि॒न्दधाति। मि॒त्रावरु॑णयोर्वी॒र्ये॑णेत्या॑ह।
वी॒र्य॑मे॒वास्मि॒न्दधाति। म॒रुता॒मोज॒सेत्या॑ह ।।49।।
170805
ओज॑ ए॒वास्मि॒न्दधाति। ख्ष॒त्राणा॑ङ्ख्ष॒त्रप॑तिर॒सीत्या॑ह।
ख्ष॒त्राणा॑मे॒वैन॑ङ्ख्ष॒त्रप॑तिङ्करोति। अति॑ दि॒वस्पा॒हीत्या॑ह।
अत्य॒न्यान्पा॒हीति॒ वावैतदा॑ह। स॒मावव॑वृत्रन्नध॒रागुदी॑ची॒रित्या॑ह।
रा॒ष्ट्रमे॒वास्मि॒न्ध्रु॒वम॑कः। उ॒च्छेष॑णेन जुहोति। उ॒च्छेष॑णभागो॒
वै रु॒द्रः। भा॒ग॒धेये॑नै॒व रु॒द्रन्नि॒रव॑दयते ।।50।।
170806
उद॑ङ् प॒रेत्याग्नी॒द्ध्रे जुहोति। ए॒षा वै रु॒द्रस्य॒ दिक्। स्वाया॑मे॒व
दि॒शि रु॒द्रन्नि॒रव॑दयते। रुद्र॒ यत्ते॒ क्रयी॒ पर॒न्नामेत्या॑ह।
यद्वा अ॑स्य॒ क्रयी॒ पर॒न्नाम॑। तेन॒ वा ए॒ष हि॑नस्ति। यꣳ हि॒नस्ति॑।
तेनै॒वैनꣳ॑ स॒ह श॑मयति। तस्मै॑ हु॒तम॑सि य॒मेष्ट॑म॒सीत्या॑ह।
य॒मादे॒वास्य॑ मृत्युमव॑यजते ।।51।।
170807
प्रजा॑पते॒ न त्वदे॒तान्य॒न्य
इति॒ तस्यै॑ गृहे जु॑हुयात्। याङ्का॒मये॑त रा॒ष्ट्रम॑स्यै प्र॒जा
स्या॒दिति॑। रा॒ष्ट्रमे॒वास्यै॑ प्र॒जा भ॑वति। पू॒र्णम॒ये॑नाध्व॒र्यु
र॒भिषि॑ञ्चति। ब्र॒ह्म॒व॒र्च॒सम॒वास्मि॒न्त्विषि॑न्दधाति। औदु॑म्बरेण
राज॒न्यः॑। ऊर्ज॑मे॒वास्मि॒न्नन्नाद्य॒न्दधाति। आश्व॑त्थेन॒ वैश्यः॑।
विश॑मे॒वास्मि॒न्पुष्टि॑न्दधाति। नैय॑ग्रोधेन॒ जन्यः॑।
मि॒त्राण्ये॒वास्मै॑ कल्पयति। अथो॒ प्रति॑ष्ठित्यै ।।52।।
170800
भ॒व॒त्या॒हु॒ꣳ पुरु॑ष॒ ओज॒सेत्या॑ह नि॒रव॑दयते यजत॒े जन्यो॒ द्वे च॑ ।।8।।
170901
इन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्न इति॒ रथ॑मु॒पाव॑हरति॒
विजि॑त्यै। मि॒त्रावरु॑णयोस्त्वा प्रश॒ास्त्रोꣳ प्र॒शिषा॑ यु॒नज्मी
त्या॑ह। ब्रह्म॑णै॒वैन॑न्दे॒वता॑भ्याय्युँ॑नक्ति। प्र॒ष्टि॒वा॒हिन॑
य्युँ॑नक्ति। प्र॒ष्टि॒वा॒ही वै दे॑वर॒थः। दे॒व॒र॒थमे॒वास्मै॑ युनक्ति।

त्रयोऽश्वा भवन्ति। रथश्चतुर्थः। द्वौ संव्येष्ठसारथी। षट्थ्सं पद्यन्ते ।।53।।
170902
षड्वा ऋतवः। ऋतुभिरेवैनंय्युँनक्ति।
विष्णुक्रमान्क्रमते। विष्णुरेव भूत्वेमाँल्लोकानभिजयति।
यः खत्रियः प्रतिहितः। सोँऽन्वारभते। राष्ट्रमेव भवति।
त्रिष्टुभाऽन्वारभते। इन्द्रियँव्वै त्रिष्टुक्। इन्द्रियमेव यजमाने दधाति ।।54।।
170903
मरुतांँ प्रसवे जेषमित्याह। मरुद्भिरेव
प्रसूत उज्जयति। आप्तं मन इत्याह। यदेव मनसैप्सीत्।
तदापत्। राजन्यञ्जिनाति। अनाँक्रान्त एवाक्रमते। वि वा एष
इन्द्रियेण वीर्येणर्ध्यते। यो राजन्यञ्जिनाति। समह
मिन्द्रियेण वीर्येणेत्याह ।।55।।
170904
इन्द्रियमेव वीर्यं
मात्मन्धत्ते। पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति
वाराही उपानहावुप मुञ्चते। पशूनाव्वाँ एष मन्युः। यद्वराहः।
तेनैव पशुनां मन्युमात्मन्धत्ते। अभि वा इयः सुषुवाण
ङ्कामयते। तस्यैँश्वरेन्द्रियँव्वीर्यमादातोः। वाराही उपानहा
वुपमुञ्चते। अस्या एवान्तर्धत्ते। इन्द्रियस्य वीर्यस्यानाँत्यै ।।56।।
170905
नमो मात्रे पृथिव्या इत्याहाहिंसायै।
इयदस्यायुरस्यायुर्मे धेहीत्याह । आयुरेवात्मन्धत्ते ।
ऊर्गस्यूर्जं मे धेहीत्याह। ऊर्जमेवात्मन्धत्ते। युङ्ङसि
वर्चोसि वर्चो मयि धेहीत्याह। वर्च एवात्मन्धत्ते। एकधा
ब्रह्मण उपहरति। एकधैव यजमान आयुरूर्जव्वँर्चो दधाति।
रथविमोचनीया जुहोति प्रतिष्ठित्यै ।।57।।
170906
त्रयोऽश्वा भवन्ति।
रथश्चतुर्थः। तस्माँच्चतुर्जुहोति। यदुभौ सहावतिष्ठेताम्।
समानँल्लोकमियाताम्। सह सङ्ग्रहीत्रा रथवाहने रथमा
दधाति। सुवर्गादेवैनँल्लोकादन्तर्दधाति। हःसश्शुचिष

दित्याद॑धाति। ब्रह्म॑णै॒वैन॑मुपाव॒हर॑ति। ब्रह्म॒णाऽऽद॑धाति।
अति॑च्छन्द॒साऽऽद॑धाति। अति॑च्छन्दा॒ वै सर्वा॑णि॒ छन्दा॑ꣳसि।
सर्वे॑भिरे॒वैन॒ञ्छन्दो॑भि॒राद॑धाति। वर्ष्म॒ वा ए॒षा छन्द॑साम्।
यदति॑च्छन्दाः। यदति॑च्छन्दसा॒ दधा॑ति। वर्ष्मै॒वैनꣳ॑
समा॒नाना॑ङ्करोति ।।58।।
170900
प॒द्यन्ते॒ द॒धा॒ति॒ वी॒र्यै॑णेत्या॒हाना॑त्यै॒ प्रति॑ष्ठित्यै॒
ब्रह्म॒णाऽऽद॑धाति स॒प्त च॑ ।।9।।
171001
मि॒त्रो॑ऽसि॒ वरु॑णो॒ऽसीत्या॑ह। मै॒त्रव्वाँ॑ अहः॑। वा॒रु॒णी
रात्रिः॑। अ॒हो॒रा॒त्राभ्या॑मे॒वैन॑मु॒पाव॑हरति। मि॒त्रो॑ऽसि॒
वरु॑णो॒ऽसीत्या॑ह। मै॒त्रो वै दक्षि॑णः। वा॒रु॒णस्स॒व्यः।
वै॒श्व॒दे॒व्या॑मिक्षा॑। स्वमे॒वैनौ॑ भाग॒धेय॑मु॒पाव॑हरति। सम॒हँ
व्विश्वै॑र्दे॒वैरित्या॑ह ।।59।।
171002
वै॒श्व॒दे॒व्यो॑ वै प्र॒जाः। ता
ए॒वाद्या॑ꣳ कुरुते। ख्ष॒त्रस्य॒ नाभि॑रसि ख्ष॒त्रस्य॒
योनि॑र॒सीत्य॑धीवा॒समास्तृ॑णाति सयोनि॒त्वाय॑। स्यो॒नामा सी॑द
सुषदा॒मा सी॒देत्या॑ह। य॒था॒य॒जुरे॒वैतत्। मा त्वा॑हिꣳ॒सी॒न्मा मा॑
हिꣳ॒सी॒दित्या॒हाहिꣳ॑सायै। निष॑साद धृ॒तव्र॑तो॒ वरु॑णꣳ
प॒स्त्या॑स्वा साम्रा॑ज्याय सु॒क्रतु॒रित्या॑ह। साम्रा॑ज्यमे॒वैनꣳ॑
सु॒क्रतु॑ङ्करोति। ब्रह्मा(3)न्त्वꣳ रा॑जन्ब्र॒ह्माऽसि॑ सवि॒ताऽसि॑
स॒त्यस॑व॒ इत्या॑ह। स॒वि॒तार॑मे॒वैनꣳ॑ स॒त्यस॑वङ्करोति ।।60।।
171003
ब्रह्मा(3)न्त्वꣳ रा॑जन्ब्र॒ह्माऽसीन्द्रो॑ऽसि स॒त्यौजा॒ इत्या॑ह।
इन्द्र॑मे॒वैनꣳ॑ स॒त्यौज॑सङ्करोति। ब्रह्मा(3)न्त्वꣳ रा॑जन्
ब्र॒ह्माऽसि॑ मि॒त्रो॑ऽसि सु॒शेव॒ इत्या॑ह। मि॒त्रमे॒वैनꣳ॑
सु॒शेव॑ङ्करोति। ब्रह्मा(3)न्त्वꣳ रा॑जन्ब्र॒ह्मासि॒ वरु॑णोऽसि
स॒त्यध॒र्मेत्या॑ह। वरु॑णमे॒वैनꣳ॑ स॒त्यध॑र्माणङ्करोति। स॒वि॒ता
ऽसि॑ स॒त्यस॑व॒ इत्या॑ह। गा॒य॒त्रीमे॒वैतेना॑भि॒ व्याह॑रति।
इन्द्रो॑ऽसि स॒त्यौजा॒ इत्या॑ह। त्रि॒ष्टुभ॑मे॒वैतेना॑भि॒ व्याह॑रति।।61।।

171004
मि॒त्रो॑ऽसि सु॒शेव॒ इत्या॑ह। जग॑तीमे॒वैतेना॑भि॒ व्याह॑रति।
स॒त्यमे॒ता दे॒वता॑ः। स॒त्यमे॒तानि॒ छन्दा॑ꣳसि। स॒त्यमे॒वाव॑रुन्धे।
वरु॑णोऽसि स॒त्यध॒र्मेत्या॑ह। अ॒नु॒ष्टुभ॑मे॒वैतेना॑भि॒ व्याह॑रति।
स॒त्या॒नृ॒ते वा अ॑नु॒ष्टुप्। स॒त्या॒नृ॒ते वरु॑णः। स॒त्या॒नृ॒ते
ए॒वाव॑रुन्धे ।।62।।
171005
नैन॑ꣳ सत्यानृ॒ते उ॑दि॒ते हि॑स्तः। य ए॒वँ
व्वेद॑। इन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्न इति॒ स्फ्यं प्रय॑च्छति।
वज्रो॒ वै स्फ्यः। वज्रे॑णै॒वास्मा॑ अवरप॒रꣳ र॑न्धयति। ए॒वꣳ हि
तच्छ्रेय॑ः। यद॑स्मा ए॒ते रध्ये॑युः। दिशो॒ऽभ्यय॑ꣳ राजा॑ऽभू॒दिति॒
पञ्चा॒क्षान्प्रय॑च्छति। ए॒ते वै सर्वे॒ऽया॑ः। अप॑राजायिनमे॒वैन॑ङ्करोति।।63।।
171006
ओ॒द॒नमुद्ब्रु॑वते। प॒र॒मे॒ष्ठी वा ए॒षः। यदो॑द॒नः। प॒र॒मा
मे॒वैन॒ श्रिय॑ङ्गमयति। सुश्लो॒काँ 4 सुम॑ङ्ग॒लाँ 4 सत्य॑रा॒जा 3
नित्या॑ह। आ॒शिष॑मे॒वैतामा शा॑स्ते। शौ॒न॒श्शे॒पमाख्या॑पयते।
व॒रु॒ण॒पा॒शादे॒वैनं॑ मुञ्चति। प॒र॒श्श॒तं भ॑वति। श॒ताय॒ुꣴ
पुरु॑षश्श॒तेन्द्रि॑यः। आयु॑ष्ये॒वेन्द्रि॒ये प्रति॑ तिष्ठति।
मा॒रु॒तस्य॒ चैक॑विꣳशतिकपालस्य वैश्वदे॒व्यै चा॒मिक्षा॑या अ॒ग्नये॑
स्विष्ट॒कृते॑ स॒मव॑द्यति। दे॒वता॑भिरे॒वैन॑मुभ॒यत॒ꣴ परि॑ गृह्णाति।
अ॒पान्नप्त्रे॒ स्वाहो॒र्जो नप्त्रे॒ स्वाहा॒ऽग्नये॑ गृ॒हप॑तये॒
स्वाहेति॑ ति॒स्र आहु॑तीर्जुहोति। त्रय॑ इ॒मे लो॒काः। ए॒ष्वेव
लो॒केषु॒ प्रति॑ तिष्ठति ।।64।।
171000
दे॒वैरित्या॑ह स॒त्यस॑वङ्करोति त्रि॒ष्टुभ॑मे॒वैतेना॑भि॒ व्याह॑रति
सत्यानृ॒ते ए॒वाव॑रुन्धे करोति श॒तेन्द्रि॑य॒ष्षट् च॑ ।।10।।
ए॒तद्ब्रा॑ह्मणानि धा॒त्रे र॒त्नि॒नाँ॑न्देवसु॒वाम॒र्थेतो॒ देवी॒र्दिश॒
स्सोम॒स्येन्द्र॑स्य मि॒त्रो दश॑ ।।10।।
170000
ए॒तद्ब्रा॑ह्मणानि वैष्ण॒वन्त्रि॑कपा॒लमन्न॑व्वै पू॒षा वाशा॒स्स्थे
त्या॑ह॒ दिशो॒ व्यास्था॑पय॒त्युद॑ङ्प॒रेत्य॒ ब्रह्मा 3 न्त्वꣳ रा॑ज॒

_श्चतु॑ष्षष्टिः।। ए॒तद्ब्रा॑ह्मणानि॒ प्रति॑तिष्ठति ।।64।।

हरिः॑ ओम्।। श्रीकृष्णार्पणमस्तु ।।

सप्तम प्रपाठकस्समाप्तः

180000
तैत्तिरीयब्राह्मणे प्रथमाष्टके अष्टम प्रपाठक प्रारम्भः । हरिः ओम् ।।
180101
वरुणस्य सुषुवाणस्य दशधेन्द्रियँव्वीर्यं पराऽपतत् । तथ्सःसृद्भिरनु समसर्पत्
। तथ्सःसृपाः सःसृत्त्वम् । अग्निना देवेन
प्रथमेऽहन्ननु प्रायुङ्क्त । सरस्वत्या वाचा द्वितीये । सवित्रा प्रसवेन तृतीये
। पूष्णा पशुभिश्चतुर्थे । बृहस्पतिना ब्रह्मणा पञ्चमे । इन्द्रेण देवेन षष्ठे ।
वरुणेन स्वया देवतया सप्तमे ।।1।।
180102
सोमेन राज्ञाऽष्टमे । त्वष्ट्रा रूपेण नवमे । विष्णुना यज्ञेनाप्नोत् । यथ्सःसृपो
भवन्ति । इन्द्रियमेव तद्वीर्यँय्यजमान आप्नोति ।
पूर्वापूर्वा वेदिर्भवति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै । पुरस्तादुपसदाः
सौम्येन प्रचरति । सोमो वै रेतोधाः । रेत एव तद्दधाति । अन्तरा त्वाष्ट्रेण ।
रेत एव हितन्त्वष्टा रूपाणि विकरोति । उपरिष्टाद्वैष्णवेन । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रति
तिष्ठति ।।2।।
180100
सप्तमे दधाति पञ्च च ।।1।।
180201
जामि वा एतत्कुर्वन्ति । यथ्सद्यो दीख्षयन्ति सद्यस्सोमङ्क्रीणन्ति । पुण्डरिस्रजां
प्रयच्छत्यजामित्वाय । अङ्गिरसस्सुवर्गँ
ल्लोकय्यँन्तः । अप्सु दीख्षातपसी प्रावेशयन् । तत्पुण्डरीकमभवत् । यत्पुण्डरिस्रजां
प्रयच्छति । साख्षादेव दीख्षातपसी अवरुन्धे ।
दशभिर्वथ्सतरैस्सोमङ्क्रीणाति । दशाख्षरा विराट् ।।3।।
180202
अन्नँव्विराट् । विराजैवान्नाद्यमव रुन्धे । मुष्करा भवन्ति सेन्द्रत्वाय । दशपेयो
भवति । अन्नाद्यस्यावरुद्ध्यै । शतं ब्राह्मणाः
पिबन्ति । शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । सप्तदश
स्तोत्रं भवति । सप्तदशः प्रजापतिः ।।4।।
180203
प्रजापतेराप्त्यै । प्राकाशावध्वर्यवे ददाति । प्रकाशमेवैनङ्गमयति । स्रजमुद्गात्रे
। व्येवास्मै वासयति । रुक्मः होत्रे ।
आदित्यमेवास्मा उन्नयति । अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । प्राजापत्यो वा अश्वः । प्रजापतेराप्त्यै

।।5।।
180204
द्वाद॑श पष्ठौ॒हीर्ब्र॒ह्मणे᳚ । आयु॑रे॒वाव॑रुन्धे । व॒शां मै᳚त्रावरु॒णाय॑ । रा॒ष्ट्रमे॒व
व॒श्य॑कः । ऋ॒ष॒भं ब्रा᳚ह्मणाच्छ॒ꣳसिने᳚ ।
रा॒ष्ट्रमे॒वेन्द्रि॑या॒व्य॑कः। वास॑सी नेष्टापो॒तृभ्या᳚म् । प॒वित्रे॑ ए॒वास्यै॒ते । स्थूरि॑
यवाचि॒तम॑च्छावा॒काय॑ । अ॒न्त॒त ए॒व वरु॑ण॒मव॑ यजते ।।6।।
180205
अ॒न॒ड्वाह॑म॒ग्नीधे᳚ । वह्नि॒र्वा अ॑न॒ड्वान् । वह्नि॑र॒ग्नीत् । वह्नि॑नै॒व वह्नि॑ य॒ज्ञस्याव॑रुन्धे
। इन्द्र॑स्य सुषु॒वा॒णस्य॑ त्रे॒धेन्द्रि॒यव्वी॒र्यँ᳚
परा॑ऽपतत् । भृगु॒स्तृती॑यमभवत् । श्रा॒य॒न्तीय॒न्तृती॑यम् । सर॑स्वती॒ तृती॑यम् । भा॒र्ग॒वो
होता॑ भवति । श्रा॒य॒न्तीयं॑ ब्रह्मसा॒मं भ॑वति ।
वा॒र॒व॒न्तीय॑मग्निष्टोमसा॒मम् । सा॒र॒स्व॒तीर॒पो गृ॑ह्णाति । इ॒न्द्रियस्य॑ वी॒र्य॑स्याव॑रुद्ध्यै
। श्रा॒य॒न्तीयं॑ ब्रह्मसा॒मं भ॑वति । इ॒न्द्रियमे॒वास्मि॒न्वी॒र्यं॑ श्रयति ।
वा॒र॒व॒न्तीय॑मग्निष्टोमसा॒मम् । इ॒न्द्रियमे॒वास्मि॒न्वी॒र्य॑व्वाँरयति ।।7।।
180200
वि॒राट्प्र॒जाप॑ति॒रश्वः॑ प्र॒जाप॑ते॒राप्त्यै॑ यजते ब्रह्मसा॒मं भ॑वति स॒प्त च॑ ।।2।।
180301
ई॒श्व॒रो वा ए॒ष दिशोऽनून्म॑दितोः । यन्दिशोऽनु॑ व्यास्था॒पय॑न्ति । दि॒शामवे᳚ष्टयो भवन्ति । दि॒ख्ष्वे॑व
प्रति॑ तिष्ठत्यनु॑न्मादाय ।
पञ्च॑ दे॒वता॑ यजति । पञ्च॒ दिशः॑ । दि॒ख्ष्वे॑व प्रति॑ तिष्ठति । ह॒विषो॑हविष इ॒ष्ट्वा बा॑र्ह॒स्प॒त्यम॒भिघा॑रयति
। य॒ज॒मा॒न॒दे॒व॒त्यो॑ वै बृह॒स्पतिः॑ । यज॑मानमे॒व
तेज॑सा॒ सम॑र्धयति ।।8।।
180302
आ॒दि॒त्यां म॒ल्॒हाङ्ग॒र्भिणी॒मा ल॑भते । मा॒रु॒तीं पृश्ञि॑ पष्ठौ॒हीम् । विश॑ञ्चैवास्मै॑
रा॒ष्ट्रञ्च॑ स॒मीची॑ दधाति । आ॒दि॒त्यया॒ पूर्व॑या॒
प्रच॑रति । मा॒रु॒त्योत्त॑रया । रा॒ष्ट्र ए॒व विश॒मनु॑बध्नाति । उ॒च्चैरा॑दि॒त्याया॒ आश्रा॑वयति
। उ॒पा॒ꣳशु मा॑रु॒त्यै । तस्मा᳚द्राष्ट्रँ᳚व्विश॒मति॑वदति ।
ग॒र्भिण्या॑दि॒त्या भ॑वति ।।9।।
180303
इ॒न्द्रि॒यँव्वै गर्भः॑ । रा॒ष्ट्रमे॒वेन्द्रि॑या॒व्य॑कः । अ॒ग॒र्भा मा॑रु॒ती । विड्वै म॒रुतः॑
। विश॑मे॒व निरि॑न्द्रियामकः । दे॒वा॒सु॒रास्सँय्य॑त्ता

आसन् । ते दे॒वा अ॒श्विनो॒॓ऽ पू॒षन्वा॒चस्स॒त्यꣳ सं॑नि॒धाय॑ । अनृ॑ते॒नासु॑रान॒भ्य॑भवन्
। ते॓ऽश्विभ्यां॓ पू॒ष्णे पु॑रो॒डाश॒न्द्वाद॑शकपाल॒न्निर॑वपन् । तत॒ो वै
ते वा॒चस्स॒त्यमवा॑रुन्धत ।।10।।
180304
यद॒श्विभ्यां॓ पू॒ष्णे पु॑रो॒डाश॒न्द्वाद॑शकपालन्नि॒र्वप॑ति । अनृ॑तेनै॒व भ्रातृ॑व्यानभि॒भूय॑
। वा॒चस्स॒त्यमव॑रुन्धे । सर॑स्वते सत्य॒वाचे॑
च॒रुम् । पूर्व॑मे॒वोदि॑तम् । उत्त॑रेणा॒भि गृ॑णाति । स॒वि॒त्रे स॒त्यप्र॑सवाय पु॒रो॒डाश॒न्द्वाद॑शकपाल॒ं
प्रसू॓त्यै । दू॒तान्प्रहि॑णोति । आ॒विद॑ ए॒ता भ॑वन्ति ।
आ॒विद॑मे॒वैन॑ङ्गमयन्ति । अथो॑ दू॒तेभ्य॑ ए॒व न छि॑द्यते । ति॒सृ॒ध॒न्वꣳ शु॑ष्कदृ॒तिर्द॑ख्षि॑णा॒ समृ॑द्ध्यै
।।11।।
180300
अ॒र्ध॒य॒ति॒ भ॒व॒त्य॒रु॒न्ध॒त॒ ग॒म॒य॒न्ति॒ द्वे च॑ ।।3।।
180401
आ॒ग्ने॒यम॒ष्टाक॑पाल॒न्निर्व॑पति । तस्मा॒च्छिशि॑रे कुरुपञ्चा॒लाꣳ प्राञ्चो॑ यान्ति । सौ॒म्यञ्च॒रुम्
। तस्मा॓द्वस॒न्तव्व्यँ॓व॒साया॑दयन्ति ।
सा॒वि॒त्रन्द्वाद॑शकपालम् । तस्मा॓त्पु॒रस्ता॒द्यवा॑नाꣳ सवि॒त्रा विरु॑न्धते । बा॒र्॒ह॒स्प॒त्यञ्च॒रुम्
। स॒वि॒त्रैव वि॒रुध्य॑ । ब्रह्म॑णा॒ यव॒ानाद॑धते । त्वा॒ष्ट्रम॒ष्टाक॑पालम् ।।12।।
180402
रू॒पाण्ये॒व तेन॑ कुर्वते । वै॒श्वा॒न॒रन्द्वाद॑शकपालम् । तस्मा॓ज्जघ॒न्ये॑ नैदा॒घे प्र॒त्यञ्चꣳ
कुरुपञ्चा॒ला या॓न्ति । सा॒र॒स्व॒तञ्च॒रुन्निर्व॑पति ।
तस्मा॓त्प्रा॒वृषि॒ सर्वा॒ वाचो॑ वदन्ति । पौ॒ष्णेन॒ व्यव॑स्यन्ति । मै॒त्रेण॑ कृषन्ते । वा॒रु॒णेन॒
विधृ॑ता आसते । ख्षै॒त्र॒प॒त्येन॑ पाचयन्ते । आ॒दि॒त्येनाद॑धते ।।13।।
180403
मा॒सिमा॓स्ये॒तानि॑ ह॒वीꣳषि॑ नि॒रुप्या॒णीत्या॑हुः । तेनै॒वर्तू॒न्प्रयु॑ङ्क्त इति॑ । अथो॒
खल्वा॑हुः । कस्स॑व्वँ॓थ्स॒रञ्जी॑विष्य॒तीति॑ । षडे॒व
पू॓र्वे॒द्युर्नि॒रुप्या॑णि । षडु॑त्त॒रे॒द्युः । तेनै॒वर्तू॒न्प्रयु॑ङ्क्ते । दख्षि॑णो रथवाहनवा॒हꣳ
पूर्वे॑षा॒न्दख्षि॑णा । उत्त॑र॒ उत्त॑रेषाम् । स॓व्व॒थ्स॒रस्यै॒वान्तौ॑ युनक्ति ।
सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै ।।14।।
180400
त्वा॒ष्ट्रम॒ष्टाक॑पालन्दधते युन॒क्त्येक॑ञ्च ।।4।।
180501
इन्द्र॑स्य सुषुवा॒णस्य॑ दश॒धेन्द्रि॒यँ॓व्वी॒र्यँ॑ परा॑ऽपतत् । स यत्प्र॑थ॒मन्नि॒रष्ठी॑वत्

। तत्क्लमभवत् । यद्वितीयम् । तद्बदरम् ।
यत्तृतीयम् । तत्कुर्कन्धु । यन्नस्तः । स सिंहः । यदख्योः ।।15।।
180502
स शार्दूलः । यत्कर्णयोः । स वृकः । य ऊर्ध्वः । स सोमः । याऽवाची । सा सुरा । त्रयास्सक्तवो भवन्ति ।
इन्द्रियस्यावरुद्ध्यै । त्रयाणि लोमानि ।।16।।
180503
त्विषिमेवावरुन्धे । त्रयो ग्रहाः । वीर्यमेवावरुन्धे । नाम्ना दशमी । नव वै पुरुषे प्राणाः ।
नाभिर्दशमी । प्राणा
इन्द्रियँव्वीर्यम् । प्राणानेवेन्द्रियव्वीर्यय्यँजमान आत्मन्धत्ते । सीसेन
क्लीबाच्छष्पाणि क्रीणाति । न वा एतदयो न हिरण्यम् ।।17।।
180504
यथ्सीसम् । न स्त्री न पुमान् । यत्क्लीबः । न सोमो न सुरा । यथ्सौत्रामणी समृद्ध्यै । स्वाद्वीन्त्वा स्वादुनेत्याह ।
सोममेवैनाङ्करोति । सोमोऽस्यश्विभ्याँ पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे
पच्यस्वेत्याह । एताभ्यो ह्येषा देवताभ्यः पच्यते । तिस्रस्संसृष्टा
वसति ।।18।।
180505
तिस्रो हि रात्रीः क्रीतस्सोमो वसति । पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै
। पवित्रेण पुनाति । पवित्रेण हि
सोमं पुनन्ति । वारेण शश्वता तनेत्याह । वारेण हि सोमं पुनन्ति । वायुः पूतः
पवित्रेणेति नैतया पुनीयात् । व्यृद्धा ह्येषा । अतिपवितस्यैतया
पुनीयात् । कुविदङ्गेत्यनिरुक्तया प्राजापत्यया गृह्णाति ।।19।।
180506
अनिरुक्तः प्रजापतिः । प्रजापतेराप्त्यै । एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यन्दधाति ।
आश्विनन्धूम्रमालभते ।
अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजङ्करोति । सारस्वतं मेषम् ।
वाग्वै सरस्वती । वाचैवैनं भिषज्यति । ऐन्द्रमृषभं सैन्द्रत्वाय ।।20।।
180500
अख्योर्लोमानि हिरण्यव्वँसति गृह्णाति भिषज्यत्येकञ्च ।।5।।
180601
यत्त्रिषु यूपेष्वालभेत । बहिर्धास्मादिन्द्रियँव्वीर्यन्दध्यात् । भ्रातृव्यमस्मै जनयेत् । एकयूप आलभते ।

ए॒क॒धैवास्मि॑न्निन्द्रि॒यव्वी॒र्यं॑न्दधाति । नास्मै॒ भ्रातृ॑व्यञ्जनयति । नैतेषां॑ पशू॒नां पु॑रो॒डाशा॑
भवन्ति । ग्रह॑पुरोडाशा॒ ह्ये॑ते । यु॒वꣳ सु॒राम॑मश्वि॒नेति॑
सर्वदेव॒त्ये॑ याज्यानुवा॒क्ये॑ भवतः । सर्वा॑ ए॒व दे॒वताः॑ प्रीणाति ।।21।।
180602
ब्रा॒ह्म॒णं परि॑क्रीणीयादु॒च्छेष॑णस्य पा॒तार॑म् । ब्रा॒ह्म॒णो ह्याहु॑त्या उ॒च्छेष॑णस्य पा॒ता । यदि॑ ब्रा॒ह्म॒णन्न
वि॒न्देत् ।
व॒ल्मी॒क॒व॒पाया॒मव॑नयेत् । सैव तत॒ः प्राय॑श्चित्तिः । यद्वै सौत्रा॑म॒ण्यै व्यृ॑द्धम् । तद॑स्यै॒
समृ॑द्धम् । ना॒ना॒दे॒व॒त्याः॑ प॒शव॑श्च पु॒रो॒डाशा॑श्च भवन्ति॒
समृ॑द्ध्यै । ऐ॒न्द्रः प॑शू॒नामु॒त्त॒मो भ॑वति । ऐ॒न्द्रः पु॑रो॒डाशा॑नां प्रथ॒मः ।।22।।
180603
इ॒न्द्रि॒ये ए॒वास्मै॑ स॒मीची॑ दधाति । पु॒रस्ता॑दनूया॒जानां॑ पु॒रो॒डाशै॒ः प्रच॑रति । प॒शवो॒
वै पु॑रो॒डाशाः॑ । प॒शूने॒वाव॑रुन्धे ।
ऐ॒न्द्रमेका॑दशकपाल॒न्निर्व॑पति । इ॒न्द्रि॒यमे॒वाव॑रुन्धे । सा॒वि॒त्रन्द्वाद॑शकपालं॒ प्रसू॑त्यै
। वा॒रु॒णन्दश॑कपालम् । अ॒न्त॒त ए॒व वरु॑ण॒मव॑यजते ।
वड॑बा॒ दक्षि॑णा ।।23।।
180604
उ॒त वा ए॒षाऽश्वꣳ॑ सू॒ते । उ॒ताश्व॑त॒रम् । उ॒त सोम॑ उ॒त सुरा॑ । यथ्सौत्रा॑म॒णी समृ॑द्ध्यै
। बा॒र्॒ह॒स्प॒त्यं प॒शुञ्च॑तु॒र्थम॑ति
पवि॒तस्याल॑भते । ब्रह्म॒ वै दे॒वानां॒ बृह॒स्पतिः॑ । ब्रह्म॑णै॒व य॒ज्ञस्य॒ व्यृ॑द्धमपि॑
वपति । पु॒रो॒डाश॑वाने॒ष प॒शुर्भ॑वति । न ह्ये॑तस्य॒ ग्रह॑ङ्गृ॒ह्णन्ति॑ ।
सोम॑प्रतीकाः पितरस्तृण्णु॒तेति॑ शतातृ॒ण्णायाꣳ॑ स॒मव॑नयति ।।24।।
180605
श॒ताय॒ुः पुरु॑षश्श॒तेन्द्रि॑यः । आयु॑ष्ये॒वेन्द्रि॒ये प्रति॑तिष्ठति । दक्षि॑णेऽग्नौ जु॑होति । पा॒प॒व॒स्य॒सस्य॒
व्यावृ॑त्त्यै ।
हिर॑ण्यमन्त॒रा धा॑रयति । पूता॒मे॒वैनां॑ञ्जुहोति । श॒तमा॑नं भवति । श॒ताय॒ुः पुरु॑षश्श॒तेन्द्रि॑यः
। आयु॑ष्ये॒वेन्द्रि॒ये प्रति॑तिष्ठति । यत्रै॒व
श॑तातृण्णान्धा॒रय॑ति ।। 25।।
180606
तन्निद॑धाति॒ प्रति॑ष्ठित्यै । पि॒तॄन् वा ए॒तस्यै॑न्द्रि॒यँव्वी॒र्यं॑ङ्गच्छति । यꣳ सोमो॑ऽति॒
पव॑ते । पि॒तृ॒णाय्याँ॑ज्यानुवा॒क्या॑भि॒रुप॑ तिष्ठते ।
यदे॒वास्य॑ पि॒तॄनि॑न्द्रि॒यँव्वी॒र्यं॑ङ्गच्छ॑ति । तदे॒वाव॑रुन्धे । ति॒सृभि॒रुप॑ तिष्ठते

। तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । अथो त्रीणि वै
यज्ञस्यैन्द्रियाणि । अध्वर्युर् होता ब्रह्मा । त उपतिष्ठन्ते । यान्येव यज्ञस्यैन्द्रियाणि
। तैरेवास्मै भेषजङ्करोति ।।26।।
180600
प्रीणाति प्रथमो दक्षिणा समवनयति धारयतीन्द्रियाणि चत्वारि च ।।6।।
180701
अग्निष्टोममग्र आहरति । यज्ञमुखव्वाँ अग्निष्टोमः । यज्ञमुखमेवारभ्य सवमाक्रमते
। अथैषोऽभिषेचनीयश्चतुस्त्रिꣳशपवमानो
भवति । त्रयस्तिꣳशद्वै देवताः । ता एवाप्नोति । प्रजापतिश्चतुस्त्रिꣳशः । तमेवाप्नोति
। सꣳशर एष स्तोमानामयथापूर्वम् । यद्विषमास्स्तेमाः ।।27।।
180702
एतावान् वै यज्ञः । यावान्पवमानाः । अन्तश्श्लेषणन्त्वा अन्यत् । यथ्समाः पवमानाः ।
तेनासꣳशरः । तेन यथापूर्वम् ।
आत्मनैवाग्निष्टोमेनर्ध्नोति । आत्मना पुण्यो भवति । प्रजा वा उक्थानि । पशव
उक्थानि । यदुक्थ्यो भवत्यनुसन्तत्यै ।।28।।
180700
स्तोमाः पशव उक्थान्येकञ्च ।।7।।
180801
उप त्वा जामयो गिर इति प्रतिपद्भवति । वाग्वै वायुः । वाच एवैषोऽभिषेकः । सर्वासामेव
प्रजानाꣳ सूयते । सर्वा एनं प्रजा
राजेति वदन्ति । एतमु त्यन्दशक्षिप इत्याह । आदित्या वै प्रजाः । प्रजानामेवैतेन
सूयते । यन्ति वा एते यज्ञमुखात् । ये सम्भार्या अक्रन्न् ।।29।।
180802
यदाह पवस्व वाचो अग्रिय इति । तेनैव यज्ञमुखान्नयन्ति । अनुष्टुक्प्रथमा भवति
। अनुष्टुगुत्तमा । वाग्वा अनुष्टुक् । वाचैव
प्रयन्ति । वाचोद्यन्ति । उद्वतीर्भवन्ति । उद्वद्वा अनुष्टुभो रूपम् । आनुष्टुभो राजन्यः ।।30।।
180803
तस्मादुद्वतीर्भवन्ति । सौर्यनुष्टुगुत्तमा भवति । सुवर्गस्य लोकस्य सन्तत्यै । यो वै सवादेति । नैनꣳ
सव उपनमति ।
यस्सामभ्य एति । पापीयान्थ्सुषुवाणो भवति । एतानि खलु वै सामानि । यत्पृष्ठानि । यत्पृष्ठानि
भवन्ति ।।31।।
180804

तैरे॒व स॒वान्नैति॑ । यानि॑ देवरा॒जाना॒ꣳ सामा॑नि । तैर॒मुष्मि॑ल्लो॒ँक ऋ॑ध्नोति । यानि॑
मनुष्यरा॒जाना॒ꣳ सामा॑नि । तैर॒स्मिल्लो॒ँक
ऋ॑ध्नोति । उ॒भयो॑रे॒व लो॒कयोर्॑ ऋध्नोति । दे॒व॒लो॒के च॑ मनुष्यलो॒के च॑ ।
ए॒क॒वि॒ꣳशो॑ऽभिषेच॒नीय॑स्योत्त॒मो
भ॑वति । ए॒क॒वि॒ꣳश꠳ के॑शवप॒नीय॑स्य
प्रथ॒मः । स॒प्त॒द॒शो द॑श॒पेय॑ः ।।32।।
180805
विड्वा ए॑कवि॒ꣳशः । रा॒ष्ट्रꣳ स॑प्तद॒शः । विश॑ ए॒वैतन्म॑ध्य॒तो॑ऽभिषि॑च्यते । तस्मा॒द्वा
ए॒ष वि॒शां प्रि॒यः । वि॒शो हि म॑ध्य॒तो॑
ऽभिषि॒च्यते॓ । यद्वा ए॑नम॒दो दिशो॒ऽनु॑ व्यास्था॒पय॑न्ति । तथ्सु॑व॒र्गल्लो॒कम॒भ्यारो॑हति
। यदि॒मल्लो॒ँकन्न प्र॑त्यव॒रोहे॓त् । अ॒ति॒ज॒नँव्वे॑यात् । उद्वा॑ माद्येत् ।
यदे॒ष प्र॑ती॒चीन॑स्स्तोमो॒ भव॑ति । इ॒ममे॒व तेन॑ लो॒कं प्र॒त्यव॑रोहति । अथो॑ अ॒स्मिन्ने॒व लो॒के प्रति॑
तिष्ठत्यनु॑न्मादाय ।।33।।
180800
अक्र॑न्राज॒न्यो॑ भव॑न्ति दश॒पेयो॑ माद्येत्त्रीणि॑ च।।8।।
180901
इ॒यव्वैँ॒ र॑ज॒ता । अ॒सौ हरि॑णी । यद्रु॒क्मौ भव॑तः । आ॒भ्यामे॒वैन॑मुभ॒यत॒꠳ परि॑ गृह्णाति । वरु॑णस्य॒ वा
अ॑भिषि॒च्यमा॑न॒स्याप॑ः ।
इ॒न्द्रि॒यँव्वी॒र्यं॑न्निर॑घ्नन् । तथ्सु॒वर्ण॒ꣳ हिर॑ण्यमभवत् । यद्रु॒क्मम॑न्त॒र्दधा॑ति
। इ॒न्द्रि॒यस्य॑ वी॒र्य॑स्यानि॑र्घाताय । श॒तमा॑नो भवति श॒तख्ख॑रः । श॒ताय॒꠳
पुरु॑षश्श॒तेन्द्रि॑यः । आयु॑ष्ये॒वेन्द्रि॒ये प्रति॑तिष्ठति । आयु॒र्वै हिर॑ण्यम् । आ॒यु॒ष्या॑
ए॒वैन॑म॒भ्यति॑ ख्खरन्ति । तेजो॒ वै हिर॑ण्यम् । ते॒ज॒स्या॑ ए॒वैन॑म॒भ्यति॑
ख्खरन्ति । वर्चो॒ वै हिर॑ण्यम् । व॒र्च॒स्या॑ ए॒वैन॑म॒भ्यति॑ ख्खरन्ति ।।34।।
180900
श॒तख्ख॑रो॒ऽष्टौ च॑ ।।9।।
181001
अप्र॑तिष्ठितो॒ वा ए॒ष इत्या॑हुः । यो रा॑ज॒सूये॑न॒ यज॑त॒ इति॑ । य॒दा वा ए॒ष ए॒तेन॑ द्विरा॒त्रेण॒ यज॑ते । अथ॑
प्रति॒ष्ठा । अथ॑
सव्वँथ्स॒रमा॑प्नोति । याव॑न्ति सव्वँथ्स॒रस्या॑होरा॒त्राणि॑ । ताव॑तीरे॒तस्य॑ स्तो॒त्रीया॑ः
। अ॒हो॒रा॒त्रेष्वे॒व प्रति॑ तिष्ठति । अ॒ग्नि॒ष्टो॒म꠳ पूर्व॒मह॑र्भवति ।
अ॒ति॒रा॒त्र उत्त॑रम् ।।35।।

181002
नाने॒वाहो॑रा॒त्रयो॓ प्रति॑ तिष्ठति । पौ॒र्ण॒मा॒स्यां पूर्व॒मह॑र्भवति । व्य॑ष्टकाया॒मुत्त॑रम्
। नाने॒वार्ध॑मा॒सयो॓ प्रति॑तिष्ठति ।
अ॒मा॒वा॒स्या॑यां पूर्व॒मह॑र्भवति । उद्दृ॒ष्ट उत्त॑रम् । नाने॒व मास॑यो॓ प्रति॑तिष्ठति
। अथो॒ खलु॑ । ये ए॒व स॑मानप॒ख्से पु॑ण्या॒हे स्याता॑म् । तयो॑
का॒र्य॑ प्रति॑ष्ठित्यै ।।36।।
181003 अ॒प॒श॒व्यो द्वि॑रा॒त्र इत्या॑हुः । द्वे ह्ये॑ते छन्द॑सी । गा॒य॒त्रञ्च॒ त्रैष्टु॑भञ्च
। जग॑तीम॒न्तर्य॑न्ति । न तेन॒ जग॑ती कृ॒तेत्या॑हुः ।
यदे॑नान्तृतीयसव॒ने कु॒र्वन्तीति॑ । य॒दा वा ए॒षाऽहीन॒स्याह॒र्भज॑ते । सा॒ह्नस्य॑ व॒ा सव॑नम्
। अथै॒व जग॑ती कृ॒ता । अथ॑ पश॒व्य॑ः । व्यु॑ष्टि॒र्वा ए॒ष द्वि॑रा॒त्रः ।
य ए॒वँव्वि॒द्वान्द्वि॑रा॒त्रेण॒ यज॑ते । व्ये॑वास्मा॑ उच्छति । अथो॒ तम॑ ए॒वाप॑हते । अ॒ग्नि॒ष्टो॒मम॑न्त॒त
आह॑रति । अ॒ग्निस्सर्वा॑ दे॒वता॑ः । दे॒वता॑स्वे॒व प्रति॑तिष्ठति ।।37।।
181000
उत्त॑रं॒ प्रति॑ष्ठित्यै पश॒व्य॑स्स॒प्त च॑ ।।10।।
180000
वरु॑णस्य जा॒मि वा ई॑श्व॒र आ॑ग्ने॒यमिन्द्र॑स्य॒ यत्त्रि॒ष्व॑ग्निष्टो॒मम॒प॑ त्वे॒यँव्वै र॑ज॒ताऽप्र॑तिष्ठि॒तो दर्श॑ ।।10।।
वरु॑णस्य॒ यद॒श्विभ्या॒ँय्यत्त्रि॒षु तस्मा॒दुद्व॑तीस्स॒प्तत्रि॑ꣳशत् ।।37।।
वरु॑णस्य॒ प्रति॑तिष्ठति।।
हरि॑ः ओम्।।श्रीकृष्णार्पणमस्तु।।
प्रथमाष्टके अष्टमप्रपाठकः
प्रथमाष्टकं च समाप्तम्

210000
कृष्ण यजुर्ब्राह्मणे द्वितीयाष्टके प्रथमप्रपाठकप्रारम्भः हरिः ओम्।।
210101
अङ्गिरसो वै सत्रमासत । तेषां पृश्निर्घर्मधुगासीत् ।
सर्जीषेणाजीवत् । तेऽब्रुवन् । कस्मै नु सत्रमास्महे । येऽस्या
ओषधीर्न जनयाम इति । ते दिवो वृष्टिमसृजन्त । यावन्तस्स्तोका
अवापद्यन्त । तावतीरोषधयोऽजायन्त । ता जाताः पितरो
विषेणालिम्पन् ।।1।।
210102
तासाञ्जग्ध्वा रुप्यन्त्यैत् । तेऽब्रुवन् ।
क इदमित्थमकरिति । वयं भागधेयमिच्छमाना इति
पितरोऽब्रुवन् । किँव्वो भागधेयमिति । अग्निहोत्र एव
नोऽप्यस्त्वित्यब्रुवन् । तेभ्य एतद्भागधेयं प्रायच्छन् ।
यद्धुत्वा निमार्ष्टि । ततो वै त ओषधीरस्वदयन् । य एवँव्वेद ।।2।।
210103
स्वदन्तेऽस्मा ओषधयः । ते वथ्समुपावासृजन् । इदन्नो हव्यं
प्रदापयेति । सोऽब्रवीद्वरं वृणै । दश मा रात्रीर्जातन्न
दोहन् । आसङ्गवं मात्रा सह चराणीति । तस्माद्वथ्स
ञ्जातन्दश रात्री र्न दुहन्ति । असङ्गवं मात्रा सह चरति।
वारेवृत ह्यस्य । तस्माद्वथ्सं सꣳसृष्टधयꣳ रुद्रो
घातुकः । अति हि सन्धान्धयति ।।3।।
210100
अलिम्पन्वेद घातुक एकञ्च ।।1।।
210201
प्रजापतिरग्निमसृजत । तं प्रजा अन्वसृज्यन्त । तमभाग उपास्त ।
सोऽस्य प्रजाभिरपाक्रामत् । तमवरुरुथ्समानोऽन्वैत् ।
तमवरुधन्नाशक्नोत् । स तपोतप्यत । सोऽग्निरुपारमतातापि वै
स्य प्रजापतिरिति । स रराटादुदमृष्ट ।।4।।
210202
तद्धृतमभवत् । तस्माद्यस्य दखिणतः केशा उन्मृष्टाः । ताञ्ज्येष्ठलख्मी
प्राजापत्येत्याहुः । यद्रराटादुदमृष्ट । तस्माद्रराटे
केशा न सन्ति । तदग्नौ प्रागृह्णात् । तद्व्यचिकिथ्सत् ।

जुहवानी 3 मा हौषा 3 मिति । तद्विचिकित्थ्सायै जन्म । य एवँ
व्विद्वान् विचिकित्थ्सति ।।5।।
210203
वसीय एव चेतयते । तव्वाँगभ्यवद
ज्जुहुधीति । सोऽब्रवीत् । कस्त्वमसीति । स्वैव ते वागित्य
ब्रवीत् । सोऽजुहोथ्स्वाहेति । तथ्स्वाहाकारस्य जन्म । य एव
स्वाहाकारस्य जन्म वेद । करोति स्वाहाकारेण वीर्यम् ।
यस्यैवँव्विदुषस्स्वाहाकारेण जुह्वति ।।6।।
210204
भोगायैवास्य हुतं भवति । तस्या आहुत्यै पुरुषमसृजत । द्वितीयमजुहोत् ।
सोऽश्वमसृजत । तृतीयमजुहोत् । स गामसृजत । चतुर्थमजुहोत् ।
सोऽविमसृजत । पञ्चममजुहोत् । सोऽजामसृजत ।।7।।
210205
सोऽग्नि रबिभेत् । आहुतीभिर्वै माऽऽप्नोतीति । स प्रजापतिं पुनः
प्राविशत् । तं प्रजापतिरब्रवीत् । जायस्वेति । सोऽब्रवीत् । किं
भागधेयमभि जनिष्य इति । तुभ्यमेवेदꣳ हूयाता इत्य
ब्रवीत् । स एतद्भागधेयमभ्यजायत । यदग्निहोत्रम् ।।8।।
210206
तस्मादग्निहोत्रमुच्यते । तद्धूयमानमादित्योऽब्रवीत् । मा
हौषीः । उभयोर्वैनावेतदिति । सोऽग्निरब्रवीत् । कथन्नौ
होष्यन्तीति । सायमेव तुभ्यञ्जुहुवन्न् । प्रातर्मह्य
मित्यब्रवीत् । तस्मादग्नये सायꣳ हूयते । सूर्याय प्रातः ।।9।।
210207
आग्नेयी वै रात्रिः । ऐन्द्रमहः । यदनुदिते सूर्ये
प्रातर्जुहुयात् । उभयमेवाग्नेय स्यात् । उदिते सूर्ये
प्रातर्जुहोति । तथाग्नये सायꣳ हूयते । सूर्याय प्रातः ।
रात्रिव्वाँ अनु प्रजाः प्र जायन्ते । अह्ना प्रति तिष्ठन्ति ।
यथ्सायञ्जुहोति ।।10।।
210208
प्रैव तेन जायते । उदिते सूर्ये प्रात
र्जुहोति । प्रत्येव तेन तिष्ठति । प्रजापतिरकामयत प्र

जा॑य॒येति॑ । स ए॒तद॑ग्निहो॒त्रं मि॑थु॒नम॑पश्यत् । तदुदि॑ते॒

सूर्ये॑ऽजुहोत् । यजु॑षा॒ऽन्यत् । तू॒ष्णीम॒न्यत् । तत॒ो वै स

प्राजा॑यत । यस्यै॒वँव्वि॒दुष॒ उदि॑ते॒ सूर्ये᳚ऽग्निहो॒त्रञ्जुह्व॑ति ।।11।।
210209
प्रैव जा॑यते । अथ॒ो यथ॒ा दिवा᳚ प्रजा॒नन्नेति॑ । ता॒दृगे॒व

तत् । अथ॒ो खल्वा॑हुः । यस्य॒ वै द्वौ पुण्यौ॑ गृ॒हे वस॑तः । यस्तयो॑

र॒न्यः रा॒धय॑त्य॒न्यन्न । उ॒भौ वाव स तावृ॑च्छतीति॑ । अ॒ग्नि

व्वाँवादि॒त्यस्सा॒यं प्रवि॑शति । तस्मा॑द॒ग्निर्दू॒रान्नक्त॑न्ददृशे ।

उ॒भे हि तेज॑सी सं॒ पद्ये॑ते ।।12।।
210210
उ॒द्यन्त॒व्वाँवादि॒त्यम॒ग्नि

रनु॑स॒मारो॑हति । तस्मा᳚द्धू॒म ए॒वाग्नेर्दिवा॑ ददृशे । यद॒ग्नये॑

सा॒यञ्जु॑हु॒यात् । आ सूर्या॑य वृश्च्येत । यथ्सूर्या॑य प्रा॒त

र्जु॑हु॒यात् । आऽग्नये॑ वृश्च्येत । दे॒वता᳚भ्यस्स॒मद॑न्दध्यात् ।

अ॒ग्निर्ज्योति॒र्ज्योति॒स्सूर्य॒स्स्वाहेत्ये॒व सा॒यः हो॑त॒व्य᳚म् ।

सूर्य॒ो ज्योति॒र्ज्योति॑र॒ग्निस्स्वाहेति॑ प्रा॒तः । तथ॒ोभाभ्याः॑

सा॒यः हू॑यते ।।13।।
210211
उ॒भाभ्यां᳚ प्रा॒तः । न दे॒वता॑भ्यस्स॒मद॑न्दधाति ।

अ॒ग्निर्ज्योति॒रित्या॑ह । अ॒ग्निर्वै रे॑त॒ोधाः । प्र॒जा ज्योति॒

रित्या॑ह । प्र॒जा ए॒वास्मै॒ प्र ज॑नयति । सूर्य॒ो ज्योति॒रित्या॑ह ।

प्र॒जास्वे॒व प्रजा॑तासु॒ रेतो॑ दधाति । ज्योति॑र॒ग्निस्स्वाहेत्या॑ह ।

प्र॒जा ए॒व प्रजा॑ता अ॒स्यां प्रति॑ष्ठापयति ।।14।।
210212
तू॒ष्णीमुत्त॑र॒ा माहु॑तिञ्जुहोति । मि॒थु॒न॒त्वाय॒ प्रजा᳚त्यै । यदुदि॑ते॒ सूर्ये᳚

प्रा॒तर्जु॑हु॒यात् । यथाऽति॑थये॒ प्रद्रु॑ताय शू॒न्याया॑वस॒थाया॑

हा॒र्यः॑ हर॑न्ति । ता॒दृगे॒व तत् । क्वा॒ह तत॒स्तद्भव॒तीत्या॑हुः ।

यथ्स न वेद॑ । यस्मै॒ तद्धर॒न्तीति॑ । तस्मा॒द्यदौ॒षसञ्जु॒होति॑ ।

तदे॒व संप्र॒ति । अथ॒ो यथ॒ा प्रार्थ॑मौष॒सं परि॒वेवे᳚ष्टि ।

ता॒दृगे॒व तत् ।।15।।
210200

अ॒मृष्ट वि॒चि॒कि॒त्सि॑ति जु॒ह्व॑त्य॒जाम॑सृजताग्नि॒हो॒त्रꣳ
सूर्या॑य प्रा॒तर्जु॒होति॒ जुह्व॑ति सं॒पद्य॑ते हूयते स्थापयति
संप्र॒ति द्वे च॑ ।।2।।
210301
रु॒द्रो वा ए॒षः । यद॒ग्निः । पत्नी॑ स्था॒ली । यन्मध्ये॒ऽग्नेर॑धि॒
श्रये॑त् । रु॒द्राय॒ पत्नी॒मपि॑ दध्यात् । प्र॒मायु॑का स्यात् ।
उदी॒चोऽङ्गा॑रान्नि॒रूह्याधि॑ श्रयति । पत्नि॑यै गोपी॒थाय॑ ।
व्य॑न्तान्करोति । तथा॒ पत्न्यप्र॑मायुका भवति ।।16।।
210302
घ॒र्मो वा ए॒षो ऽशा॑न्तः । अह॑रह॒र् प्र वृ॑ज्यते । यद॑ग्नि॒हो॒त्रम् । प्रति॑षिञ्चेत्
प॒शुका॑मस्य । शा॒न्तमि॑व॒ हि प॑श॒व्य॑म् । न प्रति॑षिञ्चेद्
ब्रह्मवर्च॒सका॑मस्य । समि॑द्धमिव॒ हि ब्र॑ह्मवर्च॒सम् । अथो॒
खलु॑ । प्र॒ति॒षिच्य॑मे॒व । यत्प्र॑तिषि॒ञ्चति॑ ।।17।।
210303
तत् प॑श॒व्य॑म् । यज्जु॒होति॑ । तद्ब्र॑ह्मवर्च॒सि । उ॒भय॑मे॒वाकः॑ ।
प्रच्यु॑त॒व्वाँ एतद॒स्माल्लो॒कात् । अग॑तन्देवल॒ोकम् । यच्छृ॒तꣳ
ह॒विरन॑भिघारितम् । अ॒भि द्यो॑तयति । अ॒भ्येवैन॑द्धारयति । अथो॑
देव॒त्रैवैन॑द्गमयति ।।18।।
210304
पर्य॑ग्नि करोति । रख्ष॑सा॒मप॑हत्यै ।
त्रिर् पर्य॑ग्नि करोति । त्र्या॑वृ॒द्धि य॒ज्ञः । अथो॑ मेध्य॒त्वाय॑ ।
यत्प्रा॒चीन॑मु॒द्वासये॑त् । यज॑मानꣳ शु॒चाऽर्प॑येत् । यद्द॑ख्षि॒णा ।
पि॒तृ॒दे॒व॒त्य॑ स्यात् । यत्प्र॒त्यक् ।।19।।
210305
पत्नी॑ꣳ शु॒चा ऽर्प॑येत् । उ॒दी॒चीन॒मुद्वा॑सयति । ए॒षा वै दे॑वमनु॒ष्याणा॑ꣳ
शा॒न्ता दिक् । तामे॒वैन॒दनू॒द्वा॑सयति॒ शान्त्यै॑ । वर्त्म॑ करोति ।
य॒ज्ञस्य॒ सन्त॑त्यै । निष्ट॑पति । उपै॒व तथ्स्तृ॑णाति । च॒तुरुन्न॑यति ।
चतु॑ष्पादर् प॒शवः॑ ।।20।।
210306
प॒शून॒ेवाव॑रुन्धे । सर्वा॒न्पूर्णा
नु॒न्न॑यति। सर्वे॒ हि पुण्या॑ रा॒द्धाः । अ॒नूच॒ उन्न॑यति । प्र॒जाया॑

अनूचीनत्वाय । अनूच्येवास्य प्रजाऽर्धुका भवति ।
संमृशति व्यावृत्त्यै । नाहोष्यन्नुप सादयेत् । यदहोष्यन्नुप
सादयेत् । यथाऽन्यस्मा उपनिधाय ।।21।।
210307
अन्यस्मै प्रयच्छति ।
तादृगेव तत् । आऽस्मै वृश्च्येत । यदेव गार्हपत्येऽधि श्रयति ।
तेन गार्हपत्यं प्रीणाति । अग्निर्बिभेत् । आहुतयो
माऽत्येष्यन्तीति । स एताꣳ समिधमपश्यत्। तामाऽधत्त। ततो वा
अग्नावाहुतयोऽध्रियन्त।।22।।
210308
यदेनꣳ समयच्छत्। तथ्समिधः स्समित्त्वम्। समिधमा दधाति। समेवैनय्यँच्छति।
आहुतीनान्धृत्यै। अथो अग्निहोत्रमेवेध्मवत्करोति।
आहुतीनां प्रतिष्ठित्यै। ब्रह्मवादिनो वदन्ति। यदेकाꣳ
समिधमाधाय द्वे आहुती जुहोति। अथ कस्याꣳ समिधि
द्वितीयामाहुतिञ्जुहोतीति।।23।।
210309
यद्वे समिधावादध्यात्। भ्रातृव्यमस्मै जनयेत्। एकाꣳ
समिधमाधाय। यजुषाऽन्यामाहुतिञ्जुहोति। उभे एव समिद्वती
आहुती जुहोति। नास्मै भ्रातृव्यञ्जनयति। आदीप्तायाञ्जुहोति। समिद्धमिव हि
ब्रह्मवर्चसम्। अथो यथाऽतिथिञ्ज्योतिष्कृत्वा परि वेवेष्टि।
तादृगेव तत्। चतुरुन्नयति। द्विर्जुहोति। तस्माद्द्विपाच्चतुष्पादमत्ति। अथो
द्विपद्येव चतुष्पदꣳ प्रतिष्ठापयति।।24।।
210300
भवति प्रतिषिञ्चति गमयति प्रत्यक्पशव
उपनिधायाध्रियन्तेति तच्चत्वारि च।।3।।
210401
उत्तरावतीव्वै देवा आहुतिमजुहवुः।
अवाचीमसुराः। ततो देवा अभवन्। पराऽसुराः। यङ्कामयेत वसीयान्थ्स्यादिति।
कनीयस्तस्य पूर्वꣳ हुत्वा। उत्तरं भूयो जुहुयात्। एषा वा
उत्तरावत्याहुतिः। तान्देवा अजुहवुः। ततस्तेऽभवन्।।25।।
210402

यस्यैवञ्जुह्वति। भवत्येव। यङ्कामयेत पापीयान्थ्स्यादिति। भूयस्तस्य

पूर्वꣳ हुत्वा। उत्तरङ्कनीयो जुहुयात्। एषा वा अवाच्याहुतिः।

तामसुरा अजुहवुः। ततस्ते पराऽभवन्। यस्यैवञ्जुह्वति। परैव भवति।।26।।

210403

हुत्वोप सादयत्यजामित्वाय। अथो व्यावृत्त्यै। गार्हपत्यं प्रतीक्षते।

अननुध्यायिनमेवैनङ्करोति। अग्निहोत्रस्य वै स्थाणुरस्ति। तय्यँ ऋच्छेत्।

यज्ञस्थाणुमृच्छेत्। एष वा अग्निहोत्रस्य स्थाणुः। यत्पूर्वाऽऽहुतिः।

ताय्यँदुत्तरयाऽभिजुहुयात्।।27।।

210404

यज्ञस्थाणुमृच्छेत्।

अतिहाय पूर्वामाहुतिञ्जुहोति। यज्ञस्थाणुमेव परि वृणक्ति।

अथो भ्रातृव्यमेवाप्त्वाऽति क्रामति। अवाचीनꣳ सायमुप

मार्ष्टि। रेत एव तद्दधाति। ऊर्ध्वं प्रातः। प्र जनयत्येव तत्।

ब्रह्मवादिनो वदन्ति। चतुरुन्नयति।।28।।

210405

द्विर्जुहोति। अथ क्व द्वे आहुती भवत इति। अग्नौ

वैश्वानर इति ब्रूयात्। एष वा अग्निर्वैश्वानरः।

यद्ब्राह्मणः। हुत्वा द्विः प्राश्नाति। अग्नावेव वैश्वानरे द्वे आहुती

जुहोति। द्विर्जुहोति। द्विर्निमार्ष्टि। द्विः प्राश्नाति।।29।।

210406

षट्थ्संपद्यन्ते। षड्वा ऋतवः। ऋतूनेव प्रीणाति। ब्रह्मवादिनो वदन्ति।

किन्देवत्यमग्निहोत्रमिति। वैश्वदेवमिति ब्रूयात्। यद्यजुषा जुहोति।

तदैन्द्राग्नम्। यत्तूष्णीम्। तत्प्रजापत्यम्।।30।।

210407

यन्निमार्ष्टि। तदोषधीनाम्। यद्द्वितीयम्।

तत्पितृणाम्। यत्प्राश्नाति। तद्गर्भाणाम्।

तस्माद्गर्भा अनश्नन्तो वर्धन्ते।

यदाचामति। तन्मनुष्याणाम्।

उदङ्पर्यावृत्याचामति।।31।।

210408

आत्मनोगोपीथाय। निर्णेनेक्ति शुद्ध्यै। निष्टपति

स्वगाकृत्यै। उद्दिशति। सप्तर्षीनेव
प्रीणाति। दक्षिणा पर्यावर्तते। स्वमेव वीर्यमनु
पर्यावर्तते। तस्माद्दक्षिणोऽर्धं आत्मनो वीर्यावत्तरः। अथो
आदित्यस्यैवावृतमनु पर्यावर्तते। हुत्वोप समिन्धे।।32।।
210409
ब्रह्मवर्चसस्य समिद्ध्यै। न बर्हिरनु प्र हरेत्।
असंस्थितो वा एष यज्ञः। यदग्निहोत्रम्। यदनु प्र
हरेत्। यज्ञँव्विच्छिन्द्यात्। तस्मान्नानु
प्रहृत्यम्। यज्ञस्य सन्तत्यै। अपो
नि नयति। अवभृथस्यैव रूपमकः।।33।।
210400
अभवन्भवति जुहुयान्नयति मार्ष्टि द्विः
प्राश्नाति प्राजापत्यमाचामतीन्धेऽकः।।4।।
210501
ब्रह्मवादिनो वदन्ति। अग्निहोत्रप्रायणा यज्ञाः।
किंप्रायणमग्निहोत्रमिति। वत्सो वा अग्निहोत्रस्य प्रायणम्।
अग्निहोत्रय्यँज्ञानाम्। तस्य पृथिवी सदः।
अन्तरिक्षमाग्नीद्ध्रम्। द्यौर्हविर्धानम्। दिव्या आपः
प्रोक्षणयः। ओषधयो बर्हिः ।।34।।
210502
वनस्पतय इध्मः। दिशः परिधयः। आदित्यो यूपः।
यजमानः पशुः। समुद्रोऽवभृथः। सव्वँथ्सरस्स्वगाकारः।
तस्मादाहिताग्नेस्सर्वमेव बर्हिष्यन्दत्तं भवति।
यथ्सायञ्जुहोति। रात्रिमेव तेन दक्षिण्याङ्कुरुते। यत्प्रातः।।35।।
210503
अहरेव तेन दक्षिण्यङ्कुरुते। यत्ततो
ददाति। सा दक्षिणा। यावन्तो वै देवा अहुतमादन्न्। ते
पराऽभवन्न्। त एतदग्निहोत्रꣳ सर्वस्यैव समवदायाजुहवुः।
तस्मादाहुः। अग्निहोत्रँव्वै देवा गृहाणान्निष्कृतिमपश्यन्निति।
यथ्सायञ्जुहोति। रात्रिया एव तद्धुताद्याय ।।36।।
210504

यजमानस्यापराभावाय। यत्प्रातः।
अर्द्ध एव तद्धुताद्याय। यजमानस्यापराभावाय।
यत्ततोऽश्ञाति। हुतमेव तत्। द्वयोः पयसा जुहुयात्पशुकामस्य। एतद्वा
अग्निहोत्रं मिथुनम्। य एवँव्वेद। प्र प्रजया पशुभिर्मिथुनैर्जायते।।37।।
210505
इमामेव पूर्वया दुहे। अमूमुत्तरया। अधिश्रित्योत्तरमा
नयति। योनावेव तद्रेतस्सिञ्चति प्रजनने। आज्येन
जुहुयात्तेजस्कामस्य। तेजो वा आज्यम्। तेजस्व्येव
भवति। पयसा पशुकामस्य। एतद्वै पशुनाः रूपम्। रूपेणैवास्मै
पशूनवरुन्धे ।।38।।
210506
पशुमानेव भवति। दध्नेन्द्रियकामस्य। इन्द्रियँव्वै दधि। इन्द्रियाव्येव भवति।
यवाग्वा ग्रामकामस्यौषधा वै मनुष्याः। भागधेयेनैवास्मै
सजातानव रुन्धे। ग्राम्येव भवति। अयज्ञो वा एषः। योऽसामा ।।39।।
210507
चतुरुन्नयति। चतुरख्खरः रथन्तरम्। रथन्तरस्यैष वर्णः। उपरीव हरति।
अन्तरिख्खव्वाँमदेव्यम्। वामदेव्यस्यैष वर्णः। द्विर्जुहोति। द्व्यख्खरं
बृहत्। बृहत एष वर्णः। अग्निहोत्रमेव तथ्सामन्वत्करोति ।।40।।
210508
यो वा अग्निहोत्रस्योपसदो वेद। उपैनमुपसदो नमन्ति। विन्दत
उपसत्तारम्। उन्नीयोप सादयति। पृथिवीमेव प्रीणाति। होष्यन्नुप
सादयति। अन्तरिख्खमेव प्रीणाति। हुत्वोप सादयति।
दिवमेव प्रीणाति। एता वा अग्निहोत्रस्योपसदः ।।41।।
210509
य एवँव्वेद। उपैनमुपसदो नमन्ति।
विन्दत उपसत्तारम्। यो वा अग्नि होत्रस्याश्रावितं
प्रत्याश्रावितः होतारं ब्रह्माणव्वँषट्कारँव्वेद। तस्य त्वेव
हुतम्। प्राणो वा अग्नि होत्रस्याश्रावितम्। अपानः प्रत्याश्रावितम्। मनो
होता। चख्खुर्ब्रह्मा। निमेषो वषट्कारः।।42।।
210510
य एवँ व्वेद। तस्य त्वेव हुतम्।

सा॒य॒य्याँ॑वा॑नश्च॒ वै दे॒वाᳶ प्रा॑त॒र्या॑वा॑णश्चाग्नि

हो॒त्रिणो॑ गृ॒हमाग॑च्छन्ति। तान् यन्न त॒र्पये᳚त्। प्र॒जया᳚ऽस्य प॒शुभि॒र्वि

ति॑ष्ठेरन्। यत्त॒र्पये᳚त्। तृ॒प्ता ए॑नं प्र॒जया॑ प॒शुभि॑स्तर्पयेयुः।

स॒जूर्दे॒वैस्सा॒यय्याँ॑वभि॒रिति॑ सा॒यꣳ संमृ॑शति। स॒जूर्दे॒वैᳶ

प्रा॒तर्या॑वभि॒रिति॑ प्रा॒तः। ये चै॒व

दे॒वास्सा॑य॒य्याँ॑वा॑नो॒ ये च॑ प्रात॒र्या॑वा॑णः ।।43।।

210511

ताने॒वोभयाꣳ᳚ स्तर्पयति। त ए॑नन्तृप्ताᳶ प्र॒जया॑ प॒शुभि॑स्तर्पयन्ति। अ॒रु॒णो ह॑

स्मा॒हौप॑वेशिः। अ॒ग्नि॒हो॒त्र ए॒वाहꣳ सा॒यंप्रा॑त॒र्वज्रं॑

भ्रातृ॑व्येभ्य॒ᳶ प्र ह॑रामि। तस्मा॒न्मत्पापी॑याꣳसो॒ भ्रातृ॑व्या॒ इति॑।

च॒तुरुन्न॑यति। द्विर्जु॑होति। स॒मिध्स॑प्त॒मी। स॒प्तप॑दा शक्व॑री। शा॒क्व॒रो वज्रः॑।

अ॒ग्नि॒हो॒त्र ए॒व तथ्सा॒यंप्रा॑त॒र्वज्र॒य्यँज॑माना॒ भ्रातृ॑व्याय॒ प्र

ह॑रति। भव॑त्या॒त्मना᳚। परा᳚ऽस्य॒ भ्रातृ॑व्यो भवति ।।44।।

210500

ब॒र्हिᳶ प्रा॒तर्हु॒ताद्या॑य जायते रुन्धे

सा॒माक॑रोत्ये॒ता वा अ॑ग्नि हो॒त्रस्यो॑प॒सदो॑

वषट्का॒रश्च॑ प्रात॒र्या॑वा॑णो॒ वज्र॒स्त्रीणि॑ च ।।5।।

210601

प्र॒जाप॑तिरकामयतात्म॒न्वन्मे॑ जाये॒तेति॑। सो॑ऽजुहोत्।

तस्मा᳚त्म॒न्वद॑जायत। अ॒ग्निर्वा॒युरा॑दि॒त्यः।

ते᳚ऽब्रुवन्। प्र॒जाप॑तिरहौषीदात्म॒न्वन्मे॑ जाये॒तेति॑। तस्य॑

व॒यम॑जनिष्महि। जाय॑तान्न आत्म॒न्वदिति॒ ते॑ऽजुहवुः। प्रा॒णाना॑म॒ग्निः।

त॒नुवै॑ वा॒युः ।।45।।

210602

चक्षु॑ष आदि॒त्यः। तेषाꣳ॑ हु॒ताद॑जायत॒ गौरे॒व। तस्यै॒ पय॑सि॒

व्याय॑च्छन्त। मम॑ हु॒ताद॑जनि॒ ममेति॑। ते प्र॒जाप॑तिं

प्रश्नमा॑यन्। स आ॑दि॒त्यो᳚ऽग्निम॑ब्रवीत्। य॒त॒रो नौ॒ जया᳚त्। तन्नौ᳚

स॒हास॒दिति॑। कस्यै कोऽहौ॒षी॒दिति॑ प्र॒जाप॑तिरब्रवी॒त्कस्यै क॒ इति॑।

प्रा॒णाना॑म॒हमित्य॒ग्निः।।46।।

210603

त॒नुवा॑ अ॒हमिति॑ वा॒युः। चक्षु॑षो॒ऽहमित्या॑दि॒त्यः। य

एव प्राणानामहौषीत्। तस्य हुतादजनीति। अग्नेर्हुता
दजनीति। तदग्निहोत्रस्याग्निहोत्रत्वम्। गौर्वा अग्नि
होत्रम्। य एवँव्वेद गौरग्निहोत्रमिति। प्राणापानाभ्यामेवाग्निꣳ
समर्धयति। अव्यर्धुकꣳ प्राणापानाभ्यां भवति।।47।।
210604
य एवँव्वेद। तौ वायुरब्रवीत्। अनु मा भजतमिति। यदेव
गार्हपत्येऽधिश्रित्याहवनीयमभ्युद्द्रवान्। तेन त्वां
प्रीणानित्यब्रूताम्। तस्माद्यद्गार्हपत्येऽधिश्रित्याहवनीय
मभ्युद्द्रवति। वायुमेव तेन प्रीणाति।
प्रजापतिर्देवतास्सृजमानः। अग्निमेव देवतानां
प्रथममसृजत। सोऽन्यदालम्भ्यमवित्वा।।48।।
210605
प्रजापतिमभि पर्यावर्तत। स मृत्योरबिभेत्।
सोऽमुमादित्यमात्मनो निरमिमीत।
तꣳ हुत्वा पराङ्पर्यावर्तत। ततो वै स
मृत्युमपाजयत्। अप मृत्युञ्जयति। य एवँव्वेद।
तस्माद्यस्यैवँव्विदुषः। उतैकाहमुत
द्व्यहन्न जुह्वति। हुतमेवास्य भवति। असौ
ह्यादित्योऽग्निहोत्रम्।।49।।
210600
तनुवै वायुरग्निर्भवत्यवित्वा भवत्येकञ्च।।6।।
210701
रौद्रङ्गवि। वायव्यमुपसृष्टम्।
आश्विनन्दुह्यमानम्। सौम्यन्दुग्धम्।
वारुणमधि श्रितम्। वैश्वदेवा भिन्दवः।
पौष्णमुदन्तम्। सारस्वतँव्विष्यन्दमानम्। मैत्रꣳ शरः।
धातुरुद्वासितम्। बृहस्पतेरुन्नीतम्। सवितुꣳ प्र क्रान्तम्।
द्यावापृथिव्य ह्रियमाणम्।
ऐन्द्राग्नमुपसन्नम्। अग्नेꣳ पूर्वाऽऽहुतिः।
प्रजापतेरुत्तरा। ऐन्द्रꣳ हुतम्।।50।।
210700

उद्वा॑सितः॒ स॒प्त च॑ ।।7।।
210801
द॒ख्षि॒ण॒त उप॑ सृजति। पि॒तृ॒लो॒कमे॒व तेन॑ जयति। प्रा॒ची॒मावर्॑तयति।
दे॒व॒लो॒कमे॒व तेन॑ जयति। उदी॑चीमा॒वृत्य॑ दोग्धि। म॒नु॒ष्य॒लो॒कमे॒व तेन॑
जयति। पूर्वौ॑ दुह्याज्ज्ये॒ष्ठस्य॑ ज्यैष्ठिने॒यस्य॑। यो वा॑ ग॒तश्री॒स्स्यात्। अप॑रौ
दुह्यात्कनि॒ष्ठस्य॑ कानिष्ठिने॒यस्य॑। यो वा॒ बुभू॑षेत् ।।51।।
210802
न सं मृ॑शति। पा॒प॒व॒स्य॒सस्य॒ व्यावृ॑त्त्यै। वा॒य॒व्य॑व्वाँ ए॒तदुप॑सृष्टम्।
आ॒श्वि॒नन्दु॒ह्यमा॑नम्। मै॒त्रन्दु॒ग्धम्। अ॒र्य॒म्ण उ॑द्वा॒स्यमा॑नम्।
त्वा॒ष्ट्रमु॑न्नी॒यमा॑नम्। बृह॒स्पते॒रुन्नी॑तम्।
स॒वि॒तुः॒ प्रक्रा॑न्तम्। द्या॒वा॒पृ॒थि॒व्य॑ ह्रि॒यमा॑णम्।।52।।
210803
ऐ॒न्द्रा॒ग्नमुप॑ सादितम्। सर्वा॑भ्यो॒ वा
ए॒ष दे॒वता॑भ्यो जुहोति। यो॑ऽग्नि हो॒त्रञ्जु॒होति॑। यथा॒
खलु॒ वै धे॒नुन्ती॒र्थे त॒र्पय॑ति। ए॒वम॑ग्निहो॒त्री
यज॑मानन्तर्पयति। तृप्य॑ति प्र॒जया॑ प॒शुभि॑ः। प्र
सु॑व॒र्ग॑ल्लोकञ्जा॑नाति। पश्य॑ति पु॒त्रम्।
पश्य॑ति॒ पौत्र॑म्। प्र प्र॒जया॑ प॒शुभि॑र्मिथु॒नैर्जा॑यते।
यस्यै॒वँव्वि॒दुषो॑ऽग्निहो॒त्रञ्जुह्व॑ति। य उ॑ चैनदे॒वँव्वेद॑ ।।53।।
210900
बुभू॑षेद्ध्रि॒यमा॑णञ्जायते॒ द्वे च॑ ।।8।।
210901
त्रयो॒ वै प्रै॑यमे॒धा आ॑सन्।
तेषा॒न्त्रिरेको॑ऽग्निहो॒त्रम॑जुहोत्। द्विरेक॑ः।
स॒कृदेक॑ः। तेषा॒य्यँस्त्रिरजु॑होत्। स ऋ॒चाऽजु॑होत्। यो
द्विः। स यजु॑षा। यस्स॒कृत्। स तू॒ष्णीम् ।।54।।
210902
यश्च॒ यजु॒षाऽजु॑हो॒द्यश्च॑ तू॒ष्णीम्।
तावु॒भावा॑र्ध्नुताम्। तस्मा॒द्यजु॒षाऽऽहु॑ति॒ः पूर्वा॑
होत॒व्या॑। तू॒ष्णीमुत्त॑रा। उ॒भे ए॒वर्धी अव॑रुन्धे।
अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निस्स्वाहेति॑

सा॒यञ्जु॑होति। रेत॑ ए॒व तद्द॑धाति।

सूर्यो॒ ज्योति॒र्ज्योति॒स्सूर्य॒स्स्वाहेति॑ प्रा॒तः।

रेत॑ ए॒व हि॒तं प्र ज॑नयति। रेतो॒ वा ए॒तस्य॑ हि॒तन्न प्र जा॑यते ।।55।।

210903

यस्या॑ग्निहो॒त्रमहु॑तꣳ॒ सूर्यो॒ऽभ्युदेति॑।

यद्यन्ते॒ स्यात्। उ॒न्नीय॒ प्राङु॒दाद्र॑वेत्। स उ॑प॒साद्यातमि॑तोरासीत। स य॒दा

ताम्ये॑त्। अथ॒ भूस्स्वाहेति॑ जुहुयात्। प्र॒जाप॑ति॒र्वै भू॒तः।

तमे॒वोपा॑सरत्। स ए॒वैन॒न्तत॒ उन्न॑यति। नार्ति॒माच्छ॑ति॒ यज॑मानः।।56।।

210900

तू॒ष्णीञ्जा॑यते॒ यज॑मानः ।।9।।

211001

यद॒ग्निमु॒द्धर॑ति। वस॑व॒स्तर्ह्य॒ग्निः। तस्मि॒न् यस्य॒

तथा॑विधे॒ जुह्व॑ति। वसु॑ष्वे॒वास्या॑ग्निहो॒त्रꣳ हु॒तं भ॑वति। निहि॑तो

धूपा॒यञ्छे॑ते। रु॒द्रास्तर्ह्य॒ग्निः। तस्मि॒न् यस्य॒ तथा॑विधे॒

जुह्व॑ति। रु॒द्रेष्वे॒वास्या॑ग्निहो॒त्रꣳ

हु॒तं भ॑वति। प्र॒थ॒ममि॒ध्मम॒र्चिरा ल॑भते।

आ॒दि॒त्यास्तर्ह्य॒ग्निः ।।57।।

211002

तस्मि॒न् यस्य॒ तथा॑विधे॒ जुह्व॑ति।

आ॒दि॒त्येष्वे॒वास्या॑ग्निहो॒त्रꣳ हु॒तं भ॑वति।

सर्व॑ ए॒व स॑र्व॒श इ॒ध्म आदी॑प्तो भवति। विश्वे॑दे॒वा

स्तर्ह्य॒ग्निः। तस्मि॒न् यस्य॒ तथा॑विधे॒ जुह्व॑ति। विश्वे॑ष्वे॒वास्य॑

दे॒वेष्व॑ग्निहो॒त्रꣳ हु॒तं भ॑वति। नि॒त॒राम॒र्चिरु॒पावै॑ति लोहि॒नीकै॑व भवति।

इन्द्र॒स्तर्ह्य॒ग्निः। तस्मि॒न् यस्य॒

तथा॑विधे॒ जुह्व॑ति। इन्द्र॑ ए॒वास्या॑ग्निहो॒त्रꣳ हु॒तं भ॑वति ।।58।।

211003

अङ्गा॑रा भवन्ति। तेभ्यो॒ऽङ्गारे॑भ्यो॒ऽर्चिरुदे॑ति।

प्र॒जाप॑ति॒स्तर्ह्य॒ग्निः। तस्मि॒न् यस्य॒

तथा॑विधे॒ जुह्व॑ति। प्र॒जाप॑तावे॒वास्या॑ग्निहो॒त्रꣳ हु॒तं भ॑वति।

शरो॑ऽङ्गा॒रा॒ अध्यू॑हन्ते। ब्रह्म॒ तर्ह्य॒ग्निः। तस्मि॒न् यस्य॒

तथा॑विधे॒ जुह्व॑ति। ब्रह्म॑न्ने॒वास्या॑ग्निहो॒त्रꣳहु॒तं भ॑वति।

वसु॑षु रु॒द्रेष्वा॑दि॒त्येषु॒ विश्वे॑षु दे॒वेषु॑।
इन्द्रे॓ प्र॒जाप॑तौ॒ ब्रह्मन्न्॑। अप॑रिवर्गमे॒वास्यै॒तासु॑
दे॒वता॑सु हु॒तं भ॑वति। यस्यै॒वँव्वि॒दुषो॓ऽग्निहो॒त्रञ्जुह्व॑ति।
य उ॑ चैनदे॒वँव्वेद॑ ।।59।।
211000
आ॒दि॒त्यास्तर्ह्य॒ग्निरिन्द्र॑ ए॒वास्या॓ग्निहो॒त्रꣳ
हु॒तं भ॑वति दे॒वेषु॑ च॒त्वारि॑ च ।।10।।
211101
यद॒ग्निन्निर्हि॑तꣲ प्रथ॒मꣳ सर्व॑ ए॒व नि॑त॒रामङ्गा॑रा॒श्शरो
ऽङ्गा॑रा॒ ब्रह्म॒ वसु॑ष्व॒ष्टौ।। ऋ॒तन्त्वा॑ स॒त्येन॒ परि॑षिञ्चामीति॑ सा॒यं
परि॑षिञ्चति। स॒त्यन्त्व॒र्तेन॒ परि॑षिञ्चामीति॑ प्रा॒तः। अ॒ग्निर्वा ऋ॒तम्।
अ॒सावा॑दि॒त्यस्स॒त्यम्। अ॒ग्निमे॒व
तदा॑दि॒त्येन॑ सा॒यं परि॑षिञ्चति। अ॒ग्निना॑ऽऽदि॒त्यं
प्रा॒तस्सः। याव॑दहोरा॒त्रे भव॑तः। ताव॑दस्य लो॒कस्य॑। नार्ति॒र्न
रिष्टि॑ः। नान्तो॒ न प॑र्य॒न्तो॓ऽस्ति। यस्यै॒वँव्वि॒दुषो॓
ऽग्निहो॒त्रञ्जुह्व॑ति। य उ॑चैनदे॒वँव्वेद॑ ।।60।।
211100
अ॒स्ति॒ द्वे च॑ ।।11।।
210000
अङ्गि॑रसꣲ प्र॒जाप॑तिर॒ग्निꣳरु॒द्र उ॑त्त॒राव॑र्तीं ब्रह्मव॒ादिनो॓
ऽग्निहो॒त्रप्रा॑यणा य॒ज्ञाꣲ प्र॒जाप॑तिरकामयतात्म॒न्वद्रौद्रङ्गवि॑
दख्षिण॒तस्त्र॒यो वै यद॒ग्निमृ॒तन्त्वा॑ स॒त्येनैका॑दश ।।11।।
अङ्गि॑रस॒ꣲ प्रैव तेन॑ प॒शूने॒व यन्नि॒मार्ष्टि॒ यो वा
अ॑ग्निहो॒त्रस्यो॑प॒सदो॑ दक्षिण॒तष्ष॒ष्टिः ।।60।।
अङ्गि॑रसो॒ य उ॑चैनदे॒वँव्वेद॑ ।।
हरि॑ः ओम्।। श्रीकृष्णार्पणमस्तु ।।
।कृष्णयजुर्ब्राह्मणे द्वितीयाष्टके।
।प्रथमप्रपाठकस्समाप्तः।

220000

द्वितीय प्रपाठक प्रारम्भः हरिः ओम्।।

220101

प्रजापतिरकामयत प्रजास्सृजेयेति।

स एतन्दशहोतारमपश्यत्। तं मनसाऽनुद्रुत्य

दर्भस्तम्बेऽजुहोत्। ततो वै स प्रजा असृजत। ता अस्माथ्सृष्टा अपाक्रामन्। ता

ग्रहेणागृह्णात्। तद्ग्रहस्य ग्रहत्वम्। यः कामयेत प्रजायेयेति। स

दशहोतारं मनसाऽनुद्रुत्य दर्भस्तम्बे जुहुयात्। प्रजापतिर्वै दशहोता ।।1।।

220102

प्रजापतिरेव भूत्वा प्रजायते। मनसा जुहोति। मन इव हि

प्रजापतिः। प्रजापतेराप्त्यै। पूर्णया जुहोति।

पूर्ण इव हि प्रजापतिः। प्रजापतेराप्त्यै। न्यूनया जुहोति। न्यूनाद्धि

प्रजापतिः प्रजा असृजत। प्रजानाꣳ सृष्ट्यै।।2।।

220103

दर्भस्तम्बे जुहोति। एतस्माद्वै योनेः

प्रजापतिः प्रजा असृजत। यस्मादेव योनेः

प्रजापतिः प्रजा असृजत। तस्मादेव योनेः प्रजायते। ब्राह्मणो दक्षिणत

उपास्ते। ब्राह्मणो वै प्रजानामुपद्रष्टा। उपद्रष्टुमत्येव प्रजायते।

ग्रहो भवति। प्रजानाꣳ सृष्टानान्धृत्यै। यं

ब्राह्मणँव्विद्याँव्विद्वाꣳसय्यँशो नर्छेत् ।।3।।

220104

सोऽरण्यं परेत्य। दर्भस्तम्बमुद्ग्रथ्य।

ब्राह्मणन्दक्षिणतो निषाद्य।

चतुर्होतॄन्व्याचक्षीत। एतद्वै देवानां

परमङ्गुह्यं ब्रह्म। यच्चतुर् होतारः। तदेव प्रकाशङ्गमयति। तदेनं

प्रकाशङ्गतम्। प्रकाशं प्रजानाङ्गमयति। दर्भस्तम्बमुद्ग्रथ्य

व्याचष्टे।।4।।

220105

अग्निवान् वै दर्भस्तम्बः। अग्निवत्येव व्याचष्टे। ब्राह्मणो

दक्षिणत उपास्ते। ब्राह्मणो वै प्रजानामुपद्रष्टा।

उपद्रष्टुमत्येवैनय्यँशः ऋच्छति।

ई॒श्व॒रन्तय्यँशोतो॒॑रित्या॑हुः। यस्यान्ते᳚ व्या॒चष्ट॒

इति॑। व॒र॒स्तस्मै॒ देय॑ः।

यदे॒वैन॒न्तत्रो॑प॒नम॑ति। तदे॒वाव॑ रुन्धे ।।5।।
220106

अ॒ग्निम॒ादधा॑नो॒ दश॑होत्रा॒ऽरणि॒मव॑ दध्यात्। प्रजा॑तमे॒वैन॒मा ध॑त्ते।

तेनै॒वोद्द्रुत्या᳚ग्निहो॒त्रञ्जु॑हुयात्। प्रजा॑तमे॒वैन॑ञ्जुहोति।

ह॒विर्निर्व॒फस्यन्दश॑होतार॒व्व्याँच॑ख्षीत। सा॒मि॒धे॒नीरे॒व सृ॒ष्ट्वाऽऽरभ्य॒ प्र

त॑नुते। अथो॑ य॒ज्ञो वै दश॑होता। य॒ज्ञमे॒व त॑नुते।।6।।
220107

अ॒भि॒च॒रन्दश॑होतारञ्जुहुयात्। नव॒ वै पुरु॑षे प्रा॒णाः। नाभि॑र्दश॒मी।

सप्रा॑णमे॒वैन॑म॒भि च॑रति। ए॒ताव॒द्वै पुरु॑षस्य॒ स्वम्।

याव॑त्प्रा॒णाः। याव॑दे॒वास्यास्ति॑। तद॒भि च॑रति। स्वकृ॑त॒ इरि॑णे जुहोति

प्रद॒रे वा᳚। ए॒तद्वा अ॒स्यै निर्ऋ॑तिगृहीतम्। निर्ऋ॑तिगृहीत ए॒वैन॒न्निर्ऋ॑त्या ग्राहयति।

यद्वा॒चꣳ क्रू॒रम्। तेन॒ वष॑ट्करोति। वा॒च

ए॒वैन॑ङ्क्रूरेण॒ प्र वृ॑श्चति। ता॒जगार्ति॒मार्छ॑ति ।।7।।
220100

दश॑होता॒ सृष्ट्या॑ ऋ॒च्छेद्व्याच॑ष्टे रुन्ध ए॒व

त॑नुते॒निर् ऋ॑तिगृहीतं॒ पञ्च॑ च ।।1।।
220201

प्र॒जाप॑तिरकामयत दर्॒शपूर्णमा॒सौ सृ॑जे॒येति॑। स

ए॒तञ्चतु॑र्होतारमपश्यत्। तं मन॑साऽनु॒द्रुत्या॑हव॒नीये॑ऽजुहोत्।

तत॒ो वै स द॑र्शपूर्णमा॒साव॑सृजत। ताव॑स्माथ्सृ॒ष्टावपा᳚क्रामताम्।

तौ ग्रहे॑णागृह्णात्। तद्ग्रह॑स्य ग्रह॒त्वम्। द॒र्श॒पू॒र्ण॒मा॒सावा॒लभ॑मानः।

चतु॑र्होतार॒ं मन॑साऽनु॒द्रुत्या॑हव॒नीये॑ जुहुयात्।

द॒र्श॒पू॒र्ण॒मा॒सावे॒व सृ॒ष्ट्वाऽऽरभ्य॒ प्रत॑नुते ।।8।।
220202

ग्रहो॑ भवति। द॒र्॒श॒पू॒र्ण॒मा॒सयो᳚स्सृ॒ष्टयो॒र्धृत्यै᳚। सो॑ऽकामयत

चातुर्मा॒स्यानि॑ सृजे॒येति॑। स ए॒तं पञ्च॑होतारमपश्यत्। तं

मन॑साऽनु॒द्रुत्या॑हव॒नीये॑ऽजुहोत्। तत॒ो वै स

चा॑तुर्मा॒स्यान्य॑सृजत। तान्य॑स्माथ्सृ॒ष्टान्यपा᳚क्रामन्न्। तानि॒ ग्रहे॑णागृह्णात्।

तद्ग्रह॑स्य ग्रह॒त्वम्। चा॒तु॒र्मा॒स्यान्या॒लभ॑मानः ।।9।।

220203
पञ्चहोतारं मनसाऽनुद्रुत्याहवनीये जुहुयात्।
चातुर्मास्यान्येव सृष्ट्वाऽऽरभ्य
प्रतनुते। ग्रहो भवति। चातुर्मास्यानाꣳ
सृष्टानान्धृत्यै। सोऽकामयत
पशुबन्धꣳ सृजेयेति। स एतꣳ षड्ढोतारमपश्यत्। तं
मनसाऽनुद्रुत्याहवनीयेऽजुहोत्। ततो वै स
पशुबन्धमसृजत।। सोऽस्माथ्सृष्टोऽपाक्रामत्। तङ्ग्रहेणागृह्णात्।।10।।
220204
तद्ग्रहस्य ग्रहत्वम्। पशुबन्धेन यख्ष्यमाणः। षड्ढोतारं
मनसाऽनुद्रुत्याहवनीये जुहुयात्। पशुबन्धमेव सृष्ट्वाऽऽरभ्य प्र तनुते।
ग्रहो भवति। पशुबन्धस्य सृष्टस्य धृत्यै। सोऽकामयत
सौम्यमध्वरꣳ सृजेयेति। स एतꣳ सप्तहोतारमपश्यत्। तं मनसाऽनुद्रुत्याहव
नीयेऽजुहोत्। ततो वै स सौम्यमध्वरमसृजत ।।11।।
220205
सोऽस्माथ्सृष्टोऽ पाक्रामत्। तङ्ग्रहेणागृह्णात्।
तद्ग्रहस्य ग्रहत्वम्। दीख्षिष्यमाणः। सप्तहोतारं
मनसाऽनुद्रुत्याहवनीये जुहुयात्। सौम्यमेवाध्वरꣳ
सृष्ट्वाऽऽरभ्य प्र तनुते। ग्रहो भवति। सौम्यस्याध्वरस्य
सृष्टस्य धृत्यै। देवेभ्यो वै यज्ञो न प्राभवत्। तमेतावच्छस्समभरन्।।12।।
220206
यथ्संभाराः। ततो वै तेभ्यो यज्ञꣵ प्राभवत्। यथ्संभारा भवन्ति।
यज्ञस्य प्रभूत्यै। आतिथ्यमासाद्य व्याचष्टे। यज्ञमुखव्वाँ
आतिथ्यम्। मुखत एव यज्ञꣳ संभृत्य प्र तनुते। अयज्ञो वा एषः।
योऽपत्नीकः। न प्रजाꣵ प्रजायेरन्। पत्नीर्व्याचष्टे। यज्ञमेवाकः।
प्रजानां प्रजननाय। उपसथ्सु व्याचष्टे। एतद्वै पत्नीनामायतनम्। स्व
एवैना आयतनेऽवकल्पयति ।।13।।
220200
तनुत आलभमानोऽगृह्णादसृजताभरञ्जायेरन्थ्षट्च।।2।।
220301
प्रजापतिरकामयत प्रजायेयेति। स तपोऽतप्यत।

स त्रिवृत स्तोममसृजत। तं पञ्चदशः स्तोमो मध्यत उदतृणत्। तौ पूर्वपक्षश्चापरपक्षश्चाभवताम्। पूर्वपक्षन्देवा अन्वसृज्यन्त। अपरपक्षमन्वसुराः। ततो देवा अभवन्। पराऽसुराः। यङ्कामयेत वसीयान्थ्स्यादिति।।14।।
220302
तं पूर्वपक्षे याजयेत्। वसीयानेव भवति। यङ्कामयेत पापीयान्थ्स्यादिति। तमपरपक्षे याजयेत्। पापीयानेव भवति। तस्मात्पूर्वपक्षोऽपरपक्षात्करुण्यतरः। प्रजापतिर्वै दशहोता। चतुर्होता पञ्च होता। षड्ढोता सप्तहोता। ऋतवस्सव्वँथ्सरः।।15।।
220303
प्रजाः पशव इमे लोकाः। य एवं प्रजापतिं बहोर्भूयाꣳसँव्वेद। बहोरेव भूयान्भवति। प्रजापतिर्देवासुरानसृजत। स इन्द्रमपि नासृजत। तन्देवा अब्रुवन्। इन्द्रन्नो जनयेति। सोऽब्रवीत्। यथाऽहँय्युष्माꣳस्तपसाऽसृक्षि। एवमिन्द्रञ्जनयध्वमिति।।16।।
220304ते
तपोऽतप्यन्त। त आत्मन्निन्द्रमपश्यन्न्। तमब्रुवन्। जायस्वेति। सोऽब्रवीत्। किं भागधेयमभि जनिष्य इति। ऋतून्थ्संवँथ्सरम्। प्रजाः पशून्। इमाँल्लोकानित्यब्रुवन्। तँव्वै माऽऽहुत्या प्र जनयतेत्यब्रवीत् ।।17।।
220305
तञ्चतुर्होत्रा प्राजनयन्न्। यः कामयेत वीरो म आ जायेतेति। स चतुर्होतारञ्जुहुयात्। प्रजापतिर्वै चतुर्होता। प्रजापतिरेव भुत्वा प्रजायते। जजनदिन्द्रमिन्द्रियाय स्वाहेति ग्रहेण जुहोति। आऽस्य वीरो जायते। वीरꣳ हि देवा एतयाऽऽहुत्या प्राजनयन्न्। आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त। वयं पूर्वे सुवर्गल्लोँकमियाम वयं पूर्व इति ।।18।।
220306
त आदित्या एतं पञ्चहोतारमपश्यन्न्। तं पुरा प्रातरनुवाकादाग्नीध्रेऽजुहवुः। ततो वै ते पूर्वे सुवर्गल्लोकमायन्न्। यस्सुवर्गकामस्स्यात्। स पञ्चहोतारं

पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात्। सँव्वथ्सरो वै पञ्चहोता।
सँव्वथ्सरस्सुवर्गो लोकः। सव्वँथ्सर
एवर्तुषु प्रतिष्ठाय। सुवर्गल्लोकमेति।
तेऽब्रुवन्नङ्गिरस आदित्यान् ।।19।।
220307
क्व स्थ। क्व वस्सद्भ्यो हव्यव्वँख्याम इति।
छन्दस्स्वित्यब्रुवन्। गायत्रियान्त्रिष्टुभि
जगत्यामिति। तस्माच्छन्दस्सु सद्भ्य
आदित्येभ्यः। आङ्गीरसीः प्रजा हव्यव्वँहन्ति।
वहन्त्यस्मै प्रजा बलिम्। ऐनमप्रतिख्यातङ्गच्छति। य एवँव्वेद। द्वादश मासाः
पञ्चर्तवः। त्रय इमे लोकाः। असावादित्य एकविꣳशः। एतस्मिन्वा
एष श्रितः। एतस्मिन्प्रतिष्ठितः।
य एवमेत श्रितं प्रतिष्ठितँव्वेद। प्रत्येव तिष्ठति ।।20।।
220300
स्यादिति सव्वँथ्सरो जनयध्वमितीत्यब्रवीत्पूर्व इत्यादित्यानृतवष्षट्च ।।3।।
220401
प्रजापतिरकामयत प्र जायेयेति। स एतन्दशहोतारमपश्यत्। तेन
दशधाऽऽत्मानँव्विधाय। दशहोत्राऽतप्यत। तस्य चित्तिस्स्रुगासीत्। चित्तमाज्यम्।
तस्यैतावत्येव वागासीत्। एतावान् यज्ञक्रतुः। स चतुर्होतारमसृजत। सोऽनन्दत्।।21।।
220402
असृक्षि वा इममिति। तस्य सामो हविरासीत्। स
चतुर्होत्राऽतप्यत। सोऽताम्यत्। स भूरिति व्याहरत्। स
भूमिमसृजत। अग्निहोत्रन्दर्शपूर्णमासौ यजूꣳषि। स
द्वितीयमतप्यत। सोऽताम्यत्। स भुव इति व्याहरत् ।।22।।
220403
सोऽन्तरिक्षमसृजत। चातुर्मास्यानि
सामानि। स तृतीयमतप्यत। सोऽताम्यत्। स सुवरिति
व्याहरत्। स दिवमसृजत। अग्निष्टोममुक्थ्यमतिरात्रमृचः। एता
वै व्याहृतय इमे लोकाः। इमान्खलु वै लोकाननु प्रजाः
पशवश्छन्दाꣳसि प्राजायन्त। य एवमेताः
प्रजापतेः प्रथमा व्याहृतीः प्रजाता वेद ।।23।।

220404
प्र प्रजया पशुभिर्मिथुनैर्जायते। स पञ्चहोतारमसृजत।
स हविर्नाविन्दत। तस्मै सोमस्तनुवं प्रायच्छत्।
एतत्ते हविरिति। स पञ्चहोत्राऽतप्यत। सोऽताम्यत्। स
प्रत्यङ्ङबाधत। सोऽसुरानसृजत। तदस्याप्रियमासीत्।।24।।
220405
तद्दुर्वर्णꣳ हिरण्यमभवत्। तद्दुर्वर्णस्य
हिरण्यस्य जन्म। स द्वितीयमतप्यत। सोऽताम्यत्। स प्राङबाधत। स
देवानसृजत। तदस्य प्रियमासीत्। तथ्सुवर्णꣳ हिरण्यमभवत्।
तथ्सुवर्णस्य हिरण्यस्य जन्म। य एवꣳ सुवर्णस्य हिरण्यस्य जन्म वेद ।।25।।
220406
सुवर्ण आत्मना भवति। दुर्वर्णोऽस्य भ्रातृव्यः। तस्माथ्सुवर्णꣳ
हिरण्यं भार्यम्। सुवर्ण एव भवति। ऐनं प्रियङ्गच्छति नाप्रियम्। स
सप्तहोतारमसृजत। स सप्तहोत्रैव सुवर्गँल्लोकमैत्। त्रिणवेन
स्तोमेनैभ्यो लोकेभ्योऽसुरान्प्राणुदत। त्रयस्त्रिꣳशेन
प्रत्यतिष्ठत्। एकविꣳशेन रुचमधत्त।।26।।
220407
सप्तदशेन प्राजायत। य एवँव्विद्वान्थ्सोमेन यजते। सप्तहोत्रैव सुवर्गँल्लोकमेति।
त्रिणवेन स्तोमेनैभ्यो लोकेभ्यो भ्रातृव्यान्प्रणुदते। त्रयस्त्रिꣳशेन
प्रतितिष्ठति। एकविꣳशेन रुचन्धत्ते। सप्तदशेन प्र जायते।
तस्माथ्सप्तदशस्स्तोमो न निर्
हृत्यः। प्रजापतिर्वै सप्तदशः। प्रजापतिमेव मध्यतो धत्ते प्रजात्यै।।27।।
220400
अनन्दद्भुव इति व्याहरद्वेदासीद्वेदाधत्त प्रजात्यै।।4।।
220501
देवा वै वरुणमयाजयन्न्। स यस्यै यस्यै देवतायै
दक्षिणामनयत्। तामव्लीनात्। तेऽब्रुवन्न्। व्यावृत्य
प्रति गृह्णाम। तथा नो दक्षिणा न व्लेष्यतीति। ते व्यावृत्य
प्रत्यगृह्णन्न्। ततो वै तान्दक्षिणा
नाव्लीनात्। य एवँव्विद्वान्व्यावृत्य दक्षिणां
प्रतिगृह्णाति। नैनन्दक्षिणा व्लीनाति।।28।।
220502

राजा॑ त्वा॒ वरु॑णो नयतु देवि दख्षिणे॒ऽग्नये॒ हिर॑ण्य॒मित्या॑ह। आ॒ग्नेयँ॑व्वै हिर॑ण्यम्।
स्वयै॒वैन॑द्दे॒वत॑या॒ प्रति॑ गृह्णाति। सोमा॑य॒ वास॒ इत्या॑ह। सौ॒म्यँ॑व्वै वास॑ः।
स्वयै॒वैन॑द्दे॒वत॑या॒ प्रति॑ गृह्णाति। रु॒द्राय॒ गामित्या॑ह। रौ॒द्री वै गौः।
स्वयै॒वैना॑न्दे॒वत॑या॒ प्रति॑गृह्णाति। वरु॑णा॒याश्व॒मित्या॑ह।।29।।
220503
वा॒रु॒णो वा अश्व॑ः। स्वयै॒वैन॑न्दे॒वत॑या॒ प्रति॑गृह्णाति। प्र॒जाप॑तये॒
पुरु॑ष॒मित्या॑ह। प्रा॒जा॒प॒त्यो वै पुरु॑षः। स्वयै॒वैन॑न्दे॒वत॑या॒ प्रति॑ गृह्णाति। मन॑वे॒
तल्प॒मित्या॑ह। मा॒न॒वो वै तल्प॑ः। स्वयै॒वैन॑न्दे॒वत॑या॒ प्रति॑ गृह्णाति।
उ॒त्ता॒नाया॑ङ्गीर॒सायान॒ इत्या॑ह। इ॒यव्वाँ उ॑त्ता॒न आँ॑ङ्गीर॒सः।।30।।
220504
अ॒नयै॒वैन॒त्प्रति॑ गृह्णाति। वै॒श्वा॒न॒र्यर्चा रथं॒ प्रति॑ गृह्णाति।
वै॒श्वा॒न॒रो वै दे॒वत॑या॒ रथ॑ः। स्वयै॒वैन॑न्दे॒वत॑या॒ प्रति॑ गृह्णाति।
तेना॑मृत॒त्वम॑श्या॒मित्या॑ह। अ॒मृत॑मे॒वात्मन्ध॑त्ते। वयो॑ दा॒त्र इत्या॑ह। वय॑
ए॒वैन॑ङ्कृ॒त्वा। सु॒व॒र्गँल्लो॒कङ्ग॑मयति। मयो॒ मह्य॑मस्तु प्रतिग्रही॒त्र इत्या॑ह।।31।।
220505
यद्वै शि॒वम्। तन्मय॑ः। आ॒त्मन॑ ए॒वैषा परी॑त्तिः। क इ॒दङ्कस्मा॑
अदा॒दित्या॑ह। प्र॒जाप॑ति॒र्वै कः। स प्र॒जाप॑तये ददाति।
काम॒ꣳ कामा॒येत्या॑ह। कामे॑न॒ हि ददा॑ति। कामे॑न
प्रतिगृ॒ह्णाति॑। कामो॑ दा॒ता काम॑ꣳ प्रतिग्रही॒तेत्या॑ह।।32।।
220506
कामो॒ हि दा॒ता। काम॑ꣳ प्रतिग्रही॒ता। कामꣳ॑
समु॒द्रमावि॒शेत्या॑ह। स॒मु॒द्र इ॑व॒ हि काम॑ः। नेव॒ हि
काम॒स्यान्तो॒ऽस्ति॑। न स॑मु॒द्रस्य॑। कामे॑न त्वा॒ प्रति॑गृह्णा॒मीत्या॑ह। येन॒
कामे॑न प्रतिगृ॒ह्णाति॑। स ए॒वैन॑मु॒मुष्मि॑ल्लोँ॒के काम॒ आग॑च्छति। कामै॒तत्त॒
ए॒षा ते॑ काम॒ दख्षि॒णेत्या॑ह। काम॑ ए॒व तद्यज॑मानो॒ऽमुष्मि॑ल्लोँ॒के दख्षि॑णामिच्छति। न
प्र॑तिग्रही॒तरि॑। य ए॒वँव्वि॒द्वान्दख्षि॑णां प्रतिगृ॒ह्णाति॑।
अ॒नृ॒णामे॒वैनां॒ प्रति॑ गृह्णाति।।33।।
220500
ब्लो॒ना॒त्यश्व॒मित्या॑हाङ्गीर॒सꣳ प्र॑तिग्रही॒त्र
इत्या॑ह प्रतिग्रही॒तेत्या॑ह॒ दख्षि॒णेत्या॑ह च॒त्वारि॑ च ।।5।।
220601

अन्तो॒ वा ए॒ष य॒ज्ञस्य॑। यद्द॑श॒ममह॑ः।
द॒श॒मेऽह॒न्थ्सर्पर॒ाज्ञिया॑
ऋ॒ग्भिस्स्तु॑वन्ति। य॒ज्ञस्यै॒वान्त॑ङ्ग॒त्वा।
अ॒न्नाद्य॒मव॑रुन्धते। ति॒सृभि॑स्स्तुवन्ति।
त्रय॑ इ॒मे लो॒काः। ए॒भ्य ए॒व लो॒केभ्यो॒ऽन्नाद्य॒मव॑
रुन्धते। पृश्नि॑वतीर्भवन्ति। अन्न॒ँव्वै पृश्नि॑।।34।।
220602
अन्न॑मे॒वाव॑ रुन्धते। मन॑सा॒ प्रस्तौ॑ति।मन॒सोद्गा॑यति।
मन॑सा॒ प्रति॑ हरति। मन॑ इव॒ हि प्र॒जाप॑तिः। प्र॒जाप॑ते॒राप्त्यै॑। दे॒वा वै
स॒र्पाः। तेषा॑मि॒यꣳ राज्ञी॑। यथ्सर्पर॒ाज्ञिया॑ ऋ॒ग्भिस्स्तु॒वन्ति॑। अ॒स्यामे॒व
प्रति॑ तिष्ठन्ति।।35।।
220603
चतु॑र् होतॄ॒न् होता॒ व्याच॑ष्टे। स्तु॒तमनु॑शꣳसति॒ शान्त्यै॑। अन्तो॒ वा ए॒ष य॒ज्ञस्य॑।
यद्द॑श॒ममह॑ः। ए॒तत्खलु॒ वै दे॒वानां॑ प॒रमङ्गु॒ह्यं॑ ब्रह्म॑। यच्चतु॑र्
होतारः। द॒श॒मेऽह॒ श्चतु॑र् होतॄ॒न्व्याच॑ष्टे। य॒ज्ञस्यै॒वान्त॑ङ्ग॒त्वा।
प॒रमन्दे॒वाना॒ङ्गुह्यं॑ ब्रह्मा॒व॑ रुन्धे। तदे॒व प्र॑का॒शङ्ग॑मयति।।36।।
220604
तदे॑नं प्रका॒शङ्ग॒तम्। प्र॒का॒शं प्र॒जाना॒ङ्ग॑मयति। वाच॑य्य॒ँच्छति। य॒ज्ञस्य॒ धृत्यै॑।
य॒ज॒मा॒न॒दे॒व॒त्य॑व्वाँ अह॑ः। भ्रा॒तृव्य॒दे॒व॒त्या॑ रात्रि॑ः। अह्ना॒ रात्रि॑
न्ध्यायेत्। भ्रातृ॑व्यस्यै॒व तल्लो॒कँव्वृ॑ङ्क्ते। यद्दिवा॒ वाच॒ँव्विसृ॒जेत्।
अह॒र्भ्रातृ॑व्या॒योच्छिꣳ॑षेत्। यन्नक्त॒ँ व्विसृ॒जेत्।
रात्रि॒ं भ्रातृ॑व्या॒योच्छिꣳ॑षेत्। अ॒धिवृ॒क्ष॒सूर्ये॒ वाच॒ँ व्विसृ॑जति।
ए॒ताव॑न्तमे॒वास्मै॑ लो॒कमुच्छिꣳ॑षति। याव॑दादि॒त्यो॑ऽस्त॒मेति॑।।37।।
220600
पृश्नि॑ तिष्ठन्ति गमयति शिꣳषे॒त्पञ्च॑ च।।6।।
220701
प्र॒जाप॑तिꣳ प्र॒जा अ॑सृजत। तास्सृ॒ष्टास्सम॑श्लिष्यन्न्। तारू॒पेणानु॒
प्रावि॑शत्। तस्मा॑दाहुः। रू॒पँव्वै प्र॒जाप॑ति॒रिति॑। ता नाम्ना॒ऽनु॒ प्रावि॑शत्।
तस्मा॑दाहुः। नाम॒ वै प्र॒जाप॑ति॒रिति॑। तस्मा॒दप्या॑मि॒त्रौ स॒ङ्गत्य॑। नाम्ना॒
चेद्ध्वये॑ते।।38।।
220702

मि॒त्रमे॒व भ॑वतः। प्र॒जाप॑तिर्देवासु॒रान॑सृजत। स
इन्द्र॒मपि॒ नासृ॑जत। तन्दे॒वा अ॑ब्रुवन्। इन्द्र॑न्नो
जन॒येति॑। स आ॒त्मन्निन्द्र॑मपश्यत्। तम॑सृजत। तन्त्रि॒ष्टुग्वी॒र्यँ॑
भू॒त्वाऽनु॒ प्राविशत्। तस्य॒ वज्र॑ः पञ्चद॒शो हस्त॒ आप॑द्यत।
तेनो॒दय्यासु॑रान॒भ्य॑भवत्।।39।।
220703
य ए॒वँव्वेद॑। अ॒भि भ्रातृ॑व्यान्भवति। ते दे॒वा असु॑रैर्वि॒जित्य॑।
सु॒व॒र्गँल्लो॒कमा॑यन्। तेऽमु॒ष्मिँल्लो॒के व्य॑क्षुध्यन्।
तेऽब्रुवन्। अ॒मुत॑ः प्रदान॒व्वाँ उप॑जिजीवि॒मेति॑। ते स॒प्तहो॑तारय्यँ॒ज्ञं
व्वि॒धाया॒यास्यँ॑म्। आ॒ङ्गी॒र॒सं प्राहि॑ण्वन्। ए॒तेना॒मुत्र॑ कल्प॒येति॑।।40।।
220704
तस्य॒ वा इ॒यङ्क्लृप्ति॑ः। यदि॒दङ्किञ्च॑। य ए॒वँव्वेद॑। कल्प॑तेऽस्मै। स वा अ॒यं
म॑नु॒ष्ये॑षु य॒ज्ञस्स॒प्तहो॑ता। अ॒मुत्र॑ स॒द्भ्यो दे॒वेभ्यो॑ ह॒व्य
व्वँहति। य ए॒वँव्वेद॑। उपै॑नय्यँ॒ज्ञो न॑मति। सोऽमन्यत। अ॒भि वा
इ॒मेँऽस्माल्लो॒कादमुँल्लो॒क ङ्क॑मिष्यन्त॒ इति॑। स वाच॑स्पते॒ हृदिति॒ व्याह॑रत्।
तस्मा॑त्पु॒त्रो हृद॑यम्। तस्मा॑द॒स्माल्लो॒काद॒मुँल्लो॒कन्नाभि का॑मयन्ते।
पु॒त्रो हि हृद॑यम्।।41।।
220700
ह्वये॑ते अभवत्कल्प॒येतीति॑ च॒त्वारि॑ च।।7।।
220801
दे॒वा वै चतु॑र्होतृभिर्य॒ज्ञम॑तन्वत। ते वि पा॒प्मना॒
भ्रातृ॑व्ये॒णाज॑यन्त। अ॒भि सु॑व॒र्गँल्लो॒कम॑जयन्। य ए॒वँव्वि॒द्वाꣳश्चतु॑र्
होतृभिर्य॒ज्ञन्त॑नु॒ते। वि पा॒प्मना॒ भ्रातृ॑व्येण जयते। अ॒भि सु॑व॒र्गँल्लो॒कञ्ज॑यति।
षड्ढो॑त्रा प्राय॒णीय॒मा सा॑दयति। अ॒मुष्मै॒ वै लो॒काय॒ षड्ढो॑ता। घ्नन्ति॒ खलु॒ वा
ए॒तथ्सोम॑म्। यद॑भिषु॒ण्वन्ति॑।।42।।
220802
ऋ॒जुधै॒वैन॑म॒मुँ ल्लो॒कङ्ग॑मयति। चतु॑र् होत्राऽऽति॒थ्यम्। यश॒ो वै चतु॑र् होता।
यश॑ ए॒वात्मन्ध॑त्ते। पञ्च॑होत्रा प॒शुमुप॑सादयति।
सु॒व॒र्ग्यो॑ वै पञ्च॑होता। यज॑मान॑ः प॒शुः। यज॑मानमे॒व
सु॑व॒र्गँल्लो॒कङ्ग॑मयति। ग्रहा॒न्गृही॒त्वा
स॒प्तहो॑तारञ्जुहोति। इ॒न्द्रि॒यँव्वै स॒प्तहो॑ता।।43।।

220803
इ॒न्द्रि॒यम॒वात्मन्ध॑त्ते। यो वै चतु॑र्होतॄननुसव॒नन्त॒र्पय॑ति। तृप्य॑ति प्र॒जया॑
प॒शुभि॑ः। उपै॑नꣳ सोमपी॒थो न॑मति। ब॒हि॒ष्प॒व॒मा॒ने दश॑होतार॒ं
व्याँच॑क्षीत। माध्यन्दिने॒ पव॑माने॒ चतु॑र्होतारम्। आर्भ॑वे॒ पव॑माने॒ पञ्च॑होतारम्।
पि॒तृय॒ज्ञे षड्ढो॑तारम्। य॒ज्ञाय॒ज्ञिय॑स्य स्तो॒त्रे स॒प्तहो॑तारम्।
अ॒नु॒स॒व॒नमे॒वैना॑ꣳ स्तर्पयति।।44।।
220804
तृप्य॑ति प्र॒जया॑ प॒शुभि॑ः। उपै॑नꣳ सोमपी॒थो न॑मति। दे॒वा वै चतु॑र्होतृभिस्स॒त्त्रमा॑सत।
ऋद्धि॑परिमित॒य्यँश॑स्कामाः। ते॑ऽब्रुवन्न्। यन्न॑ः प्रथ॒म य्यँश॑ ऋ॒च्छात्।
सर्वे॑षान्न॒स्तथ्स॒हास॒दिति॑। सोम॒श्चतु॑र् होत्रा। अ॒ग्निः पञ्च॑होत्रा। धा॒ता
षड्ढो॑त्रा।।45।।
220805
इन्द्र॑स्स॒प्तहो॑त्रा। प्र॒जाप॑ति॒र्दश॑होत्रा। तेषा॒ꣳ सोम॒ꣳ राजा॑न॒य्यँश॑
आर्छत्। तन्न्य॑कामयत। तेनाप॑क्रामत्। तेन॑ प्र॒लाय॑मचरत्। तन्दे॒वाः प्रै॒षैः
प्रैष॑मैच्छन्न्। तत्प्रै॒षाणा॑ं प्रैष॒त्वम्। नि॒वि॒द्भिर्न्य॑वेदयन्न्। तन्नि॒विदा॑ं
न्निवि॒त्त्वम्।।46।।
220806
आ॒प्रीभि॑राप्नुवन्न्। तद॒प्रीणा॑माप्रि॒त्वम्। तम॑घ्नन्न्। तस्य॒
यश॒ो व्य॑गृह्णत। ते ग्रहा॑ अभवन्न्। तद्ग्रहा॑णाङ्ग्रह॒त्वम्।
यस्यै॒वँव्वि॒दुषो॒ ग्रहा॑ गृह्यन्ते॑। तस्य॒ त्वेव गृ॑ही॒ताः।
ते॑ऽब्रुवन्न्। यो वै न॒ः श्रेष्ठोऽभू॑त्।।47।।
220807
तम॑वधिष्म। पुन॑रि॒मꣳ सु॑वामह॒ा इति॑। तञ्छन्दो॑भिरसुवन्त।
तच्छन्द॑साञ्छन्द॒स्त्वम्। साम्ना॑ समान॑यन्न्। तथ्साम्न॑स्साम॒त्वम्।
उ॒क्थैरुद॑स्थापयन्न्। तदु॒क्थाना॑मुक्थ॒त्वम्। य ए॒वँ व्वेद॑। प्रत्ये॒व ति॑ष्ठति।।48।।
220808
सर्व॒मायु॑रेति। सोमो॒ वै यश॑ः। य ए॒वँ व्वि॒द्वान्थ्सोम॑म॒ागच्छ॑ति। यश॑
ए॒वैन॑मृच्छति। तस्मा॑दाहुः। यश्चै॒वँव्वेद॒ यश्च॒ न। तावु॒भौ
सोम॒माग॑च्छतः। सोमो॒ हि यश॑ः। तन्त्वाऽव यश॑ ऋच्छ॒तीत्या॑हुः।
यस्सोमे॒ सोम॒ं प्राहेति॑। तस्मा॒थ्सोमे॒ सोम॒ः प्रोच्य॑ः। यश॑ ए॒वैन॑मृच्छति।।49।।
220800
अ॒भि॒षु॒ण्वन्ति॑ स॒प्तहो॑ता तर्पयति॒ षड्ढो॑त्रा निवि॒त्त्वमभू॑त्तिष्ठति॒ प्राहेति॒ द्वे च॑।।8।।

220901

इ॒दव्वाँ अग्रे॒ नैव किञ्च॒ नासी᳚त्। न द्यौरा॑सीत्। न पृ॑थि॒वी। नान्तरि॑ख्षम्।

तदस॑दे॒व सन्मनो॑ऽकुरु॒त स्यामिति॑। तद॑तप्यत।

तस्मा᳚त्तेपा॒नाद्धूमो॑ऽजायत। तद्भूयो॑ऽतप्यत।

तस्मा᳚त्तेपा॒नाद॒ग्निर॑जायत। तद्भूयो॑ऽतप्यत।।50।।

220902

तस्मा᳚त्तेपा॒नाज्ज्योति॑रजायत। तद्भूयो॑ऽतप्यत। तन्मा᳚त्तेपा॒नाद॒र्चिर॑जायत।

तद्भूयो॑ऽतप्यत। तस्मा᳚त्तेपा॒नान्मरी॑चयोऽजायन्त। तद्भूयो॑ऽतप्यत।

तस्मा᳚त्तेपा॒नादु॑दा॒रा अ॑जायन्त। तद्भूयो॑ऽतप्यत। तद॒भ्रमि॑व॒ सम॑हन्यत।

तद्व॒स्तिम॑भिनत्।।51।।

220903

स स॑मु॒द्रो॑ऽभवत्। तस्मा᳚त्समु॒द्रस्य॒ न पि॑बन्ति। प्र॒जन॑नमिव॒ हि मन्य॑न्ते।

तस्मा᳚त्प॒शोर्जाय॑माना॒दाप॑ᳲ पु॒रस्ता᳚द्यन्ति।

तद्दश॑हो॒ताऽन्व॑सृज्यत। प्र॒जाप॑ति॒र्वै दश॑होता। य ए॒वन्तप॑सो

वी॒र्यँ᳚व्वि॒द्वाᳶ स्तप्य॑ते। भव॑त्ये॒व। तद्वा

इ॒दमाप॑स्सलि॒लमा॑सीत्। सो॑ऽरोदीत्प्र॒जाप॑तिः।।52।।

220904

स कस्मा॑ अज्ञि। यद्य॒स्या अप्र॑तिष्ठाया॒ इति॑। यद॒फ्स्व॑वाप॑द्यत। सा

पृ॑थि॒व्य॑भवत्। यद्व्यमृ॑ष्ट। तद॒न्तरि॑ख्षमभवत्। यदू॒र्ध्वमु॒दमृ॑ष्ट। सा

द्यौर॑भवत्। यदरो॑दीत्। तद॒नयो॑ रोद॒स्त्वम्।।53।।

220905

य ए॒वँव्वेद॑। नास्य॑ गृहे रु॑दन्ति। ए॒तद्वा ए॒षाँल्लो॒काना॒ञ्जन्म॑। य

ए॒वमे॒षाँल्लो॒काना॒ञ्जन्म॒ वेद॑। नैषु॒ लो॒केष्वार्ति॒मार्छ॑ति। स

इ॒मां प्र॑ति॒ष्ठाम॑विन्दत। स इ॒मां प्र॑ति॒ष्ठाँव्वि॒त्वाऽका॑मयत॒ प्रजा॑ये॒येति॑।

स तपो॑ऽतप्यत। सो᳚ऽन्तर्वा॑नभवत्। स ज॒घना॒दसु॑रानसृजत।।54।।

220906

तेभ्यो॑ मृन्मये॒ पात्रे॑ऽन्नमदुहत्। याऽस्य॒ सा त॒नूरासी᳚त्।

तामपा॑हत। सा तमि॑स्राऽभवत्। सो॑कामयत॒ प्रजा॑ये॒येति॑।

स तपो॑ऽतप्यत। सो᳚न्तर्वा॑नभवत्। स प्र॒जन॑नादे॒व प्र॒जा अ॑सृजत।

तस्मा॑दि॒मा भूयि॑ष्ठाः। प्र॒जन॑ना॒द्ध्ये॑ना॒ अस॑र्जत।।55।।

220907

ताभ्यो॑ दारु॒मये॒ पात्रे॒ पयो॑ऽदुहत्। याऽस्य॒ सा त॒नूरासी᳚त्। तामपा॑हत।

सा जो॒थ्स्ना॑ऽभवत्। सो॑ऽकामयत॒ प्रजा॑ये॒येति॑। स तपो॑ऽतप्यत।सो᳚ऽन्तर्वा॑नभवत्। स

उ॑पप॒ख्षाभ्या॑मे॒वर्तू॒न॑सृजत। तेभ्यो॑ रज॒ते पात्रे॑ घृ॒तम॑दुहत्। याऽस्य॒ सा

त॒नूरासी᳚त्।।56।।

220908

ताम॑पाहत। सो॑ऽहोरा॒त्रयो᳚स्स॒न्धिर॑भवत्। सो॑ऽकामयत॒ प्रजा॑ये॒येति॑। स

तपो॑ऽतप्यत। सो᳚ऽन्तर्वा॑नभवत्। स मुखा᳚द्दे॒वान॑सृजत। तेभ्यो॒ हरि॑ते॒ पात्रे॒

सोम॑मदुहत्। याऽस्य॒ सा त॒नूरासी᳚त्। ताम॑पाहत। तदह॑रभवत्।।57।।

220909

ए॒ते वै प्र॒जाप॑ते॒र्दोहा᳚ः। य ए॒वँव्वेद॑। दु॒ह ए॒व प्र॒जाः। दिवा॒

वै नो॑ऽभू॒दिति॑। तद्दे॒वाना᳚न्देव॒त्वम्। य ए॒वन्दे॒वाना᳚न्देव॒त्वँव्वेद॑।

दे॒ववा॑ने॒व भ॑वति। ए॒तद्वा अ॑होरा॒त्राणा॒ञ्जन्म॑। य

ए॒वम॑होरा॒त्राणा॒ञ्जन्म॒ वेद॑। नाहो॑रा॒त्रेष्वार्ति॒मार्छ॑ति।।58।।

220910

अस॒तोऽधि॒ मनो॑ऽसृज्यत। मन॑ः प्र॒जाप॑तिमसृजत। प्र॒जाप॑तिꣳ प्र॒जा

अ॑सृजत। तद्वा इ॒दं मन॑स्ये॒व प॑र॒मं प्रति॑ष्ठितम्। यदि॒दङ्किञ्च॑।

तदे॒तच्छ्वो॑वस्य॒सन्नाम॒ ब्रह्म॑। व्यु॒च्छन्ती᳚ व्युच्छन्त्यस्मै॒ वस्य॑सी वस्यसी॒

व्यु॑च्छति। प्रजा॑यते प्र॒जया॑ प॒शुभि॑ः। प्र प॑रमे॒ष्ठिनो॒ मात्रा॑माप्नोति। य ए॒वँ व्वेद॑ ।।59।।

220900

अ॒ग्निर॑जायत॒ तद्भूयो॑ऽतप्यताभिनदरोदीत्प्र॒जाप॑ती

रोदु॒स्त्वम॑सृज॒तासृ॑जत घृ॒तम॑दुह॒द्याऽस्य॒ सा

त॒नूरासी॒दह॑रभवद्दच्छति॒ वेद॑ ।।9।।

221001

इ॒दं धू॒मो᳚ऽग्निर्ज्योति॑र॒र्चिर्मरी॑चय उदा॒रास्तद॒भ्रꣳ स

ज॒घना॒थ्सा तमि॑स्रा॒ स प्र॒जन॑ना॒थ्सा जोथ्स्ना॒ स

उ॑पप॒ख्षाभ्या॒ꣳ सो॑ऽहोरा॒त्रयो᳚स्स॒न्धिस्स

मुखा॒त्तदह॑र्दे॒ववा᳚न्मृ॒न्मयै॑ दारु॒मयै॑ रज॒ते

हरि॑ते॒ तेभ्य॒स्ताभ्यो॒ द्वे तेऽन्नं॒ पयो॑ घृ॒तꣳ सोम᳚म्।।

प्र॒जाप॑ति॒रिन्द्र॑मसृजतानुजाव॒रन्दे॒वाना᳚म्। तं प्राहि॑णोत्। परे॑हि।

ए॒तेषा᳚न्दे॒वाना॒मधि॑पतिरे॒धीति॑। तन्दे॒वा अ॑ब्रुवन्। कस्त्वमसि॑।

व॒यँव्वै त्वच्छ्रेया॑ꣳसः स्म॒ इति॑। सो᳚ऽब्रवीत्। कस्त्वमसि॑

व॒यँव्वै त्वच्छ्रेया॑ꣳसः स्म॒ इति॑ मा दे॒वा

अंवोचुन्निति। अथु वा इुदन्तर्ह्हि प्रुजापतौ हरं आसीत् ।।60।।
221002
यदुस्मिन्नादुित्ये। तदेनमब्रवीत्। एुतन्मे प्रयच्छ।
अथाहमुेतेषान्देवानामधिपतिर्भविष्यामीति। कोऽह
स्यामित्यब्रवीत्। एुतत्प्रदायेति। एुतथ्स्या
इत्यब्रवीत्। यदुेतद्ब्रवीषीति। को
हु वै नाम प्रुजापतिः। य एुववेदं।।61।।
221003
विदुरेनुन्नाम्ना। तदस्मै रुक्मङ्कृत्वा
प्रत्यमुञ्चत्। ततो वा इन्द्रो देवानामधिपतिरभवत्। य एुवँव्वेदं।
अधिपतिरेुव संमानानां भवति।
सोऽमन्यत। किङ्किव्वाँ अंकरुमिति। स चुन्द्रं मु आहुरेति
प्रालपत्। तच्चन्द्रमसश्चन्द्रमुस्त्वम्। य एुवँव्वेदं।।62।।
221004
चुन्द्रवानेुव भंवति। तन्देुवा अंब्रुवन्। सुवीर्यो मर्या यथा गोपायत
इति। तथ्सूर्यस्य सूर्युत्वम्। य एुवँव्वेदं। नैनंन्दभ्नोति। कश्चु नास्मिुन्वा
इुदमिन्द्रियं प्रत्यस्थादिति। तदिन्द्रस्येन्द्रत्वम्। य एुवँव्वेदं।
इुन्द्रियाव्येव भंवति ।।63।।
221005
अयव्वाँ इुदं परुमोऽभूदिति। तत्परमेुष्ठिनः परमेष्ठित्वम्।
य एुवँव्वेदं। पुरमामेुव काष्ठाङ्गच्छति। तन्देुवा स्संमुन्तं पर्यविशन्।
वसंवः पुरस्तात्। रुद्रा दंक्षिणुतः। आुदित्याः
पुश्चात्। विश्वे देुवा उंत्तरुतः। अङ्गिरसः प्रुत्यञ्चम्।।64।।
221006
साुध्याः पराञ्चम्। य एुवँव्वेदं। उपैनंः
समुानास्संव्विशन्ति। स प्रुजापतिरेुव भूुत्वा
प्रुजा आवंयत्। ता अंस्मै नातिष्ठन्ताुन्नाद्याय
। ता मुखं पुरस्तात्पश्यन्तीः। दुक्षिुणतः
पर्यायन्। स दंक्षिणुतः पर्यवर्तयत। ता मुखं
पुरस्ताुत्पश्यन्तीः। मुखन्दक्षिणुतः ।।65।।
221007

पश्चात्पर्यायन्। स पश्चात्पर्यवर्तयत। ता मुखं
पुरस्तात्पश्यन्तीः। मुखन्दक्खिणतः। मुखं पश्चात्।
उत्तरतः पर्यायन्। स उत्तरतः पर्यवर्तयत। ता मुखं पुरस्तात्पश्यन्तीः।
मुखन्दष्खिणतः। मुखं पश्चात्।।66।।
221008
मुखमुत्तरतः। ऊर्ध्वा उदायन्। स उपरिष्टान्न्यवर्तयत। तास्सर्वतोमुखो
भूत्वाऽऽवयत्। ततो वै तस्मै
प्रजा अतिष्ठन्तान्नाद्याय। य एवँ व्विद्वान्परि च
वर्तयते नि च। प्रजापतिरेव भूत्वा प्रजा अत्ति। तिष्ठन्तेऽस्मै
प्रजा अन्नाद्याय। अन्नाद एव भवति ।।67।।
221000
आसीद्वेदं चन्द्रमस्त्वय्यँ एवँव्वेदेन्द्रियाव्येव भवति
प्रत्यञ्चं मुखन्दक्खिणतो मुखं पश्चान्नव च ।।10।।
221101
प्रजापतिरकामयत बहोर्भूयान्थ्स्यामिति। स एतन्दशहोतारमपश्यत्।
तं प्रायुङ्क्त। तस्य प्रयुक्ति बहोर्भूयानभवत्। यः कामयेत
बहोर्भूयान्थ्स्यामिति। स दशहोतारं प्रयुञ्जीत।
बहोरेव भूयान्भवति। सोऽकामयत वीरो म आजायेतेति।
स दशहोतुश्चतुर्होतारन्निरमिमीत। तं प्रायुङ्क्त ।।68।।
221102
तस्य प्रयुक्तीन्द्रोऽजायत। यः कामयेत वीरो म आजायेतेति।
स चतुर्होतारं प्रयुञ्जीत। आऽस्य वीरो जायते।
सोऽकामयत पशुमान्थ्स्यामिति। स चतुर्होतुः पञ्चहोतारन्निरमिमीत। तं प्रायुङ्क्त।
तस्य प्रयुक्ति पशुमानभवत्। यः कामयेत पशुमान्थ्स्यामिति। स
पञ्चहोतारं प्रयुञ्जीत।।69।।
221103
पशुमानेव भवति। सोऽकामयतर्तवो मे कल्पेरन्निति। स
पञ्चहोतुष्षड्ढोतारन्निरमिमीत। तं प्रायुङ्क्त।
तस्य प्रयुक्त्यृतवोऽस्मा अकल्पन्त।
यः कामयेतर्तवो मे कल्पेरन्निति। स षड्ढोतारं प्रयुञ्जीत।
कल्पन्तेऽस्मा ऋतवः। सोऽकामयत सोमपस्सोमयाजी स्याम्। आ

मे॑ सो॒मप॒स्सो॑मया॒जी जा॑ये॒तेति॑।।70।।
221104
स षड्ढो॑तुस्स॒प्तहो॑तार॒न्निर॑मिमीत। तं प्रायु॑ङ्क्त। तस्य॒ प्रयु॑क्ति
सो॒मप॒स्सो॑मया॒ज्य॑भवत्। आऽस्य॑ सो॒मप॒स्सो॑मया॒ज्य॑जायत।
यः का॒मये॑त सो॒मप॒स्सो॑मया॒जी स्या॑म्। आ मे॑
सो॒मप॒स्सो॑मया॒जी जा॑ये॒तेति॑। स स॒प्तहो॑तार॒ं प्रयु॑ञ्जीत।
सो॒म॒प ए॒व सो॑मया॒जी भ॑वति। आऽस्य॑ सो॒मप॒स्सो॑मया॒जी जा॑यते।
स वा ए॒ष प॒शुः प॑ञ्च॒धा प्रति॑तिष्ठति ।।71।।
221105
प॒द्भिर्मु॒खेन॑। ते दे॒वाः प॒शून् वि॒त्वा। सु॒व॒र्गँल्लो॒कमा॑यन्न्।
ते॑ऽमुष्मि॑ल्लो॒के व्य॑क्षुध्यन्। ते॑ऽब्रुवन्। अ॒मुत॑ः
प्रदान॒व्वाँ उप॑जिजीवि॒मेति॑। ते स॒प्तहो॑तारय्यँ॒ज्ञं
व्वि॒धाया॒यास्य॑म्। आ॒ङ्गीर॒सं प्राहि॑ण्वन्न्। ए॒तेना॒मुत्र॑
कल्प॒येति॑। तस्य॒ वा इ॒यङ्क्लृप्तिः ।।72।।
221106
यदि॒दङ्कि॑ञ्च॑। य ए॒वँव्वेद॑। कल्प॑तेऽस्मै। स वा अ॒यं म॑नु॒ष्ये॑षु
य॒ज्ञस्स॒प्तहो॑ता। अ॒मुत्र॑ स॒द्भ्यो दे॒वेभ्यो॑ ह॒व्यव्वँ॑हति।
य ए॒वँव्वेद॑। उपै॑नय्यँ॒ज्ञो न॑मति। यो वै
चतु॑र्होतृणान्नि॒दान॒व्वेद॑। नि॒दान॑वान्भवति। अ॒ग्नि॒हो॒त्रँव्वै
दर्श॑होतुर्नि॒दान॑म्। द॒र्श॒पू॒र्ण॒मासौ चतु॑र्होतुः।
चा॒तु॒र्मा॒स्यानि॒ पञ्च॑होतुः। प॒शु॒ब॒न्धष्षड्ढो॑तुः।
सौ॒म्यो॑ऽध्व॒रस्स॒प्तहो॑तुः। ए॒तद्वै चतु॑र्होतृणान्नि॒दान॑म्।
य ए॒वँव्वेद॑। नि॒दान॑वान्भवति।।73।।
221100
अ॒मि॒मी॒त॒ तं प्रायु॑ङ्क्त पञ्च॑होतार॒ं प्र यु॑ञ्जीत जाये॒तेति॑
तिष्ठति॒ क्लृप्ति॒र्दर्श॑होतुर्नि॒दान॑ꣳ स॒प्त च॑ ।।11।।
220000
प्र॒जाप॑तिरकामयत प्र॒जास्सृ॑जे॒येति॑ प्र॒जाप॑तिरकामयत
दर्॒शपूर्ण॒मासौ सृ॑जे॒येति॑ प्र॒जाप॑तिरकामयत॒ प्रजा॑ये॒येति॒ स
तप॒स्स त्रि॒वृत॑ं प्र॒जाप॑तिरकामयत॒ दर्श॑होतार॒ं तेन॑
दश॒धाऽऽत्मान॑न्दे॒वा वै वरु॑ण॒मन्तो॒ वै

प्र॒जाप॑ति॒स्तास्सृ॒ष्टास्सम॑श्लिष्यन्दे॒वा वै

चतु॑र्‌होतृभिरि॒दव्वाँ अग्रे॑ प्र॒जाप॑ति॒रिन्द्रं॑ प्र॒जाप॑तिरकामयत

ब॒होर्भूय॒ानेका॑दश ।।11।।

प्र॒जाप॑ति॒स्तद्ब्रह्म॑स्य प्र॒जाप॑तिरकामयता॒नयै॒वैन॒त्तस्य॒ वा

इ॒यङ्क्लृ॒प्ति॒स्तस्माँ॑त्तेपा॒नाज्ज्योति॒र्यद॒स्मिन्ना॑दि॒त्ये

स षड्ढो॑तुस्स॒प्तहो॑तार॒न्त्रिस॑प्ततिः ।।73।।

।।प्र॒जाप॑तिरकामयत नि॒दान॑वान्भवति।।

।। हरिः॑ ओम्।।

द्वितीय प्रपाठकस्समाप्तः

230000
तैत्तिरीयब्राह्मणे द्वितीयाष्टके तृतीय प्रपाठक प्रारम्भः ।। हरिः ओम्।।
230101
ब्रह्मवादिनो वदन्ति । किञ्चतुर्होतृणाञ्चतुर्होतृत्वमिति । यद्देवेषु चतुर्धा होतारः
। तेन चतुर्होतारः । तस्माच्चतुर्होतार
उच्यन्ते । तच्चतुर्होतृणाञ्चतुर्होतृत्वम् । सोमो वै चतुर्होता । अग्निः पञ्चहोता । धाता षड्ढोता ।
इन्द्रस्सप्तहोता ।।1।।
230102
प्रजापतिर्दशहोता । य एवञ्चतुर्होतृणामृद्धिं वेद । ऋध्नोत्येव । य एषामेवं बन्धुताव्वेद
। बन्धुमान्भवति । य एषामेवं
क्लृप्तिव्वेद । कल्पतेऽस्मै । य एषामेवमायतनव्वेद । आयतनवान्भवति । य एषामेवं प्रतिष्ठाव्वेद
।।2।।
230103
प्रत्येव तिष्ठति । ब्रह्मवादिनो वदन्ति । दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । अथ
कस्माच्चतुर्होतार
उच्यन्त इति । इन्द्रो वै चतुर्होता । इन्द्रः खलु वै श्रेष्ठो देवतानामुपदेशनात्
। य एवमिन्द्रं श्रेष्ठन्देवतानामुपदेशनाद्वेद । वसिष्ठस्समानानां
भवति। तस्माच्छ्रेष्ठमायन्तं प्रथमेनैवानु बुध्यन्ते । अयमागन्न् । अयमवासादिति
। कीर्तिरस्य पूर्वाऽऽगच्छति जनतामायतः । अथो एनं
प्रथमेनैवानु बुध्यन्ते । अयमागन्न् । अयमवासादिति ।।3।।
230100
सप्तहोता प्रतिष्ठाव्वेद बुध्यन्ते षट्च ।।1।।
230201
दक्षिणां प्रतिग्रहीष्यन्थ्सप्तदशकृत्वोऽपान्यात् । आत्मानमेव समिन्धे । तेजसे वीर्याय
। अथो प्रजापतिरेवैनां भूत्वा
प्रति गृह्णाति । आत्मनोऽनार्त्यै । यद्येनमार्त्विज्याद्वृतꣳ सन्तन्निर्हरेरन् ।
आग्नीध्रे जुहुयाद्दशहोतारम् । चतुर्गृहीतेनाज्येन । पुरस्तात्प्रत्यङ्तिष्ठन्न् ।
प्रतिलोमव्विग्राहम् ।।4।।
230202
प्राणानेवास्योपदासयति । यद्येनं पुनरुपशिक्षेयुः । आग्नीध्र एव जुहुयाद्दशहोतारम्
। चतुर्गृहीतेनाज्येन । पश्चात्प्राङासीनः ।
अनुलोममविग्राहम् । प्राणानेवास्मै कल्पयति । प्रायश्चित्ती वाग्घोतेत्यृतुमुख ऋतुमुखे

जुहोति । ऋतूनेवास्मै कल्पयति । कल्पन्तेऽस्मा ऋतवः ।।5।।
230203
कॢप्ता अस्मा ऋतव आयन्ति । षड्ढोता वै भूत्वा प्रजापतिरिदꣳ सर्वमसृजत । स मनोऽसृजत
। मनसोऽधि गायत्रीमसृजत ।
तद्गायत्रीय्यँश आर्छत् । तामाऽलभत । गायत्रिया अधि छन्दाꣳस्यसृजत । छन्दोभ्योऽधि
साम । तथ्साम यश आर्छत् । तदाऽलभत ।।6।।
230204
साम्नोऽधि यजूꣳष्यसृजत । यजुर्भ्योऽधि विष्णुम् । तद्विष्णुय्यँश आर्छत् । तमाऽलभत ।
विष्णोरध्योषधीरसृजत ।
ओषधीभ्योऽधि सोमम् । तथ्सोमय्यँश आर्छत् । तमाऽलभत । सोमादधि पशूनसृजत ।
पशुभ्योऽधीन्द्रम् ।।7।।
230205
तदिन्द्रय्यँश आर्छत् । तदेनन्नाति प्राच्यवत । इन्द्र इव यशस्वी भवति । य एवव्वेद । नैनय्यँशोऽति
प्रच्यवते । यद्वा
इदङ्किञ्च । तथ्सर्वमुत्तान एवाङ्गीरसꣳ प्रत्यगृह्णात् । तदेनं प्रतिगृहीतन्नाहिनत्
। यत्किञ्च प्रतिगृह्णीयात् । तथ्सर्वमुत्तानस्त्वाङ्गीरसꣳ प्रतिगृह्णात्वित्येव
प्रतिगृह्णीयात् । इयव्वाँ उत्तान आङ्गीरसः । अनयैवैनत्प्रति गृह्णाति । नैनꣳ हिनस्ति
। बर्हिषा प्रतीयाद्गाव्वाँऽश्वं वा । एतद्वै पशूनां प्रियं धाम ।
प्रियेणैवैनं धाम्ना प्रत्येति ।।8।।
230200
विग्राहमृतवस्तदाऽलभतेन्द्रङ्गृह्णीयाथ्षट्च ।।2।।
230301
यो वा अविद्वान्निवर्तयते । विशीर्षा सपाप्माऽमुष्मिँल्लोके भवति । अथ यो विद्वान्नि
वर्तयते । सशीर्षा विपाप्माऽमुष्मिँल्लोके
भवति । देवता वै सप्त पुष्टिकामा न्यवर्तयन्त । अग्निश्च पृथिवी च । वायुश्चान्तरिक्षञ्च
। आदित्यश्च द्यौश्च चन्द्रमाः । अग्निर्न्यवर्तयत । स
साहस्रमपुष्यत् ।।9।।
230302
पृथिवी न्यवर्तयत । सौषधीभिर्वनस्पतिभिरपुष्यत् । वायुर्न्यवर्तयत । स मरीचीभिरपुष्यत् ।
अन्तरिक्षन्न्यवर्तयत ।
तद्वयोभिरपुष्यत् । आदित्यो न्यवर्तयत । स रश्मिभिरपुष्यत् । द्यौर्न्यवर्तयत । सा नक्षत्रैरपुष्यत्

। च॒न्द्रमा॑ न्य॑वर्तयत । सौ॑ऽहोरा॒त्रैर॑र्धम॒ासै
र्मा॑सैरृ॒त्रृतुभि॑स्सव्वँथ्स॒रेणा॑पुष्यत् । तान्पोषा॑न्पुष्यति । या॑ंस्तेऽपु॑ष्यन् । य ए॒वँव्वि॒द्वान्नि च॑ व॒र्तय॑ते॒
परि॑ च ।।10।।
230300
अ॒पु॒ष्य॒न्नख्ष॑त्त्रैरपुष्य॒त्पञ्च॑ च ।।3।।
230401
तस्य॒ वा अ॒ग्नेर्॒हिर॑ण्यं प्रतिजग्र॒हुषः॑ । अ॒र्धमि॑न्द्रियस्यापा॑क्रामत् । तद॒तेने॒व प्रत्य॑गृह्णात्
। तेन॒ वै सोऽर्धमि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्त ।
अ॒र्धमि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्ते । य ए॒वँव्वि॒द्वान् हिर॑ण्यं प्रतिगृ॒ह्णाति॑ । अथ॒
योऽवि॑द्वान्प्रति गृ॒ह्णाति॑ । अ॒र्धम॑स्येन्द्रियस्याप॑ क्रामति । तस्य॒ वै सोम॑स्य॒
वास॑ः प्रतिजग्र॒हुषः॑ । तृती॑यमिन्द्रियस्यापा॑क्रामत् ।।11।।
230402
तद॒तेने॒व प्रत्य॑गृह्णात् । तेन॒ वै स तृती॑यमिन्द्रियस्या॒त्मन्नु॒पाध॑त्त । तृती॑यमिन्द्रियस्या॒त्मन्नु॒पाध॑त्ते
। य ए॒वँव्वि॒द्वान् वास॑ः
प्रतिगृ॒ह्णाति॑ । अथ॒ योऽवि॑द्वान्प्रति गृ॒ह्णाति॑ । तृती॑यमस्येन्द्रियस्याप॑ क्रामति । तस्य॒
वै रु॒द्रस्य॒ गां प्र॑तिजग्र॒हुषः॑ । च॒तु॒र्थमि॑न्द्रियस्यापा॑क्रामत् ।
ताम॒तेने॒व प्रत्य॑गृह्णात् । तेन॒ वै स च॑तु॒र्थमि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्त ।।12।।
230403
च॒तु॒र्थमि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्ते । य ए॒वँव्वि॒द्वान्गां प्र॑तिगृ॒ह्णाति॑ । अथ॒ योऽवि॑द्वान्प्रतिगृ॒ह्णाति॑
। च॒तु॒र्थम॑स्येन्द्रियस्याप॑ क्रामति ।
तस्य॒ वै वरु॑ण॒स्याश्वं॑ प्रतिजग्र॒हुषः॑ । प॒ञ्च॒ममि॑न्द्रियस्यापा॑क्रामत् । तम॒तेने॒व
प्रत्य॑गृह्णात् । तेन॒ वै स प॑ञ्च॒ममि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्त । प॒ञ्च॒ममि॑न्द्रिय
स्या॒त्मन्नु॒पाध॑त्ते । य ए॒वँव्वि॒द्वानश्वं॑ प्रतिगृ॒ह्णाति॑ ।।13।।
230404
अथ॒ योऽवि॑द्वान्प्रतिगृ॒ह्णाति॑ । प॒ञ्च॒मम॑स्येन्द्रियस्याप॑ क्रामति । तस्य॒ वै प्र॒जाप॑ते॒ः
पुरु॑षं प्रतिजग्र॒हुषः॑ । ष॒ष्ठमि॑न्द्रियस्यापा॑क्रामत् ।
तम॒तेने॒व प्रत्य॑गृह्णात् । तेन॒ वै स ष॒ष्ठमि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्त । ष॒ष्ठमि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्ते
। य ए॒वँव्वि॒द्वान्पुरु॑षं प्रतिगृ॒ह्णाति॑ । अथ॒ योऽवि॑द्वान्प्रति
गृ॒ह्णाति॑ । ष॒ष्ठम॑स्येन्द्रियस्याप॑ क्रामति ।।14।।
230405
तस्य॒ वै मनो॒स्तल्पं॑ प्रतिजग्र॒हुषः॑ । स॒प्तममि॑न्द्रियस्यापा॑क्रामत् । तम॒तेने॒व प्रत्य॑गृह्णात्

। तेन॒ वै स स॑प्त॒मम॑मि॑न्द्रियस्या॒त्मन्नु॒पा
ध॑त्त । स॒प्त॒मम॑मि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्ते । य ए॒वंवि॒द्वाꣳस्तल्पं॑ प्रति गृ॒ह्णाति॑
। अथ॒ योऽवि॑द्वान्प्रति गृ॒ह्णाति॑ । स॒प्त॒मम॑स्येन्द्रियस्याप॑ क्रामति । तस्य॒ वा
उ॑त्ता॒नस्याँ॑ङ्गी॒र॒सस्याप्रा॑णत्प्रतिजग्र॒हुषः॑ । अ॒ष्टमम॑मि॑न्द्रियस्यापाँ॑क्रामत् ।।15।।
230406
तद्॒तेनै॒व प्रत्य॑गृह्णात् । तेन॒ वै सोँ॑ऽष्टमम॑मि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्त । अ॒ष्टमम॑मि॑न्द्रियस्या॒त्मन्नु॒पाध॑त्ते
। य ए॒वँव्वि॒द्वानप्रा॑णत्प्रतिगृ॒ह्णाति॑ ।
अथ॒ योऽवि॑द्वान्प्रतिगृ॒ह्णाति॑ । अ॒ष्टमम॑स्येन्द्रियस्याप॑ क्रामति । यद्वा इ॒दङ्किञ्च॑
। तथ्सर्व॑मु॒त्ता॒न ए॒वाङ्गी॑र॒सः प्रत्य॑गृह्णात् । तदे॑नं॒ प्रति॑गृहीत॒न्नाहि॑नत् ।
यत्किञ्च॑ प्रतिगृ॒ह्णीयात् । तथ्सर्व॑मु॒त्ता॒नस्त्वाँ॑ङ्गीर॒सः प्रति॑गृ॒ह्णात्वित्ये॒व प्रति॑गृ॒ह्णीयात्
। इ॒यव्वाँ उ॑त्ता॒न आँ॑ङ्गीर॒सः । अ॒नयै॒वैन॒त्प्रति॑ गृह्णाति । नैनꣳ॑
हिनस्ति ।।16 ।।
230400
तृती॑यमिन्द्रियस्यापाँ॑क्रामच्चतु॒र्थमि॑न्द्रियस्या॒त्मन्नु॒पाधत्ताश्वं॑ प्रतिगृ॒ह्णाति॑
ष॒ष्ठम॑स्येन्द्रियस्याप॑क्रामत्यष्ट॒मम॑मि॑न्द्रियस्यापाँ॑क्रामत्प्रतिगृ॒ह्णीयाच्चत्वारि॑ च ।।4।।
230501
तस्य॒वा अ॒ग्नेर्॒हिर॑ण्य॒ꣳ सोम॑स्य॒ वास॒स्तदे॒तेन॑ रु॒द्रस्य॒ गान्ताम॒तेन॒ वरु॑ण॒स्याश्वं॑
प्र॒जाप॑ते॒ः पुरु॑षं॒ मन॒ोस्तल्प॒न्तम॒तेनोँ॑त्ता॒नस्य॒ तदे॒तेनाप्रा॑ण॒द्यद्वै ।
अ॒र्धं तृती॑यमष्ट॒मं तच्च॑तु॒र्थं तां प॑ञ्च॒मꣳ ष॒ष्ठꣳ स॑प्त॒मन्तम् । तदे॒तेन॒ द्वे ताम॒तेनैकं॒ तम॒तेन॒ त्रीणि॒
तदे॒तेनैकँ॑म् ।।
ब्र॒ह्म॒वा॒दिनो॑ वदन्ति । यद्दश॑होतारस्स॒त्रमास॑त । केन॒ ते गृ॒हप॑तिनाऽऽर्ध्नुवन् । केन॑
प्र॒जा अ॑सृज॒न्तेति॑ । प्र॒जाप॑तिना॒ वै ते
गृ॒हप॑तिनाऽऽर्ध्नुवन् । तेन॑ प्र॒जा अ॑सृजन्त । यच्चतु॑र्होतारस्स॒त्रमास॑त । केन॒ ते गृ॒हप॑तिनाऽऽर्ध्नुवन्
। केनौष॑धीरसृज॒न्तेति॑ । सोमे॑न॒ वै ते
गृ॒हप॑तिनाऽऽर्ध्नुवन् ।।17।।
230502
तेनौष॑धीरसृजन्त । यत्पञ्च॑होतारस्स॒त्रमास॑त । केन॒ ते गृ॒हप॑तिनाऽऽर्ध्नुवन् ।
केनै॒भ्यो ल॒ोकेभ्योऽसु॑रा॒न्प्राणु॑दन्त । केनै॒षां
प॒शून॑वृञ्ज॒तेति॑ । अ॒ग्निना॒ वै ते गृ॒हप॑तिनाऽऽर्ध्नुवन् । तेनै॒भ्यो ल॒ोकेभ्योऽसु॑रा॒न्प्राणु॑दन्त
। तेनै॒षां प॒शून॑वृञ्जत । यथ्षड्ढो॑तारस्स॒त्रमास॑त । केन॒ ते
गृ॒हप॑तिनाऽऽर्ध्नुवन् ।।18।।

230503
केनर्तूनकल्पयन्तेति । धात्रा वै ते गृहपतिनाऽऽर्ध्नुवन् । तेनर्तूनकल्पयन्त । यत्सप्तहोतारस्सत्रमासत
। केन ते गृहपतिना
ऽऽर्ध्नुवन् । केन सुवरायन् । केनेमाल्लोँकान्थ्समतन्वन्निति । अर्यम्णा वै ते गृहपतिनाऽऽर्ध्नुवन्
। तेन सुवरायन् । तेनेमाल्लोँकान्थ्समतन्वन्निति ।।19।।
230504
एते वै देवा गृहपतयः । तान् य एवंविद्वान् । अप्यन्यस्य गार्हपते दीक्षते । अवान्तरमेव
सत्रिणामृध्नोति । यो वा
अर्यमणँव्वेद । दानकामा अस्मै प्रजा भवन्ति । यज्ञो वा अर्यमा । आर्यावसतिरिति
वै तमाहुर्यं प्रशꣳसन्ति । आर्यावसतिर्भवति । य एवँव्वेद ।।20।।
230505
यद्वा इदङ्किञ्च । तथ्सर्वञ्चतुर्होतारः । चतुर्होतृभ्योऽधि यज्ञो निर्मितः । स य एवंविद्वान्विवदेत
। अहमेव भूयो वेद ।
यश्चतुर्होतॄन् वेदेति । स ह्येव भूयो वेद । यश्चतुर्होतॄन् वेद । यो वै चतुर्होतृणाꣳ
होतॄन् वेद । सर्वासु प्रजास्वन्नमत्ति ।।21।।
230506 सर्वा दिशोऽभि जयति । प्रजापतिर्वै दशहोतृणाꣳ होता । सोमश्चतुर्होतृणाꣳ
होता । अग्निꣳ पञ्चहोतृणाꣳ होता । धाता
षड्ढोतृणाꣳ होता । अर्यमा सप्तहोतृणाꣳ होता । एते वै चतुर्होतृणाꣳ होतारः
। तान् य एवव्वेद । सर्वासु प्रजास्वन्नमत्ति । सर्वा दिशोऽभि जयति ।।22।।
230500
आर्ध्नुवन्नार्ध्नुवन्नित्येवव्वेँदात्ति सर्वा दिशोऽभि जयति ।।5।।
वै तेन सत्रङ्केन ।।
230601
प्रजापतिꣳ प्रजास्सृष्ट्वा व्यस्रꣳसत। स हृदयं भूतोऽशयत् । आत्मन् हा 3 इत्यह्वयत्
। आपꣳ प्रत्यशृण्वन् । ता अग्निहोत्रेणैव
यज्ञक्रतुनोप पर्यावर्तन्त । ताꣳ कुसिन्धमुपौहन् । तस्मादग्निहोत्रस्य यज्ञक्रतोः
। एक ऋत्विक् । चतुष्कृत्वोऽह्वयत् । अग्निर्वायुरादित्यश्चन्द्रमाः ।।23।।
230602
ते प्रत्यशृण्वन् । ते दर्शपूर्णमासाभ्यामेव यज्ञक्रतुनोप पर्यावर्तन्त । त उपौहश्चत्वार्यङ्गानि
। तस्माद्दर्शपूर्णमासयोर्यज्ञक्रतोः ।
चत्वार ऋत्विजः । पञ्चकृत्वोऽह्वयत् । पशवꣳ प्रत्यशृण्वन् । ते चातुर्मास्यैरेव

य॑ज्ञक्र॒तुनोप॑ प॒र्याव॑र्तन्त । त उपौ॑हँल्लोम॑ छ॒वीं मा॒ꣳसमस्थि॑ म॒ज्जान॑म् ।
तस्मा॑च्चातुर्मा॒स्याना॑ँय्यज्ञक्र॒तोः ।।24।।
230603
पञ्च॒र्त्विज॑ः । ष॒ट्कृत्वोऽह्व॑यत् । ऋ॒तव॒ः प्रत्य॑शृण्वन् । ते प॑शुब॒न्धेनै॒व य॑ज्ञक्र॒तुनोप॑
प॒र्याव॑र्तन्त । त उपौ॑ह॒न्थ्स्त॒ना॑वा॒ण्डौ
शि॒श्ञमवा॑ञ्चं प्रा॒णम् । तस्मा॑त्पशुब॒न्धस्य॑ यज्ञक्र॒तोः । षडृ॒त्विज॑ः । स॒प्तकृत्वोह्व॑यत्
। होत्रा॒ꣳ प्रत्य॑शृण्वन् । तास्सौ॒म्येनै॒वाध्व॒रेण॑ यज्ञक्र॒तुनोप॑
प॒र्याव॑र्तन्त ।।25।।
230604
ता उपौ॑हन्थ्स॒प्त शी॑र्॒ष॒ण्या॑न्प्रा॒णान् । तस्मा॑थ्सौ॒म्यस्या॑ध्व॒रस्य॑ यज्ञक्र॒तोः । स॒प्त
होत्रा॒ꣳ प्राची॒र्वष॑ट्कुर्वन्ति । द॒श॒कृत्वोऽह्व॑यत् ।
तप॒ꣳ प्रत्य॑शृणोत् । तत्कर्म॑णै॒व स॑व्वँथ्स॒रेण॒ सर्वै॑र्यज्ञक्र॒तुभि॒रुप॑ प॒र्याव॑र्तत
। तथ्सर्व॑मा॒त्मान॒मप॑रिवर्ग॒मुपौ॑हत् । तस्मा॑थ्सव्वँथ्स॒रे सर्वे॑
यज्ञक्र॒तवोऽव॑रुध्यन्ते । तस्मा॒द्दश॑होता॒ चतु॑र्॒होता । पञ्च॑होता॒ षड्ढो॑ता स॒प्तहो॑ता ।
एक॑होत्रे ब॒लिꣳ ह॑रन्ति । हर॑न्त्यस्मै प्र॒जा ब॒लिम् ।
ऐने॒मप्र॑तिख्यातङ्गच्छति । य ए॒वव्वेँद॑ ।।26।।
230600
च॒न्द्रमा॑श्चातुर्मा॒स्याना॑य्यँज्ञक्र॒तोर॑ध्व॒रेण॑ यज्ञक्र॒तुनोप॑ प॒र्याव॑र्तन्त स॒प्तहो॑ता च॒त्वारि॑ च ।।6।।
230701
प्र॒जाप॑ति॒ꣳ पुरु॑षमसृजत । सो॑ऽग्निर॑ब्रवीत् । मम॒ायमन्न॑म॒स्त्विति॑ । सो॑ऽबिभेत् । सर्व॒व्वैँ
मा॒ऽयं प्र ध॑क्ष्य॒तीति॑ । स ए॒ताꣳ
श्च॒तु॑र्॒होतॄनात्म॒स्पर॑णानपश्यत् । तान॑जुहोत् । तैर्वै॑ स आ॒त्मान॑मस्पृणोत् । यद॑ग्निहो॒त्रञ्जु॒होति॑
। एक॑होतारमे॒व तद्य॑ज्ञक्र॒तुमा॑प्नोत्यग्निहो॒त्रम् ।।27।।
230702
कुसि॑न्धञ्चात्मन॑स्स्पृणोति॑ । आ॒दि॒त्यस्य॑ च॒ सा॑युज्यङ्गच्छति । च॒तुरुन्न॑यति । चतु॑र्॒होतारमे॒व
तद्य॑ज्ञक्र॒तुमा॑प्नोति दर्॒शपू॒र्णमा॒सौ ।
च॒त्वारि॑ चा॒त्मनोऽङ्गा॑नि स्पृणोति॑ । आ॒दि॒त्यस्य॑ च॒ सायु॑ज्यङ्गच्छति । च॒तुरुन्न॑यति
। स॒मित्प॑ञ्च॒मी । पञ्च॑होतारमे॒व तद्य॑ज्ञक्र॒तुमा॑प्नोति चातुर्मा॒स्यानि॑ ।
लोम॑ छ॒वीं मा॒ꣳसमस्थि॑ म॒ज्जान॑म् ।।28।।
230703
तानि॑ चा॒त्मन॑स्स्पृणोति॑ । आ॒दि॒त्यस्य॑ च॒ सायु॑ज्यङ्गच्छति । च॒तुरुन्न॑यति । द्विर्जु॑होति

। षड्ढो॑तारमे॒व तद्य॑ज्ञक्र॒तुमा᳚प्नोति

पशुब॒न्धम् । स्तना॑व॒ाण्डौ शि॒श्ञमवा᳚ञ्चं प्र॒ाणम् । तानि॑ च॒ात्मन॑स्स्पृ॒णोति॑ । आ॒दि॒त्यस्य॑

च॒ सायु॑ज्यङ्गच्छति । च॒तुरुन्न॑यति । द्विर्जु॑होति ।।29।।

230704

स॒मिथ्स॑प्त॒ मी। स॒प्तहो॑तारमे॒व तद्य॑ज्ञक्र॒तुमा᳚प्नोति स॒ौम्यम॑ध्व॒रम् । स॒प्त

च॒ात्मन॑श्शीर्॒ष॒ण्या᳚न्प्र॒ाणान्थ्स्पृ॒णोति॑

। आ॒दि॒त्यस्य॑ च॒

सायु॑ज्यङ्गच्छति । च॒तुरुन्न॑यति । द्विर्जु॒होति॑ । द्विर्निमा᳚र्ष्टि । द्विᳲ प्राश्ना॑ति । दश॑होतारमे॒व

तद्य॑ज्ञक्र॒तुमा᳚प्नोति सव्वँ॑थ्स॒रम् । सर्व॑ञ्च॒ात्मान॒मप॑रिवर्ग

स्पृ॒णोति॑ । आ॒दि॒त्यस्य॑ च॒ सायु॑ज्यङ्गच्छति ।।30।।

230700

अ॒ग्नि॒हो॒त्रं म॒ज्ञान॒न्द्विर्जु॒हो॒त्यप॑रिवर्गस्पृ॒णोत्येक॑ञ्च ।।7।।

230801

प्र॒जाप॑तिरकामयत॒ प्रजा॑ये॒येति॑ । स तपो॑ऽतप्यत । सो᳚ऽन्तर्वा॑नभवत् । स हरि॑तश्श्य॒ावो॑ऽभवत् ।

तस्म॒ाथ्स्त्र्य॑न्तर्व॑त्नी ।

हरि॑णी स॒ती श्य॒ावा भ॑वति । स वि॒जाय॑मान॒ो गर्भे॑णाताम्यत् । स त॒ान्तᳲ कृ॒ष्णश्श्य॒ावो॑ऽभवत्

। तस्मा᳚त्त॒ान्तᳲ कृ॒ष्णश्श्य॒ावो भ॑वति ।

तस्यासु॑रे॒वाजी॑वत् ।।31।।

230802

तेनासु॒नाऽसु॑रानसृजत । तदसु॑राणामसु॒रत्वम् । य ए॒वमसु॑राणामसु॒रत्वव्वेँ॑द । असु॑मान॒ेव भ॑वति ।

नैन॒मसु॑र्जहाति ।

सोऽसु॑रान्थ्सृ॒ष्ट्वा पि॒तेवा॑मन्यत । तदनु॑ पि॒तॄन॑सृजत । तत्पि॑तृ॒णां पि॑तृ॒त्वम् । य ए॒वं

पि॑तृ॒णां पि॑तृ॒त्वव्वेँ॑द । पि॒तेवै॒व स्वाना᳚ं भवति ।।32।।

230803

यन्त्य॑स्य पि॒तर॒ो हव᳚म् । स पि॒तॄन्थ्सृ॒ष्ट्वाऽऽम॑नस्यत् । तदनु॑ मनु॒ष्या॑नसृजत । तन्म॑नु॒ष्या॑णां

मनुष्य॒त्वम् । य ए॒वं म॑नु॒ष्या॑णां

मनुष्य॒त्वव्वेँ॑द । म॒न॒स्व्ये॑व भ॑वति । नैन॒ं मनु॑र्जहाति । तस्मै॑ मनु॒ष्या᳚न्थ्ससृज॒ानाय॑

। दिवा॑ देव॒त्राऽभ॑वत् । तदनु॑ दे॒वान॑सृजत । तद्दे॒वाना᳚न्देव॒त्वम् ।

य ए॒वन्दे॒वाना᳚न्देव॒त्वव्वेँ॑द । दिवा॑ है॒वास्य॑ देव॒त्रा भ॑वति । तानि॒ वा ए॒तानि॑ च॒त्वार्यम्भा॑ꣳसि

। दे॒वा म॑नु॒ष्या᳚ᳲपि॒तरोऽसु॑राः । तेषु॒ सर्वे॒ष्वम्भ॒ो

नभ॑ इव भवति । य ए॒वँव्वेद॑ ।।33।।

230800
अ॒जी॒व॒थ्स्वानां᳚ भवति दे॒वान॑सृजत स॒प्त च॑ ।।8।।
230901
ब्र॒ह्म॒वा॒दिनो॑ वदन्ति । यो वा इ॒मव्वि॒द्यात् । यत॒ोऽयं पव॑ते । यद॑भि॒ पव॑ते । यद॑भि सं॒पव॑ते ।
सर्व॒मायु॑रियात् ।
न पु॒राऽऽयु॑ष॒ः प्र मी॑येत । प॒शु॒मान्थ्स्या॑त् । वि॒न्देत॑ प्र॒जाम् । यो वा इ॒मव्वेद॑ ।।34।।
230902
यत॒ोऽयं पव॑ते । यद॑भि॒ पव॑ते । यद॑भि सं॒पव॑ते । सर्व॒मायु॑रेति । न पु॒राऽऽयु॑ष॒ः प्र मी॑यते ।
प॒शु॒मान्भ॑वति । वि॒न्दते᳚
प्र॒जाम् । अ॒द्भ्यः॑पवते । अ॒पो॑ऽभि प॑वते । अ॒पो॑ऽभि संप॑वते ।।35।।
230903
अ॒स्याः प॑वते । इ॒माम॒भि प॑वते । इ॒माम॒भि संप॑वते । अ॒ग्नेः प॑वते । अ॒ग्निम॒भि प॑वते । अ॒ग्निम॒भि
सं प॑वते ।
अ॒न्तरि॑क्षात्पवते । अ॒न्तरि॑क्षम॒भि प॑वते । अ॒न्तरि॑क्षम॒भि सं प॑वते । आ॒दि॒त्यात्प॑वते ।।36।।
230904
आ॒दि॒त्यम॒भि प॑वते । आ॒दि॒त्यम॒भि सं प॑वते । द्योः प॑वते । दिव॑म॒भि प॑वते । दिव॑म॒भि सं प॑वते ।
दि॒ग्भ्यः प॑वते ।
दिश॒ोऽभि प॑वते । दिश॒ोऽभि संप॑वते । स यत्पु॒रस्ता॒द्वाति॑ । प्रा॒ण ए॒व भू॒त्वा पु॒रस्ता᳚द्वाति ।।37।।
230905
तस्मा᳚त्पु॒रस्ता॒द्वान्त᳚म् । सर्वा᳚ प्र॒जाः प्रति॑ नन्दन्ति । प्रा॒णो हि प्रि॒यः प्र॒जाना᳚म्
। प्रा॒ण इ॑व प्रि॒यः प्र॒जानां᳚ भवति । य
ए॒वँव्वेद॑ । स वा ए॒ष प्रा॒ण ए॒व । अथ॒ यद्द॑क्षिण॒तो वाति॑ । मा॒त॒रिश्वै॒व भू॒त्वा द॑क्षिण॒तो
वा॑ति । तस्मा᳚द्दक्षिण॒तो वान्त॑व्वि॒द्यात् । सर्वा॒ दिश॒
आवा॑ति ।।38।।
230906
सर्वा॒ दिशोऽनु॒ वि वा॑ति । सर्वा॒ दिशोऽनु॒ सव्वा᳚तीति॑ । स वा ए॒ष मा॑त॒रिश्वै॒व । अथ॒ यत्प॒श्चाद्वाति॑
। पव॑मान ए॒व भू॒त्वा
प॒श्चाद्वा॑ति । पू॒तम॑स्मा॒ आह॑रन्ति । पू॒तमु॒प॑हरन्ति । पू॒तम॑श्नाति । य ए॒वव्वेद॑ । स वा ए॒ष पव॑मान
ए॒व ।।39।।
230907
अथ॒ यदु॑त्तर॒तो वाति॑ । स॒वि॒तैव भू॒त्वोत्त॑र॒तो वा॑ति । स॒वि॒तेव॒ स्वानां᳚ भवति । य ए॒वव्वेद॑ । स वा
ए॒ष स॑वि॒तैव । ते य

एनं पुरस्तादायन्तमुपवदन्ति । य एवास्य पुरस्तात्पाप्मानः । ताःस्तेऽप घ्नन्ति
। पुरस्तादितरान्पाप्मनस्सचन्ते । अथ य एनन्दक्षिणत
आयन्तमुपवदन्ति ।।40।।
230908
य एवास्य दक्षिणतः पाप्मानः । ताःस्तेऽप घ्नन्ति । दक्षिणत इतरान्पाप्मनस्सचन्ते
। अथ य एनं पश्चादायन्तमुप वदन्ति ।
य एवास्य पश्चात्पाप्मानः । ताःस्तेऽप घ्नन्ति । पश्चादितरान्पाप्मनस्सचन्ते । अथ
य एनमुत्तरत आयन्तमुप वदन्ति । य एवास्योत्तरतः पाप्मानः ।
ताःस्तेऽप घ्नन्ति ।।41।।
230909
उत्तरत इतरान्पाप्मनस्सचन्ते । तस्मादेवव्विद्वान् । वीव नृत्येत् । प्रेव चलेत् । व्यस्येवाख्यौ भाषेत
। मण्टयेदिव ।
क्राथयेदिव । शृङ्गायेतेव । उत मोप वदेयुः । उत मे पाप्मानमप हन्युरिति । स
यान्दिशःं सनिमेष्यन्थ्स्यात् । यदा तान्दिशव्वाँतो वायात् ।
अथ प्रवेयात् । प्र वा धावयेत् । सातमेव रदितव्व्यूँढङ्गन्धमभि प्रच्यवते । आऽस्य
तञ्जनपदं पूर्वा कीर्तिर्गच्छति । दानकामा अस्मै प्रजा भवन्ति ।
य एवँव्वेद ।।42।।
230900
वेद सं पवत आदित्यात्पवते वात्या वात्येष पवमान एव दक्षिणत आयन्तमुप वदन्त्युत्तरतः
पाप्मानस्ता स्तेप घ्नन्तीत्यष्टौ च ।।9।।
231001
प्रजापतिस्सोमः राजानमसृजत । तन्त्रयो वेदा अन्वसृज्यन्त । तान् हस्तेऽकुरुत । अथ ह सीता
सावित्री । सोमः
राजानञ्चकमे । श्रद्धामु स चकमे । साऽऽह पितरं प्रजापतिमुपससार । तः होवाच । नमस्ते अस्तु
भगवः । उप त्वाऽयानि ।।43।।
231002
प्र त्वा पद्ये । सोमव्वैँ राजानङ्कामये । श्रद्धामु स कामयत इति । तस्या
उहस्थागरमलङ्कारङ्कल्पयित्वा । दशहोतारं
पुरस्ताद्व्याख्याय । चतुर्होतारन्दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः
। सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य ।।44।।
231003

आऽस्यार्धव्वँव्राज । ताꣳ होदीख्ष्योवाच । उप मा वर्तस्वेति । तꣳ होवाच । भोगन्तु म आचख्ष्व
। एतन्म आचख्ष्व ।
यत्ते प्राणाविति । तस्या उह त्रीन् वेदान्प्रददौ । तस्मादुह स्त्रियो भोगमेव हारयन्ते
। स यꣳ कामयेत प्रियस्स्यामिति ।।45।।
231004
यव्वाँ कामयेत प्रियस्स्यादिति । तस्मा एतस्थागरमलङ्कारङ्कल्पयित्वा । दशहोतारं
पुरस्ताँद्याख्वाय । चतुर्होतारन्दख्षिणतः ।
पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । संभारैश्च पत्निभिश्च
मुखेऽलङ्कृत्य । आस्यार्धव्व्रँजेत् । प्रियो हैव भवति ।।46।।
231000
अयान्यलङ्कृत्य स्यामिति भवति ।।10।।
231101
ब्रह्माँत्मन्वदसृजत । तदकामयत । समात्मना पद्येयेति । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै दशमꣳ
हूतꣳ प्रत्यशृणोत् । स
दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तव्वाँ एतन्दशहूतꣳ सन्तम् । दशहोतेत्याचख्षते
परोख्षेण । परोख्षप्रिया इव हि देवाः ।।47।।
231102
आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै सप्तमꣳ हूतꣳ प्रत्यशृणोत् । स सप्तहूतोऽभवत् । सप्तहूतो ह वै
नामैषः । तव्वाँ एतꣳ
सप्तहूतꣳ सन्तम् । सप्तहोतेत्याचख्षते परोख्षेण । परोख्षप्रिया इव हि देवाः
। आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै षष्ठꣳ हूतꣳ प्रत्यशृणोत् ।
स षड्ढूतोऽभवत् ।। 48।।
231103
षड्ढूतो ह वै नामैषः । तव्वाँ एतꣳ षड्ढूतꣳ सन्तम् । षड्ढोतेत्याचख्षते परोख्षेण । परोख्षप्रिया इव हि
देवाः ।
आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै पञ्चमꣳ हूतꣳ प्रत्यशृणोत् । स पञ्चहूतोऽभवत् । पञ्चहूतो
ह वै नामैषः । तव्वाँ एतं पञ्चहूतꣳ सन्तम् ।
पञ्चहोतेत्याचख्षते परोख्षेण ।।49।।
231104
परोख्षप्रिया इव हि देवाः । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै चतुर्थꣳ हूतꣳ प्रत्यशृणोत्
। स चतुर्हूतोऽभवत् । चतुर्हूतो

ह॒ वै नाम॒ैषः । तव्वाँ ए॒तञ्चतु॑र्हू॒त॒ꣳ सन्त॑म् । चतु॑र्हो॒तेत्याच॑क्षते प॒रोक्षे॑ण । प॒रोक्ष॑प्रिया इव॒ हि दे॒वाः । तम॑ब्रवीत् ।

त्वव्वैँ मे॒ नेदि॑ष्ठꣳ हू॒तꣳ प्रत्य॑श्रौषीः । त्वयै॑नानाख्या॒तार॒ इति॑ । तस्मा॒न्नु है॑ना॒ꣳ

श्चतु॑र्होतार॒ इत्याच॑क्षते । तस्मा॑च्छुश्रू॒षुꣳ

पु॒त्राणा॒ꣳ हृद्य॑तमः । नेदि॑ष्ठो हृद्य॑तमः । नेदि॑ष्ठो ब्रह्म॑णो भवति । य ए॒वँव्वेद॑ ।।50।।

231100

दे॒वाष्षड्ढू॑तोऽभव॒त्पञ्च॑हो॒तेत्याच॑क्षते प॒रोक्षे॑णाश्रौषी॒ष्षट्च॑।।11।।

230000

ब्र॒ह्म॒वा॒दिन॒ꣳ किन्दक्षि॑णा॒य्यौँ वा अवि॑द्वान्तस्य॒ वै ब्र॑ह्मवा॒दिनो॒ यद्दश॑होतारꣳ

प्र॒जाप॑ति॒र्व्यी॑स्रं प्र॒जाप॑ति॒ꣳ पुरु॑षं प्र॒जाप॑तिरकामयत॒

स तप॒स्सो॑ऽन्तर्वा॑न्ब्रह्मवा॒दिनो॒ यो वा इ॒मव्वि॒द्यात्प्र॒जाप॑ति॒स्सोम॒ꣳ राजा॑न॒ं ब्रह्मा॑त्म॒न्वदेका॑दश ।।11।।

ब्र॒ह्म॒वा॒दिन॒स्तस्य॒ वा अ॒ग्नेर्यद्वा इ॒दङ्किञ्च॑ प्र॒जाप॑तिरकामयत॒ य ए॒वास्य॑ दक्षिण॒तꣳ प॑ञ्चा॒शत् ।।50।।

ब्र॒ह्म॒वा॒दिनो॒ य ए॒वव्वेँद॑ ।।

हरि॑ः ओम् ।। श्रीकृष्णार्पणमस्तु

तृतीयप्रपाठकस्समाप्तः

240000
तैत्तिरीयब्राह्मणे द्वितीयाष्टके चतुर्थप्रपाठक प्रारम्भः । हरिः ओम् ।।
240101
जुष्टो॒ दमू॑ना॒ अति॑थिर्दुरो॒णे । इ॒मन्नो॑ य॒ज्ञमुप॑ याहि वि॒द्वान् । विश्वा॑ अग्नेऽभि॒युजो॑
वि॒हत्य॑ । श॒त्रू॒य॒तामा भ॑रा॒ भोज॑नानि ।
अग्ने॒ शर्ध॑ मह॒ते सौभ॑गाय । तव॑ द्यु॒म्नान्यु॑त्त॒मानि॑ सन्तु । सञ्जा॑स्प॒त्यꣳ सु॒यम॒मा
कृ॑णुष्व । श॒त्रू॒य॒ताम॒भि ति॑ष्ठा॒ महाꣳ॑ सि । अग्ने॒ यो नो॒ऽभितो॒ जन॑ः ।
वृको॒ वारो॒ जिघाꣳ॑सति ।।1।।
240102
ताꣳस्त्वव्वृँ॑त्रहञ्जहि । वस्व॒स्मभ्य॒मा भ॑र । अग्ने॒ यो नो॑ऽभि॒दास॑ति । स॒मा॒नो यश्च॒ निष्ट्य॑ः । इ॒ध्मस्ये॑व
प्र॒ख्षाय॑तः । मा
तस्योच्छे॑षि॒ किञ्च॒न । त्वमि॑न्द्राभि॒भूर॑सि । दे॒वो वि॒ज्ञात॑वीर्यः । वृ॒त्र॒हा पु॑रु॒चेत॑नः
। अप॒ प्राच॑ इन्द्र॒ विश्वाꣳ॑ अ॒मित्रान् ।।2।।
240103 अपापा॑चो अभिभूते नुदस्व । अपोदी॑चो॒ अप॑शूराध॒रा च॑ ऊ॒रौ । यथा॒ तव॒ शर्म॒न्मदे॑म ।
तमिन्द्र॑व्वाँजयामसि । म॒हे वृ॒त्राय॒
हन्त॑वे । स वृषा॑ वृष॒भो भु॑वत् । यु॒जे रथ॑ङ्ग॒वेष॑ण॒ꣳ हरि॑भ्याम् । उप॒ ब्रह्मा॑णि जुजु॒षा॒णम॑स्थुः
। विबा॑धिष्टा॒स्य रोद॑सी महि॒त्वा । इन्द्रो॑ वृ॒त्राण्य॑प्र॒ती
ज॑घ॒न्वान् ।।3।।
240104
ह॒व्य॒वाह॑मभिमाति॒षाह॑म् । र॒ख्षो॒हणं॒ पृत॑नासु जि॒ष्णुम् । ज्योति॑ष्मन्त॒न्दीद्य॑तं॒ पुर॑न्धिम्
। अ॒ग्निꣳ स्वि॑ष्ट॒कृत॒मा हु॑वेम ।
स्वि॑ष्टमग्ने अ॒भि तत्पृ॑णाहि । विश्वा॑ दे॒व॒ पृत॑ना अ॒भि ष्य । उ॒रुन्न॒ः पन्थां॑ प्र॒दि॒शन्विभा॑हि
। ज्योति॑ष्मद्धेह्य॒जर॑न्न॒ आयु॑ः । त्वाम॑ग्ने ह॒विष्म॑न्तः । दे॒वं
मर्ता॑स ईडते ।।4।।
240105
मन्ये॑ त्वा जा॒तवे॑दसम् । स ह॒व्या व॑ख्ष्यानु॒षक् । विश्वा॑नि नो दु॒र्गहा॑ जातवेदः । सिन्धु॒न्न ना॒वा
दु॑रि॒ताऽति॑पर्षि । अग्ने॑
अत्रि॒वन्मन॑सा गृणा॒नः । अ॒स्माकं॑ बोध्यवि॒ता त॒नूना॑म् । पू॒षा गा अन्वे॑तु नः । पू॒षा र॑ख्ष॒त्वर्व॑तः
। पू॒षा वाजꣳ॑ सनोतु नः । पू॒षेमा आशा॒
अनु॑वेद॒ सर्वा॑ः ।।5।।
240106

सो अ॒स्माꣳ अभ॑यतमेन नेषत् । स्व॒स्ति॒दा अघृ॑णि॒स्सर्व॑वीरः । अप्र॑युच्छन्पु॒र ए॑तु प्रज॒ानन्
। त्वम॑ग्ने सु॒प्रथा॑ असि । जुष्टो॒ होत॒ा
वरे॑ण्यः । त्वया॑ य॒ज्ञव्वित॑न्वते । अ॒ग्नी रख्खाꣳ सि सेधति । शु॒क्रशो॑चि॒रम॑र्त्यः । शुचि॑꣯
पाव॒क ईड्यः॑ । अग्ने॒ रख्खा॑ णो॒ अꣳह॑सः ।।6।।
240107
प्रति॑ष्म देव॒ रीष॑तः । तपि॑ष्ठै॒रजरो॑ दह । अग्ने॒ हꣳसि॒ न्य॑त्रिण॑म् । दीद्य॒न्मर्त्ये॒ष्वा । स्वे ख्षये॑ शुचिव्रत
। आ वा॑त वाहि
भेष॒जम् । वि वा॑त वाहि॒ यद्रपः॑ । त्वꣳ हि वि॒श्वभे॑षजः । दे॒वाना॑न्दू॒त ईय॑से । द्वावि॒मौ वातौ॑ वातः
।।7।।
240108
आ सिन्धो॒रा प॑रा॒वतः॑ । दख्षं॑ मे अ॒न्य आ॒वातु॒ । परा॒न्यो वा॑तु॒ यद्रपः॑ । यद॒दो वा॑त ते गृ॒हे ।
अ॒मृत॑स्य नि॒धिर्हि॒तः ।
ततो॑ नो देहि जी॒वसे॑ । ततो॑ नो धेहि भेष॒जम् । ततो॑ नो॒ मह॒ आव॑ह । वात॒ आवा॑तु भेष॒जम् ।
श॒म्भूर्म॑यो॒भूर्नो॑ हृ॒दे ।।8।।
240109
प्र ण॒ आयूꣳ॑षि तारिषत् । त्वम॑ग्ने अ॒यासि॑ । अ॒या सन्मन॑सा हि॒तः । अ॒या सन् ह॒व्यमू॑हिषे । अ॒या
नो॑ धेहि भेष॒जम् ।
इ॒ष्टो अ॒ग्निरा॑हुतः । स्वाहा॑कृत꣯ पिपर्तु नः । स्व॒गा दे॒वेभ्य॑ इ॒दन्नमः॑ । कामो॑ भू॒तस्य॒ भव्य॑स्य ।
स॒म्राडेको॒ विरा॑जति ।।9।।
240110
स इ॒दं प्रति॑ पप्रथे । ऋ॒तूनुत्सृ॑जते व॒शी । काम॒स्तदग्रे॒ सम॑वर्त॒ताधि॑ । मन॑सो॒ रेत॑꣯ प्रथ॒मय्यँदासी॑त् ।
स॒तो बन्धु॒मस॑ति
निर॑विन्दन् । हृ॒दि प्र॒तीष्या॑ क॒वयो॑ मन॒ीषा । त्वया॑ मन्यो स॒रथ॑मारु॒जन्तः॑ । हर्॒ष॑माणासो
धृष॒ता म॑रुत्वः । ति॒ग्मेष॑व॒ आयु॑धा स॒ꣳशिशा॑नाः । उप॒
प्रय॑न्ति॒ नरो॑ अ॒ग्निरू॑पाः ।।10।।
240111
म॒न्युर्भगो॑ म॒न्युरे॒वास॑ दे॒वः । म॒न्युर॒होता॒ वरु॑णो वि॒श्ववे॑दाः । म॒न्युव्विश॑ ईडते
देव॒यन्तीः॑ । पा॒हि नो॑ मन्यो॒ तप॑सा॒ श्रमे॑ण ।
त्वम॑ग्ने व्र॒त॒भृच्छुचि॑ः । दे॒वाꣳ आसा॑दया इ॒ह । अग्ने॑ ह॒व्याय॒ वोढ॑वे । व्र॒तानु॒बिभ्र॑द्व्रत॒पा
अदा॑भ्यः । यजा॑ नो दे॒वाꣳ अ॒जर॑स्सुवीरः॑ । दध॒द्रत्ना॑नि
सुविद॒ानो अ॑ग्ने । गो॒पा॒य नो॑ जी॒वसे॑ जातवेदः ।।11।।

240100
जिघांꣳसत्यमित्राँञ्जघन्वानीडते सर्वा अꣳहसो वातो हृदे राजत्यग्निरूपास्सुविदानो अग्न एकञ्च।।1।।
240201
चक्षुषो हेते मनसो हेते । वाचो हेते ब्रह्मणो हेते । यो माऽघायुरभिदासति । तमग्ने
मेन्या मेनिङ्कृणु । यो मा चक्षुषा यो
मनसा । यो वाचा ब्रह्मणाऽघायुरभिदासति । तयाँऽग्ने त्वं मेन्या । अमुममेनिङ्कृणु
। यत्किञ्चासौ मनसा यच्च वाचा । यज्ञैर्जुहोति यजुषा हविर्भिः ।।12।।
240202
तन्मृत्युर्निरृत्या सँव्विदानः । पुरादिष्टादाहुतीरस्य हन्तु । यातुधाना निरृतिरादुरक्षः
। ते अस्य घ्नन्त्वनृतेन सत्यम् ।
इन्द्रेषिता आज्यमस्य मथ्नन्तु । मा तथ्समृद्धि यदसौ करोति । हन्मि तेऽहङ्कृतꣳ हविः
। यो मे घोरमचीकृतः । अपाँञ्चौ त उभौ बाहू । अप
नह्याम्यास्यँम् ।।13।।
240203
अप नह्यामि ते बाहू । अप नह्याम्यास्यँम् । अग्नेर्देवस्य ब्रह्मणा । सर्वन्तेऽवधिषङ्कृतम्
। पुराऽमुष्य वषट्कारात् । यज्ञन्देवेषु
नस्कृधि । स्विष्टमस्माकं भूयात् । माऽस्मान्प्रापन्नरातयः । अन्ति दूरे सतो अग्ने ।
भ्रातृव्यस्याभिदासतः ।।14।।
240204
वषट्कारेण वज्रेण । कृत्याꣳ हन्मि कृतामहम् । यो मा नक्तन्दिवा सायम् । प्रातश्चाह्नो
निपीयति । अद्या तमिन्द्र वज्रेण ।
भातृव्यं पादयामसि । इन्द्रस्य गृहोसि तन्त्वा । प्रपद्ये सगुस्साश्वः । सह यन्मे
अस्ति तेन । ईडे अग्निँव्विपश्चितँम् ।।15।।
240205
गिरा यज्ञस्य साधनम् । श्रुष्टीवानन्धितावानम् । अग्ने शकेम ते वयम् । यमन्देवस्य
वाजिनः । अति द्वेषाꣳसि तरेम ।
अवतं मा समनसौ समोकसौ । सचेतसौ सरेतसौ । उभौ मामवतञ्जातवेदसौ । शिवौ भवतमद्य नः
। स्वयङ्कृण्वानस्सुगमप्रयावम् ।।16।।
240206
तिग्मशृङ्गो वृषभश्शोशुचानः । प्रत्नꣳ सधस्थमनु पश्यमानः । आतन्तुमग्निर्दिव्यन्ततान
। त्वन्नस्तन्तुरुत सेतुरग्ने । त्वं पन्था
भवसि देवयानः । त्वयाँऽग्ने पृष्ठव्वँयमारुहेम । अथा देवैस्सधमादं मदेम । उदुत्तमं

मुमुग्धि नः । विपाशं मध्यमञ्चृत । अवाधमानि जीवसे ।।17।।
240207
वयं सोम व्रते तव । मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहि । इन्द्राणी देवी
सुभगा सुपत्नी । उदंशेन पतिविद्ये जिगाय। त्रिंशदस्या जघनयोजनानि । उपस्थ
इन्द्र स्थविरं बिभर्ति । सेना ह नाम पृथिवी धनञ्जया । विश्वव्यचा अदितिस्सूर्यत्वक्
। इन्द्राणी देवी
प्रासहा ददाना ।।18।।
240208
सा नो देवी सुहवा शर्म यच्छतु । आत्वाऽहार्षमन्तरभूः । ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा
वाञ्छन्तु । मा
त्वद्राष्ट्रमधिभ्रशत् । ध्रुवा द्यौर्ध्रुवा पृथिवी । ध्रुवव्विश्वमिदञ्जगत् । ध्रुवा
ह पर्वता इमे । ध्रुवो राजा विशामयम् । इहैवैधि मा व्यथिष्ठाः ।।19।।
240209
पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठ । इह राष्ट्रमु धारय । अभितिष्ठ पृतन्यतः
। अधरे सन्तु शत्रवः । इन्द्र इव
वृत्रहा तिष्ठ । अपः क्षेत्राणि सञ्जयन् । इन्द्र एणमदीधरत् । ध्रुवन्ध्रुवेण हविषा
। तस्मै देवा अधिब्रवन् । अयञ्च ब्रह्मणस्पतिः ।।20।।
240200
हविर्भिरास्यमभि दासतो विपश्चितमप्रयावञ्जीवसे ददाना व्यथिष्ठा ब्रवन्नेकञ्च ।।2।।
240301
जुष्टी नरो ब्रह्मणा वः पितृणाम् । अक्षमव्ययन्न किलारिषाथ । यच्छक्वरीषु बृहता रवेण । इन्द्रे
शुष्ममदधाथा वसिष्ठाः ।
पावका नस्सरस्वती । वाजेभिर्वाजिनीवती । यज्ञव्वँष्टु धिया वसुः । सरस्वत्यभि
नो नेषि वस्यः । मा पस्फरीः पयसा मा न आधक् । जुषस्व
न स्सख्या वेश्या च ।।21।।
240302
मा त्वक्षेत्राण्यरणानि गन्म । वृञ्जे हविर्नमसा बर्हिरग्नौ । अयामि स्रुग्घृतवती
सुवृक्तिः । अम्यक्षि सद्म सदने पृथिव्याः ।
अश्रायि यज्ञस्सूर्ये न चक्षुः । इहार्वाञ्चमतिह्वये । इन्द्रञ्जैत्राय जेतवे । अस्माकमस्तु
केवलः । अर्वाञ्चमिन्द्रममुतो हवामहे । यो
गोजिद्धनजिदश्वजिद्यः ।।22।।
240303

इ॒मन्नो॑ य॒ज्ञँव्विँ॑ह॒वे जु॑षस्व । अ॒स्य कु॑र्मो हरिवो मे॒दिन॑न्त्वा । अस॑मृष्टो जायसे मा॒तृवोश्शुचि॑ः

। म॒न्द्रꣴ क॒विरुद॑तिष्ठो

विव॑स्वतः । घृ॒तेन॑ त्वा वर्धयन्नग्न आहुत । धू॒मस्ते॑ के॒तुर॑भवद्दि॒वि श्रि॒तः । अ॒ग्निरग्रे᳚

प्रथ॒मो दे॒वता॑नाम् । सय्याँ॑तानामु॒त्त॒मो विष्णु॑रासीत् ।

यज॑मानाय परि॒गृह्य॑ दे॒वान् । दी॒ख्षये॒दꣳ ह॒विराग॑च्छतन्नः ।।23।।

240304

अ॒ग्निश्च॑ विष्णो॒ तप॑ उत्त॒मं म॒हः । दी॒ख्षा॒पा॒लेभ्यो॒ऽवन॑त॒ꣳ हि श॑क्रा । विश्वै᳚र्दे॒वैर्य॒ज्ञियै᳚स्सँव्विदा॒नौ

। दी॒ख्षाम॒स्मै यज॑मानाय

धत्तम् । प्र तद्विष्णु॑स्स्तवते वी॒र्या॑य । मृ॒गो न भी॒मꣴ कु॑च॒रो गि॑रि॒ष्ठाः । यस्यो॒रुषु॑

त्रि॒षु वि॒क्रम॑णेषु । अधि॑ख्षि॒यन्ति॒ भुव॑नानि॒ विश्वा᳚ । नूमतो᳚

दयते सनि॒ष्यन् यः । विष्ण॑व उरुगा॒याय॒ दाश॑त् ।।24।।

240305

प्रयस्स॒त्रा च॒ा मन॑स॒ा यजा॑तै । ए॒तावन्त॒न्नर्य॑म॒ा विवा॑सात् । विच॑क्रमे पृथि॒वीमे॒ष

ए॒ताम् । ख्षेत्रा॑य॒ विष्णु॒र्मनु॑षे दश॒स्यन् ।

ध्रु॒वासो॑ अस्य की॒रयो॒ जना॑सः । उ॒रु॒ख्षि॒तिꣳ सु॒जनि॑मा चकार । त्रिर्दे॒वꣴ पृ॑थि॒वीमे॒ष

ए॒ताम् । विच॑क्रमे श॒तर्च॑सं महि॒त्वा । प्रविष्णु॑रस्तु

त॒वस॒स्तवी॑यान् । त्वे॒ष ह्य॑स्य॒ स्थवि॑रस्य॒ नाम॑ ।।25।।

240306

होता॑रञ्चि॒त्रर॑थमध्व॒रस्य॑ । य॒ज्ञस्य॑ यज्ञस्य के॒तुꣳ रुश॑न्तम् । प्रत्य॑र्धिन्दे॒वस्य॑

देवस्य म॒ह्ना । श्रि॒या त्व॑ग्निमति॑थि॒ञ्जना॑नाम् । आ

न॒ो विश्वा॑भिरू॒तिभि॑स्स॒जोषा॑ः । ब्रह्म॑ जुषा॒णो ह॑र्यश्व याहि । वरी॑वृज॒थ्स्थवि॑रेभिस्सुशिप्र

। अ॒स्मे दध॒द्वृष॑ण॒ꣳ शुष्म॑मिन्द्र । इन्द्र॑स्सुव॒र्षा ज॒नय॒न्नहा॑नि ।

जि॒गायो॒शिग्भि॒ꣴ पृत॑ना अभि॒ श्रीः ।।26।।

240307

प्रा रो॑चय॒न्मन॑वे के॒तुमह्ना᳚म् । अवि॑न्द॒ज्ज्योति॑र्बृह॒ते रणा॑य । अश्वि॑न॒ावव॑से॒ निह्व॑ये

वाम् । आ नू॒नय्याँ॑तꣳ सुकृ॒ताय॑ विप्रा ।

प्रा॒त॒र्यु॒क्तेन॑ सु॒वृ॒ता रथे॑न । उ॒पाग॑च्छत॒मव॒साग॑तन्नः । अ॒वि॒ष्टन्धी॒ष्वश्वि॑ना

न आ॒सु । प्र॒जाव॒द्रेत॒ो अह्र॑यन्नो अस्तु । आ वा᳚न्त॒ोके तन॑ये॒ तूतु॑जानाः ।

सु॒रत्ना॑सो दे॒ववी॑तिङ्गमेम ।।27।।

240308

त्वꣳ सो॑म॒ क्रतु॑भिस्सु॒क्रतु॑र्भूः । त्वदन्दख्षै᳚स्सु॒दख्षो॑ वि॒श्ववे॑दाः । त्वव्वृँषा॑

वृष॒त्वेभि॑र्महि॒त्वा । द्यु॒म्नेभि॑र्द्यु॒म्न्य॑भवो नृचक्षाः॑ ।
अषा॑ढय्युँ॒थ्सु पृत॑नासु॒ पप्रिँ॑म् । सु॒व॒र्षा॒म॒प्स्वाव्वृँ॒जन॑स्य गो॒पाम् । भ॒रे॒षु॒जाः॑
सु॑क्षि॒तिः॑ सु॒श्रव॑सम् । जय॑न्त॒न्त्वामनु॑मदेम सोम । भवा॑ मि॒त्रो
न शेव्यो॑ घृ॒तासु॑तिः । विभू॑तद्युम्न एव॒ या उ॑ स॒प्रथाः॑ ।।28।।
240309
अधा॑ ते विष्णो वि॒दुषा॑ चि॒दर्ध्यः॑ । स्तोमो॑ य॒ज्ञस्य॒ राध्यो॑ ह॒विष्म॑तः । यः॑ पू॒र्व्याय॑
वे॒धसे॒ नवी॑यसे । सु॒मज्जा॑नये॒ विष्ण॑वे॒
दद॑शति । यो जा॒तम॒स्य म॑ह॒तो म॒हि ब्रवा॑त् । सेदु॒ श्रवो॑भि॒र्यु॒ज्य॑ञ्चि॒द॒भ्य॑सत् । तमु॑
स्तोतारः॑ पू॒र्व्यय्यँथा॑ वि॒द ऋ॒तस्य॑ । गर्भ॑ँ ह॒विषा॑ पिपर्तन ।
आऽस्य॑ जा॒नन्तो॒ नाम॑ चिद्विवक्तन । बृ॒हत्ते॑ विष्णो सुम॒तिं भ॑जामहे ।।29।।
240310
इ॒मा धा॒ना घृ॒त॒स्नुवः॑ । हरी॑ इ॒होप॑वक्षतः । इन्द्र॑ँ सु॒खत॑मे॒ रथे॑ । ए॒ष ब्र॒ह्मा
प्रते॑मु॒हे । वि॒दथे॑ शँ॑सिषँ॒ हरी॑ । य ऋ॒त्वियः॑
प्रते॑वन्वे । व॒नुषो॑ हर्य॒तं मदँ॑म् । इन्द्रो॒ नाम॑ घृ॒तन्नयः । हरि॑भि॒श्चारु॒ सेच॑ते । श्रु॒तो ग॒ण आ त्वा॑
विशन्तु ।।30।।
240311
हरि॑वर्पस॒ङ्गिरः॑ । आच॑र्षणि॒प्रा वृ॑ष॒भो जना॑नाम् । राजा॑ कृ॒ष्टीनां पु॑रुहू॒त इन्द्रः॑
। स्तु॒तश्र॑व॒स्यन्न॒व॒सोप॑म॒द्रिक् । यु॒क्त्वा हरी॒
वृष॒णाया॑ह्य॒र्वाङ् । प्रयथ्सि॒न्धव॑ः प्रस॒वय्यँ॑दायन् । आप॑स्समु॒द्रँ॑ र॒थ्ये॑व जग्मुः । अत॑श्चि॒दिन्द्र॒स्सद॑सो॒
वरी॑यान् । यदी॑ँ॒ सोमः॑ पृ॒णति॑ दु॒ग्धो अँ॒शुः ।
ह्वया॑मसि॒ त्वेन्द्र॑ या॒ह्य॒र्वाङ् ।।31।।
240312 अर॑न्ते॒ सोम॑स्त॒नुवे॑ भवाति । शत॑क्रतो मा॒दय॑स्वा सु॒तेषु॑ । प्रास्माँ॑ अव॒ पृत॑नासु
प्रयु॒थ्सु । इन्द्रा॑य॒ सोमाः॑ प्र॒दिवो॒ विदा॑नाः ।
ऋ॒भुर्येभि॒र्वृष॑पर्वा॒ विहा॑याः । प्र॒य॒म्यमा॑णा॒न्प्रति॒ षू गृ॑भाय । इन्द्र॒ पिब॒ वृष॑धूतस्य॒
वृष्णः॑ । अहे॑डमान॒ उप॑याहि य॒ज्ञम् । तुभ्यं॑ पवन्त॒ इन्द॑वस्सु॒तासः॑ ।
गावो॒ न व॑ज्रिन्थ्स्व॒मोको॒ अच्छ॑ ।।32।।
240313
इन्द्रा॑गहि प्रथ॒मो य॒ज्ञिया॑नाम् । या ते॑ का॒कुथ्सुकृ॑ता॒ या वरि॑ष्ठा । यया॒ शश्व॒त्पिब॑सि॒ मध्व॑ ऊ॒र्मिम् ।
तया॑ पाहि॒ प्र ते॑
अध्व॒र्युर॑स्थात् । सन्ते॒ वज्रो॑ वर्तता॒मिन्द्र ग॒व्युः । प्रा॒त॒र्यु॒जा विबो॑धय । अश्वि॑ना॒वेह
ग॑च्छतम् । अ॒स्य सोम॑स्य पी॒तये॑ । प्रा॒त॒र्यावा॑णा प्रथ॒मा

यजध्वम् । पुरा गृध्राद‍ररुषः पिबाथः । प्रातर्हि यज्ञमश्विना दधाते । प्रशꣳसन्ति
कवयः पूर्वभाजः । प्रातर्यजध्वमश्विना हिनोत । न सायमस्ति
देवया अजुष्टम् । उतान्यो अस्मद्यजते विचायः । पूर्वः पूर्वो यजमानो वनीयान् ।।33।।
240300
चाश्वजिद्यो गच्छतन्नो दाशन्नामाभि श्रीर्गमेम सप्रथा भजामहे विशन्तु याह्यर्वाङच्छ पिबाथष्ट्च
।।3।।
240401 नक्तञ्जाताऽस्योषधे । रामे कृष्णे असिक्नि च । इदꣳ रजनि रजय । किलासं पलितञ्च यत्
। किलासञ्च पलितञ्च ।
निरितो नाशया पृषत् । आ नस्स्वो अश्ञुताव्वर्णः । परा श्वेतानि पातय । असितन्ते निलयनम् ।
आस्थानमसितन्तव ।।34।।
240402
असिक्नियस्योषधे । निरितो नाशया पृषत् । अस्थिजस्य किलासस्य । तनूजस्य च यत्त्वचि ।
कृत्यया कृतस्य ब्रह्मणा ।
लख्म श्वेतमनीनशम् । सरूपा नाम ते माता । सरूपो नाम ते पिता । सरूपाऽस्योषधे सा ।
सरूपमिदङ्कृधि ।।35।।
240403
शुनꣳ हुवेम मघवानमिन्द्रम् । अस्मिन्भरे नृतमव्वाजसातौ । शृण्वन्तमुग्रमूतये
समथ्सु । घ्नन्तव्वृत्राणि सञ्जितन्धनानाम् ।
धूनुथ द्यां पर्वतान्दाशुषे वसु । नि वो वना जिहते यामनो भिया । कोपयथ पृथिवीं
पृश्निमातरः । युधे यदुग्राः पृषतीरयुग्ध्वम् । प्रवेपयन्ति
पर्वतान् । विविञ्चन्ति वनस्पतीन् ।।36।।
240404
प्रोवारत मरुतो दुर्मदा इव । देवासस्सर्वया विशा । पुरुत्रा हि सदृङ्ङसि । विशो
विश्वा अनु प्रभु । समथ्सु त्वा हवामहे ।
समथ्स्वग्निमवसे । वाजयन्तो हवामहे । वाजेषु चित्रराधसम् । सङ्गच्छध्वꣳ सव्वदध्वम् ।
सव्वो मनाꣳसि जानताम् ।।37।।
240405
देवा भागय्यथा पूर्वे । सञ्जानाना उपासत । समानो मन्त्रस्समितिस्समानी । समानं
मनस्सह चित्तमेषाम् । समानङ्केतो
अभिसꣳ रभध्वम् । संज्ञानेन वो हविषा यजामः । समानी व आकूतिः । समाना हृदयानि
वः । समानमस्तु वो मनः । यथा वस्सुसहासति ।।38।।

240406
सं॒ज्ञान॑न्न॒स्स्वैः । सं॒ज्ञान॒मर॑णैः । सं॒ज्ञान॑मश्विना यु॒वम् । इ॒हास्मासु॒ निय॑च्छतम्
। सं॒ज्ञानं॑ मे॒ बृह॒स्पतिः॑ । सं॒ज्ञान॑ꣳ सवि॒ता
क॑रत् । सं॒ज्ञान॑मश्विना यु॒वम् । इ॒ह मह्य॒न्नि य॑च्छतम् । उप॑ च्छा॒यामि॑व॒ घृणेः॑ । अग॑न्म॒ शर्म॑ ते
व॒यम् ।।39।।
240407
अग्ने॒ हिर॑ण्यसन्दृशः । अद॑ब्धेभिस्सवितः॒ पा॒युभि॒ष्ट्वम् । शि॒वेभि॑र॒द्य परि॑पाहि नो॒ गय॑म्
। हिर॑ण्यजिह्वस्सुवि॒ताय॒ नव्य॑से । रक्षा॒
माकि॑र्नो अ॒घश॑ꣳस ईशत । मदे॑मदे॒ हि नो॑ द॒दुः । यू॒था गवा॑मृजु॒क्रतुः॑ । सङ्गृ॑भाय पु॒रू श॒ता
। उ॒भ॒या ह॒स्त्या वसु॑ । शि॒शी॒हि रा॒य आभ॑र ।।40।।
240408
शिप्रि॑न्वाजानां पते । शची॑व॒स्तव॑ द॒ꣳसना॑ । आ तू न॑ इन्द्र भाजय । गोष्वश्वे॑षु शु॒भ्रिषु॑ । स॒हस्रे॑षु
तुवीमघ । यद्दे॑वा
देव॒हेड॑नम् । देवा॑सश्चकृ॒मा व॒यम् । आदि॑त्या॒स्तस्मा॑न्मा यू॒यम् । ऋ॒तस्य॒र्तेन॑ मुञ्चत ।
ऋ॒तस्य॒र्तेना॑दित्याः ।।41।।
240409
यज॑त्रा मु॒ञ्चते॒ह मा॑ । य॒ज्ञैर्वो॑ यज्ञवाहसः । आ॒शिख्ष॑न्तो॒ न शे॑किम । मेद॑स्वता॒ यज॑मानाः
। स्रु॒चाऽऽज्ये॑न॒ जुह्व॑तः । अ॒का॒मा
वो॑ विश्वेदेवाः । शिख्ष॑न्तो॒ नोप॑ शेकिम । यदि॒ दिवा॒ यदि॒ नक्त॑म् । एन॑ एन॒स्योक॑रत् । भू॒तं मा॒
तस्मा॒द्भव्य॑ञ्च ।।42।।
240410
द्रु॒प॒दादि॑व मुञ्चतु । द्रु॒प॒दादि॒वेन्मु॑मुचा॒नः । स्वि॒न्नस्स्ना॒त्वी मला॑दिव । पू॒तं
प॒वित्रे॑णे॒वाज्य॑म् । विश्वे॑ मुञ्चन्तु॒ मैन॑सः ।
उद्वयन्तम॑स॒स्परि॑ । पश्य॑न्तो॒ ज्योति॒रुत्त॑रम् । दे॒वन्दे॑व॒त्रा सूर्य॑म् । अग॑न्म॒ ज्योति॑रुत्त॒मम् ।। 43।।
240400
तव॑ कृधि॒ वन॒स्तीꣳज्ञानता॒मस॑ति व॒यं भ॑रादित्याश्च॒ नव॑ च ।।4।।
240501
वृषा॒सो अ॒ꣳशुः॒ पव॑ते ह॒विष्मा॒न्थ्सोमः॑ । इन्द्र॑स्य भा॒ग ऋ॒त॒युश्श॒तायुः॑ । स मा॒
वृषा॑णव्वृँष॒भङ्कृ॑णोतु । प्रि॒यव्वि॒शाꣳ सर्व॑वीरꣳ
सु॒वीर॑म् । कस्य॒ वृषा॑ सु॒ते सचा॑ । नि॒युत्वा॑न्वृष॒भो र॑णत् । वृ॒त्र॒हा सोम॑पीतये । यस्ते॑
शृङ्ग वृषोनपात् । प्रण॑पात्कुण्ड॒पाय्यः॑ । न्य॑स्मिन्दध्र॒ आ
मनः॑ ।।44।।

240502
तꣳ स॒ध्रीची॑रू॒तयो॒ वृष्णि॑यानि । पौꣳस्या॑नि नि॒युत॑स्सश्चु॒रिन्द्र॑म् । स॒मु॒द्रन्न सिन्ध॑व
उ॒क्थशु॑ष्माः । उ॒रु॒व्यच॑स॒ङ्गिर॒ आवि॑शन्ति ।
इन्द्रा॑य॒ गिरो॒ अनि॑शितसर्गाः । अ॒पः᳚ प्रैर॑य॒न्थ्सग॑रस्य बु॒ध्नात् । यो अख्षे॑णेव च॒क्रिया॒
शची॑भिः । विष्व॑क्त॒स्तम्भ॑ पृथि॒वीमु॒त द्याम् ।
अख्षोद॑य॒च्छव॑सा॒ ख्षाम॑बु॒ध्नम् । वार्ण॒वात॒स्तवि॑षीभि॒रिन्द्रः॑ ।।45।।
240503
दृ॒ढान्यौ᳚ग्नादु॒शमा॑न॒ ओजः॑ । अवा॑भिनत्क॒कुभ॒ः᳚ पर्व॑तानाम् । आ नो॑ अग्ने सु॒के॒तुना᳚ ।
र॒यिव्वि॒श्वायु॑पोषसम् । मा॒र्डी॒कन्धे॑हि
जी॒वसे᳚ । त्वꣳ सो॑म म॒हे भग᳚म् । त्वय्यूँ᳚न॑ ऋ॒ताय॒ते । दख्ष॑न्दधासि जी॒वसे᳚ । रथ॑य्युँञ्जते
म॒रुत॑श्शु॒भे सु॒गम् । सूरो॒ न मि॑त्रावरुणा॒ गवि॑ष्टिषु ।।46।।
240504
रजाꣳ॑सि चि॒त्रा विच॑रन्ति त॒न्यवः॑ । दि॒वस्स॑म्राजा॒ पय॑सा न उख्षतम् । वाच॒ꣳ
सुमि॑त्रावरुणा॒विरा॑वतीम्
। प॒र्जन्य॑श्चि॒त्राव्वँ॑दति॒
त्विषी॑मतीम् । अ॒भ्राव॑सत मरुतस्सुमा॒यया᳚ । द्याव्वँ॑र्षयतमरु॒णाम॑रे॒पस᳚म् । अयु॑क्त स॒प्त
शु॒न्ध्युवः॑ । सूरो॒ रथ॑स्य न॒प्त्रियः॑ । ताभि॑र्याति॒ स्वयु॑क्तिभिः ।
वहि॑ष्ठेभिर्वि॒हर॑न् यासि॒ तन्तु᳚म् ।।47।।
240505
अ॒व॒ व्यय॒न्नसि॑तन्देव॒ वस्वः॑ । दवि॑ध्वतो र॒श्मय॒स्सूर्य॑स्य । चर्मे॒वावा॑धु॒स्तमो॑ अ॒फ्स्व॑न्तः
। प॒र्जन्या॑य॒ प्र गा॑यत । दि॒वस्पु॒त्राय॑
मी॒ढुषे᳚ । स नो॑ य॒वस॑मिच्छतु । अच्छा॑वदत॒वस॑ङ्गी॒र्भिरा॒भिः । स्तु॒हि प॒र्जन्य॒न्नम॒साऽऽवि॑वास
। कनि॑क्रदद्वृष॒भो जी॒रदा॑नुः । रेतो॑ दधा॒त्वोष॑धीषु॒ गर्भ᳚म् ।।48।।
240506
यो गर्भ॒मोष॑धीनाम् । गवा᳚ङ्कृ॒णोत्यर्व॑ताम् । प॒र्जन्य॒ः᳚ पुरु॒षीणा᳚म् । तस्मा॒ इदा॒स्ये॑ ह॒विः ।
जू॒होता॒ मधु॑मत्तमम् ।
इडा᳚न्नस्स॒य्यँत॑ङ्करत् । ति॒स्रो यद॑ग्ने श॒रद॒स्त्वामित् । शुचि॑ङ्घृ॒तेन॒ शुच॑यस्सप॒र्यन्
। नामा॑नि चिद्दधिरे य॒ज्ञिया॑नि । असू॑दयन्त त॒नुव॒स्सुजा॑ताः ।।49।।
240507
इन्द्र॑श्च नश्शुनासीरौ । इ॒मय्यँ॒ज्ञं मि॑मिख्षतम् । गर्भ॑न्धत्त स्व॒स्तये᳚ । ययो॑रि॒दव्विश्व॒ं
भुव॑नमा वि॒वेश॑ । ययो॑रान॒न्दो निहि॑तो॒

मर्हश्च । शुनासीरावृतुभिस्सँविदानौ । इन्द्रवन्तौ हविरिदञ्जुषेथाम् । आघाये अग्निमिन्धते
। स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ।
अग्न इन्द्रश्च मेदिना । हथो वृत्राण्यप्रति । युवꣳ हि वृत्रहन्तमा । याभ्याꣳ
सुवरजयन्नग्र एव । यावातस्थतुर्भुवनस्य मध्ये । प्रचर्षणी वृषणा
वज्रबाहू । अग्नी इन्द्रावृत्रहणा हुवे वाम् ।।50।।
240500
मन इन्द्रो गविष्टिषु तन्तुङ्गर्भꣳ सुजातास्सखा सप्त च ।।5।।
240601
उत नꣳ प्रिया प्रियासु । सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्याऽभूत् । इमा जुह्वानायुष्मदा
नमोभिः । प्रतिस्तोमꣳ सरस्वति
जुषस्व । तव शर्मन्प्रियतमे दधानाः । उपस्थे याम शरणन्न वृक्षम् । त्रिणि पदा विचक्रमे
। विष्णुर्गोपा अदाभ्यः । ततो धर्माणि धारयन्न् ।।51।।
240602
तदस्य प्रियमभि पाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था
। विष्णोꣳ पदे परमे मध्व उथ्सः ।
क्रत्वादा अस्तु श्रेष्ठः । अद्य त्वा वन्वन्थ्सुरेक्णाः । मर्त आनाश सुवृक्तिम्
। इमा ब्रह्म ब्रह्मवाह । प्रिया त आ बर्हिस्सीद । वीहि सूर पुरोडाशम् ।।52।।
240603
उप नस्सूनवो गिरः । शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः । अद्या नो देव सवितः ।
प्रजावथ्सावीस्सौभगम् । परा
दुष्वप्नियꣳ सुव । विश्वानि देव सवितः । दुरितानि परासुव । यद्भद्रन्तन्म आ सुव ।
शुचिमर्कैर्बृहस्पतिम् ।।53।।
240604
अध्वरेषु नमस्यत । अनाम्योज आचके । या धारयन्त देवा सुदख्षा दख्षपितारा । असुर्याय
प्रमहसा । स इत् ख्षेति
सुधित ओकसि स्वे । तस्मा इडा पिन्वते विश्वदानी । तस्मै विशस्स्वयमेवानमन्ति ।
यस्मिन्ब्रह्मा राजनि पूर्व एति । सकूतिमिन्द्र सच्च्युतिम् ।
सच्च्युतिञ्जघनच्च्युतिम् ।।54।।
240605
कनात्काभान्न आ भर । प्रयफ्स्यन्निव सक्थ्यौ । वि न इन्द्र मृधो जहि । कनीख्षुनदिव सापयन्न् ।
अभि नस्सुष्टुतिन्नय ।

प्र॒जाप॑तिस्स्त्रि॒याय्यँश॑ः । मु॒ष्कयो॑रदधा॒थ्सप॑म् । काम॑स्य॒ तृप्ति॑मान॒न्दम् । तस्या॑ग्ने
भाजये॒ह मा॑ । मोद॑ः प्रमो॒द आ॑न॒न्दः ।।55।।
240606
मु॒ष्कयो॒र्निहि॑त॒स्सप॑ः । सृ॒त्वेव॒ काम॑स्य तृप्या॑णि । दक्षि॑णानां प्रतिग्र॒हे । मन॑सश्चि॒त्तमाकू॑तिम्
। वा॒चस्स॒त्यम॑शीमहि । प॒शू॒नाः रू॒पमन्न॑स्य । यश॒श्श्रीश्श्र॑यतां॒ मयि॑ ।
यथा॒ऽहम॒स्या अतृ॑प स्त्रि॒यै पुमान् । यथा॒ स्त्री तृप्य॑ति पु॒ꣳसि प्रि॒ये प्रि॒या । ए॒वं भग॑स्य तृप्या॑णि
।।56।।
240607
य॒ज्ञस्य॒ काम्य॑ः प्रि॒यः । द॒दा॒मीत्य॒ग्निर्व॑दति । तथेति॑ वा॒युरा॑ह॒ तत् । हन्तेति॑ स॒त्यञ्च॒न्द्रमा॑ः
। आ॒दि॒त्यस्स॒त्यमोमिति॑ ।
आप॒स्तथ्स॒त्यमा भ॑रन् । यशो॑ य॒ज्ञस्य॒ दक्षि॑णाम् । अ॒सौ मे॒ काम॒स्सम॑ृद्ध्यताम् । न हि
स्पश॒मवि॑दन्न॒न्यम॒स्मात्
। वै॒श्वा॒न॒रात्पु॑रए॒तार॑म॒ग्नेः ।।57।।
240608
अथे॑ममन्थन्न॒मृत॒मम॑ूराः । वै॒श्वा॒न॒रङ्क्षै॑त्र॒जित्या॑य दे॒वाः । येषा॑मि॒मे पूर्वे॒ अर्मा॑स॒
आस॑न्न् । अ॒यूपास्सद्म॒ विभृ॑ता पु॒रूणि॑ ।
वैश्वा॑नर॒ त्वया॒ ते नु॒त्ताः । पृ॒थि॒वीम॒न्याम॒भित॑स्थु॒र्जना॑सः । पृ॒थि॒वीं मा॒तर॑ं
म॒हीम् । अ॒न्तरि॑क्ष॒मुप॑ ब्रुवे । बृ॒ह॒तीमू॒तये॒ दिव॑म् । विश्व॑ं बिभर्ति
पृ॒थि॒वी ।।58।।
240609
अ॒न्तरि॑क्ष॒व्यँ॑ प॑प्रथे । दु॒हे द्यौर्बृ॑ह॒ती पय॑ः । न ता न॑शन्ति॒ न द॑भाति॒ तस्क॑रः ।
नैना॑ अमि॒त्रो व्यथि॒राद॑धर्षति । दे॒वाꣳश्च॒
याभि॒र्यज॑ते॒ दद॑ाति च । ज्योगित्ताभि॑स्सचते॒ गोप॑तिस्स॒ह । न ता अर्वा॑ रे॒णुक॑काटो अश्नुते । न सँ
॑स्कृत॒त्रमुप॑ यन्ति॒ ता अ॒भि ।
उ॒रु॒गा॒यमभ॑य॒न्तस्य॒ ता अनु॑ । गावो॒ मर्त्य॑स्य॒ वि च॑रन्ति॒ यज्व॑नः ।।59।।
240610
रात्री॒ व्य॑ख्यदाय॒ती । पु॒रु॒त्रा दे॒व्य॑क्षभि॑ः । विश्वा॒ अधि॒ श्रियो॑ऽधित । उप॑ ते॒
गा इ॒वाक॑रम् । वृ॒णी॒ष्व दु॑हितर्दिवः । रात्री॒
स्तोम॒न्न जि॒ग्युषी॑ । दे॒वीव्वाँच॑मजनयन्त दे॒वाः । तावि॒॒श्वरू॑पाः प॒शवो॑ वदन्ति । सा नो॑
म॒न्द्रेष॒मूर्ज॒न्दुहा॑ना । धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ।।60।।
240611

यद्वाग्वदन्त्यविचेतनानि । राष्ट्री देवानान्निषसाद मन्द्रा । चतस्र ऊर्जन्दुदुहे

पयाꣳसि । क्व स्विदस्याः परमञ्जगाम । गौरी

मिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी

। सहस्राक्षरा परमे व्योमन् । तस्याꣳ समुद्रा अधि वि

क्षरन्ति । तेन जीवन्ति प्रदिशश्चतस्रः ।।61।।
240612
ततः क्षरत्यक्षरम् । तद्विश्वमुप जीवति । इन्द्रा सूरा जनयन्विश्विकर्मा । मरुत्वाꣳ

अस्तु गणवान्थ्सजातवान् । अस्य स्नुषा

श्वशुरस्य प्रशिष्टिम् । सपत्ना वाचं मनसा उपासताम् । इन्द्रस्सूरो अतरद्रजाꣳसि

। स्नुषा सपत्ना श्वशुरोऽयमस्तु । अयꣳ शत्रूञ्जयतु जर्हृषाणः ।

अयव्वाँजञ्जयतु वाजसातौ । अग्निः क्षत्रभृदनिभृष्टमोजः । सहस्रियो दीप्यतामप्रयुच्छन्

। विभ्राजमानस्समिधान उग्रः । आऽन्तरिक्षमरुहदगन्द्याम् ।।62।।
240600
धारयन्पुरोडाशं बृहस्पतिञ्जघनच्युतिमानन्दो भगस्य तृप्याण्यग्नेः पृथिवी यज्वन

एतु प्रदिशश्चतस्रो वाजसातौ चत्वारि च ।।6।।
240701
वृषाऽस्यꣳशुर्वृषभाय गृह्यसे । वृषाऽयमुग्रो नृचक्षसे । दिव्यः कर्मण्यो

हितो बृहन्नाम । वृषभस्य या ककुत् । विषूवान्

विष्णो भवतु । अयय्यो मामको वृषा । अथो इन्द्र इव देवेभ्यः । वि ब्रवीतु जनेभ्यः

। आयुष्मन्तव्वँर्चस्वन्तम् । अथो अधिपतिव्विशाम् ।।63।।
240702
अस्याः पृथिव्या अध्यक्षम् । इममिन्द्र वृषभङ्कृणु । यस्सुशृङ्गस्सुवृषभः । कल्याणो द्रोण आहितः ।

कार्षीवल प्रगाणेन ।

वृषभेण यजामहे । वृषभेण यजमानाः । अक्रूरेणेव सर्पिषा । मृधश्च सर्वा इन्द्रेण । पृतनाश्च

जयामसि ।।64।।
240703
यस्यायमृषभो हविः । इन्द्राय परिणीयते । जयाति शत्रुमायन्तम् । अथो हन्ति पृतन्यतः । नृणामह

प्रणीरसत् । अग्र

उद्भिन्दतामसत् । इन्द्र शुष्मन्तनुवा मेरयस्व । नीचा विश्वा अभितिष्ठाभिमातीः

। नि शृणीह्याबाधय्यो नो अस्ति । उरुन्नो लोकङ्कृणुहि जीरदानो ।।65।।
240704

प्रेह्यभि प्रेहि प्र भ॑रा सह॑स्व । मा विवे॑नो वि शृ॑णुष्वा जने॑षु । उदी॑डितो वृ॑षभ
तिष्ठ शुष्मैः॑ । इन्द्र शत्रू॑न्पुरो अ॒स्माकं॑ युध्य ।
अग्ने जेता त्वञ्ज॑य । शत्रू॑न्त्सहस ओज॑सा । विशत्रू॑न् विमृधो॑ नुद । एतन्ते स्तोम॑न्तुविजात
विप्र॑ः । रथन्न धीर॑स्स्वपा॑ अतख्षम् । यदीद॑ग्ने प्रति
त्वन्दे॑व हर्याः॑ ।।66।।
240705
सुवर्वतीरप ए॑ना जयेम । यो घृतेनाभि मा॑नितः । इन्द्र जैत्रा॑य जज्ञिषे । स नस्सङ्का॑सु पारय ।
पृतनासाह्ये॑षु च । इन्द्रो॑
जिगाय पृथिवीम् । अन्तरि॑ख्षꣳ सुव॑र्म॒हत् । वृत्रहा पु॑रुचेत॑नः । इन्द्रो॑ जिगाय
सह॑सा सहाꣳ॑सि । इन्द्रो॑ जिगाय पृत॑नानि विश्वा॑ ।।67।।
240706
इन्द्रो॑ जातो वि पुरो॑ रुरोज । स न॑ꣳ परस्पा वरि॑वꣳ कृणोतु । अयङ्कु॑लुरगृ॑भीतः ।
विश्वजिदुद्भिदित्सोम॑ः । ऋषिर्विप्रꣳ
काव्ये॑न । वायुर॑ग्रेगा य॑ज्ञप्रीः । साकङ्ग॑न्मन॑सा यज्ञम् । शिवो नियुद्भि॑श्शिवाभि॑ः
। वायो॑ शुक्रो अ॑यामि ते । मध्वो अग्र॑न्दिवि॑ष्टिषु ।।68।।
240707
आया॑हि सोम॑ पीतये । स्वारुहो दे॑व नियुत्व॑ता । इममि॑न्द्र वर्धय ख्षत्रिया॑णाम् ।
अयँव्विशाँव्विश्पति॑रस्तु राजा॑ । अस्मा
ई॑न्द्र महि वर्चाꣳ॑सि धेहि । अवर्च॑सङ्कृणुहि शत्रु॑मस्य । इममा भ॑ज ग्रामे अश्वे॑षु
गोषु॑ । निरमुं भ॑ज यो॑ऽमित्रो॑ अस्य । वर्ष्म॑न् ख्षत्रस्य॑ कुकुभि॑
श्रयस्व । ततो॑ न उग्रो वि भ॑जा वसू॑नि ।।69।।
240708
अस्मे द्या॑वापृथिवी भूरि॑ वामम् । सन्दु॑हाथाङ्घर्म॑दुघे॑व धेनुः । अयꣳ राजा॑ प्रिय
इन्द्र॑स्य भूयात् । प्रियो गवामोष॑धीनामुतापामिद्द। युनज्मि॑ त उत्तराव॑न्तमिन्द्र॑म् ।
येन जया॑सि न परा जया॑सै । स त्वा॑ऽकरेकवृषभ स्वाना॑म् । अथो॑ राजन्नुत्तमं मा॑नवाना॑म्
। उत्त॑रस्त्वमध॑रे ते
सपत्ना॑ः । एक॑वृषा इन्द्र॑सखा जिगीवान् ।।70।।
240709
विश्वा आशाꣳ पृत॑नास्सञ्जयञ्जयन्न् । अभि ति॑ष्ठ शत्रूयतस्स॑हस्व । तुभ्यं॑ भरन्ति ख्षितयो॑ यविष्ठ ।
बलिम॑ग्ने अन्ति॑त ओत
दूरात् । आ भन्दि॑ष्ठस्य सुमतिञ्चि॑किद्धि । बृहत्ते॑ अग्ने महि शर्म॑ भद्रम् । यो देह्यो

अन॑मयद्वध॒स्नैः । यो अर्य॑पत्नीरु॒षस॑श्चकार॑ । स नि॒रुध्या॒ नहु॑षो

य॒ह्वो अ॒ग्निः । विश॑श्चक्रे बलि॒हत॒स्सहो॑भिः ।।71।।

240710

प्र स॒द्यो अ॑ग्ने अत्ये॑ष्य॒न्यान् । आ॒विर्यस्मै॒ चारु॑तरो ब॒भूथ॑ । ई॒डेन्यो॑ वपु॒ष्यो॑

वि॒भावा॑ । प्रि॒यो वि॒शामति॑थि॒र्मानु॑षीणाम् ।

ब्रह्म॒ज्येष्ठा वी॒र्या॑ संभृ॑तानि । ब्रह्माग्रे॒ ज्येष्ठ॒न्दिव॒मा त॑तान । ऋ॒तस्य॒ ब्रह्म॑

प्रथ॒मोत ज॑ज्ञे । तेना॑र्हति॒ ब्रह्म॑णा॒ स्पर्धि॑तु॒ङ्कः । ब्रह्म॒ स्रुचो॑ घृतव॑तीः ।

ब्रह्म॑णा॒ स्वर॑वो मि॒ताः ।।72।।

240711

ब्रह्म॑ य॒ज्ञस्य॒ तन्त॑वः । ऋ॒त्विजो॒ ये ह॑वि॒ष्कृत॑ः । शृङ्गा॑णी॒वेच्छृ॒ङ्गिणा॒ꣳ सन्द॑दृश्रिरे

। च॒षाल॑वन्त॒स्स्वर॑वः पृथि॒व्याम् । ते

दे॒वास॒स्स्वर॑वस्तस्थि॒वाꣳस॑ः । नम॒स्सखि॑भ्यस्स॒न्नान्माऽव॑गात । अ॒भि॒भूर॒ग्निर॑तर॒द्रजाꣳ॑सि

। स्पृधो॑ वि॒हत्य॒ पृत॑ना अभि॒ श्रीः । जु॒षा॒णो म॒ आहु॑तिं

मामहिष्ट । ह॒त्वा स॒पत्ना॒न् वरि॑वस्करन्नः । ईशा॑नन्त्वा॒ भुव॑नानामभि॒ श्रियं॑म् । स्तौम्य॑ग्न

उरु॒कृतꣳ॑ सु॒वीरम्॑ । ह॒विर्जु॑षा॒णस्स॒पत्नाꣳ॑ अभि॒भूर॑सि ।

ज॒हि शत्रू॒ꣳ॒ रप॒ मृधो॑ नुदस्व ।।73।।

240800

वि॒शाञ्च॑यामसि जीरदान॒ो हर्या॒ विश्वा॒ दिवि॑ष्टिषु॒ वसू॑नि जिगी॒वान्थ्सहो॑भिर्मि॒ता न॑श्च॒त्वारि॑ च ।।7।।

240801

स प्र॑त्न॒वन्नवी॑यसा । अग्ने॑ द्यु॒म्नेन॑ स॒य्यँता॑ । बृ॒हत्त॑तन्थ भा॒नुना॑ । नव॒न्नु स्तोम॑म॒ग्नये॑

। दि॒वश्श्ये॒नाय॑ जीजनम् । वसो॑ः

कु॒विद्व॒नाति॑ नः । स्वा॒रु॒हा यस्य॒ श्रियो॑ दृ॒शे । र॒यिर्वी॒रव॑तो यथा । अग्ने॑ य॒ज्ञस्य॒ चेत॑तः ।

अदा॑भ्यः पुरए॒ता ।।74।।

240802

अ॒ग्निर्वि॒शां मानु॑षीणाम् । तू॒र्णी॒ रथ॒स्सदा॒नव॑ः । नव॒ꣳ॒ सोमा॑य वा॒जिने॑ । आज्यं॒ पय॑सोऽजनि

। जुष्ट॒ꣳ॒ शुचि॑तम॒व्वँसु॑ । नवꣳ॑

सोम जुषस्व नः । पी॒यूष॑स्ये॒ह तृ॑ण्णुहि । यस्ते॑ भा॒ग ऋ॒ता व॒यम् । नव॑स्य सोम ते व॒यम् । आ

सु॑म॒तिव्वृँ॑णीमहे ।।75।।

240803

स नो॑ रास्व सह॒स्रिण॑ः । नवꣳ॑ ह॒विर्जु॑षस्व नः । ऋ॒तुभि॑स्सोम॒ भूत॑मम् । तद॒ङ्ग प्रति॑हर्य नः ।

राज॑न्थ्सोम स्व॒स्तये॑ । नव॒

स्तोम॒न्नव॑ꣳ ह॒विः । इ॒न्द्रा॒ग्निभ्या॒न्नि वे॑दय । तज्जु॑षेता॒ꣳ सचे॑तसा । शु॒चि॒न्नु स्तोम॒न्नव॑जातम॒द्य । इन्द्रा॑ग्नी वृत्रहणा जु॒षेथा॑म् ।।76।।
240804
उ॒भा हि वा॑ꣳ सु॒हवा॒ जोह॑वीमि । ता वाज॑ꣳ स॒द्य उ॑श॒ते धेष्ठा॑ । अ॒ग्निरिन्द्रो॒ नव॑स्य नः । अ॒स्य ह॒व्यस्य॑ तृप्यताम् । इ॒ह दे॒वौ स॑ह॒स्रिणौ॑ । य॒ज्ञन्न॒ आ हि गच्छ॑ताम् । वसु॑मन्तः सु॒व॒र्विद॑म् । अ॒स्य ह॒व्यस्य॑ तृप्यताम् । अ॒ग्निरिन्द्रो॒ नव॑स्य नः । विश्वा॑न्दे॒वाꣳस्त॑र्पयत ।।77।।
240805
ह॒वि॒षो॒ऽस्य नव॑स्य नः । सु॒व॒र्विदो॒ हि ज॑ज्ञि॒रे । एदं ब॒र्॒हिस्सु॒ष्टरी॑मा॒ नवे॑न । अ॒यय्यँ॒ज्ञो यज॑मानस्य भा॒गः । अ॒यं ब॑भूव॒ भुव॑नस्य॒ गर्भः॑ । विश्वे॑ दे॒वा इ॒दम॒द्याग॑मिष्ठाः । इ॒मे नु द्यावा॑पृथि॒वी स॒मीची॑ । त॒न्वा॒ने य॒ज्ञं पु॑रु॒पेश॑सन्धि॒या । आऽस्मै॑ पृणीता॒ं भुव॑नानि॒ विश्वा॑ । प्र॒जां पुष्टि॑म॒मृत॒न्नवे॑न ।।78।।
240806
इ॒मे धे॒नू अ॒मृत॒य्यँ दु॒हाते॑ । पय॑स्वत्युत्त॒रामे॑तु॒ पुष्टिः॑ । इ॒मय्यँ॒ज्ञञ्जु॒षमा॑णे॒ नवे॑न । स॒मीची॒ द्यावा॑पृथि॒वी घृ॒ताची॑ । यवि॑ष्ठो ह॒व्य॒वाह॑नः । चि॒त्रभा॑नु॒र्घृ॒तासु॑तिः । नव॑जातो॒ वि रो॑चसे । अग्ने॒ तत्ते॑ महित्व॒नम् । त्वम॑ग्ने दे॒वता॑भ्यः । भा॒गे दे॑व॒ न मी॑यसे ।।79।।
240807
स ए॑ना वि॒द्वान् य॑क्ष्यसि । नव॒ स्तोम॑ञ्जुषस्व नः । अ॒ग्निः प्र॑थ॒मः प्राश्ञा॑तु । स हि वेद॒ यथा॑ ह॒विः । शि॒वा अ॒स्मभ्य॒मोष॑धीः । कृणोतु॑ वि॒श्वच॑र्॒षणिः । भ॒द्रान्न॒श्श्रेय॒स्सम॑नैष्ट देवाः । त्वया॑ऽव॒सेन॒ सम॑शीमहि त्वा । स नो॑ मयो॒भूः पि॑तो॒ आ वि॑शस्व । शन्तो॒काय॑ त॒नुवे॑ स्यो॒नः । ए॒तमु॒ त्यं मधु॑ना॒ सय्युँ॑त॒य्यँव॑म् । सर॑स्वत्या॒ अधि॑ म॒नाव॑चर्कृषुः । इन्द्र॑ आसी॒थ्सीर॑पतिश्श॒तक्र॑तुः । की॒नाशा॑ आसन्म॒रुत॑स्सु॒दान॑वः ।।80।।
240800
पु॒र॒एता॒ वृ॑णीमहे जु॒षेथा॑न्तर्पयता॒मृत॒न्नवे॑न मीयसे स्यो॒नश्च॒त्वारि॑ च ।।8।।
240000
जु॒ष्टश्च॒रव्यु॑षो॒ जुष्टी॑नरो नक्तञ्जा॒ता वृ॒षा॒स उ॒त नो॒ वृषा॑ऽस्य॒ꣳशुस्स॒प्र॒ल॒वदष्टौ ।।8।।
जुष्टो॑ म॒न्युर्भ॒गो॒ जुष्टी॑न॒रो हरि॑वर्पस॒ङ्गिर॒श्शिप्रि॒न्वाजानामु॒त नः॑ प्रि॒या यद्वाग्वद॑न्ती॒ विश्वा॒ आशा॒

अशीतिः ।।80।।

जुष्टस्सुदानवः ।।

हरिः ओम् ।। श्रीकृष्णार्पणमस्तु

चतुर्थप्रपाठकस्समाप्तः

250000

पञ्चमप्रपाठकप्रारम्भः हरिः ओम्।।

250101

प्राणो रक्षति विश्वमेजत्। इर्यो भूत्वा बहुधा बहूनि। स

इथ्सर्वँव्व्यानशे। यो देवो देवेषु विभूरन्तः। आ

वृदूदात् क्षे त्रियद्वगद्वषा। तमित्प्राणं मनसोप शिक्षत।

अग्रन्देवानामिदमत्तु नो हविः। मनसश्चित्तेदम्। भूतं भव्यञ्च गुप्यते। तद्धि

देवेष्वग्रियम्।।1।।

250102

आ न एतु पुरश्चरम्। सह देवैरिमꣳ हवम्। मनश्श्रेयसि श्रेयसि।

कर्मन् यज्ञपतिन्दधत्। जुषतां मे वागिदꣳ

हविः। विराड्देवी पुरोहिता। हव्यवानपायिनी। यया रूपाणि बहुधा वदन्ति।

पेशाꣳसि देवाः परमे जनित्रे। सानो विराडनपस्फुरन्ती ।।2।।

250103

वाग्देवी जुषतामिदꣳ हविः। चक्षुर्देवानाञ्ज्योतिरमृते

न्यक्तम्। अस्य विज्ञानाय बहुधानिधीयते। तस्य सुम्नमशीमहि। मा नो

हासीद्विचक्षणम्। आयुरिन्नः प्रतीर्यताम्। अनन्धाश्चक्षुषा वयम्।

जीवा ज्योतिरशीमहि। सुवर्ज्योतिरुतामृतम्। श्रोत्रेण भद्रमुत

शृण्वन्तिसत्यम्। श्रोत्रेण वाचं

बहुधोद्यमानाम्। श्रोत्रेण मोदश्च महश्च श्रूयते।

श्रोत्रेण सर्वा दिश आ शृणोमि। येन प्राच्या उत दक्षिणा।

प्रतीच्यै दिशश्शृण्वन्त्युत्तरात्।

तदिच्छ्रोत्रं बहुधोद्यमानम्। अरान्न नेमिः परि सर्वंबभूव ।।3।।

250100

अग्रियमनपस्फुरन्ती सत्यꣳ सप्त च ।।1।।

250201

उदेहि वाजिन्यो अस्यफ्स्वन्तः। इदꣳ राष्ट्रमा विश सूनृतावत्। यो रोहितो

विश्वमिदञ्जजान। स नो राष्ट्रेषु सुधितान्दधातु। रोहꣳ रोहꣳ रोहित आ

रुरोह। प्रजाभिर्वृद्धिञ्जनुषामुपस्थम्। ताभिस्सꣳरब्धो अविदथ्षडुर्वीः।

गातुं प्रपश्यन्निह राष्ट्र माऽहाः।घ आऽहार् षीद्राष्ट्र मिह रोहितः। मृधो

व्यास्थदभयन्नो अस्तु ।।4।।

250202

अ॒स्मभ्य॑न्द्यावापृथिवि॒ शक्व॑रीभिः।
रा॒ष्ट्रन्दु॑हाथामि॒ह रे॒वती॑भिः। विम॑मर्॒ श॒ रोहि॑तो
वि॒श्वरू॑पः। स॒मा॒च॒क्रा॒णः प्र॒रुहो॒ रुह॑श्च। दिव॑ङ्ग॒त्वाय॑ मह॒ता म॑हि॒म्ना। वि
नो॑ रा॒ष्ट्रं मु॑नक्तु॒ पय॑सा॒ स्वेन॑। यास्ते॒ विश॒स्तप॑सा सं ब॑भू॒वुः।
गा॒य॒त्रव॑त्स॒मनु॒ तास्त॒ आऽगुः। तास्त्वा वि॑शन्तु॒ मह॑सा॒ स्वेन॑। सं
मा॑ता पु॒त्रो अ॒भ्ये॑तु॒ रोहि॑तः ।।5।।
250203
यू॒यमु॑ग्रामरुतः पृश्निमातरः। इन्द्रे॑ण स॒युजा॒
प्रमृ॑णीथ॒ शत्रून्॑। आ वो॒ रोहि॑तो अशृणोदभिद्यवः। त्रिस॑प्तासो
मरुतस्स्वादुसंमुदः। रोहि॑तो॒ द्यावा॑पृथि॒वी ज॑जान। तस्मि॒ स्तन्तु॑
परमे॒ष्ठी त॑तान। तस्मि॑ञ्छिश्रिये अ॒ज एक॑पात्। अदृ॑ꣳहद्द्यावा॑पृथि॒वी बले॑न। रोहि॑तो॒
द्यावा॑पृथि॒वी अ॑दृꣳहत्। तेन॒ सुव॑स्तभि॒तन्तेन॒ नाकः॑ ।।6।।
250204
सो अ॒न्तरि॑ख्षे॒ रज॑सो वि॒मानः॑। तेन॑ दे॒वास्सुव॒रन्व॑विन्दन्। सु॒शेव॑न्त्वा भा॒नवो॑
दीदि॒वाꣳस॑म्। सम॑ग्रासो जु॒ह्वो॑ जातवेदः। उ॒ख्षन्ति॑ त्वा वा॒जिन॒मा मृतेन॑। सꣳस॑मग्ने
युवसे॒ भोज॑नानि। अग्ने॒ शर्ध॑ मह॒ते सौभ॑गाय। तव॑ द्यु॒म्नान्यु॑त्त॒मानि॑
सन्तु। सञ्जा॑स्प॒त्यꣳ सु॒यम॒मा कृ॑णुष्व। श॒त्रू॒य॒ताम॒भि ति॑ष्ठा महाꣳसि।।7।।
250200
अ॒स्त्वे॒तु रोहि॑तो॒ नाको॒ महाꣳसि ।।2।।
250301
पुन॑र्न॒ इन्द्रो॑ म॒घवा॑ ददातु। धना॑नि श॒क्रो धन्य॑स्सु॒राधाः॑।
अ॒र्वा॒चीन॑ङ्कृणुतां॑य्याचि॒तो मनः॑। श्रु॒ष्टी नो॑ अ॒स्य ह॒विषो॑ जु॒षा॒णः। यानि॑
नोऽजि॒नन्धना॑नि। ज॒हर्थ॑ शूर म॒न्युना॑। इन्द्रानु॑विन्द न॒स्तानि॑। अ॒नेन॑
ह॒विषा॒ पुनः॑। इन्द्र॒ आशा॑भ्य॒स्परि॑। सर्वा॒भ्योऽभ॑यङ्करत् ।।8।।
250302
जेता॒ शत्रु॒न् विच॑र्षणिः। आकू॑त्यै त्वा॒ कामा॑य त्वा स॒मृधे॑त्वा।
पु॒रोद॑धे अमृत॒त्वाय॑ जी॒वसे॑। आकू॑तिम॒स्याव॑से। काम॑मस्य॒
सम॑द्ध्यै। इन्द्र॑स्य युञ्जते॒धियः॑। आकू॑तिन्दे॒वीं मन॑सः
पु॒रोद॑धे। य॒ज्ञस्य॑ मा॒ता सु॒हवा॑ मे अस्तु। यदि॒च्छामि॒ मन॑सा॒ सका॑मः।
वि॒देय॑मेन॒द्धृद॑ये॒ निवि॑ष्टम् ।।9।।
250303

सेद॒ग्निर॒ग्नीꣳरत्ये॒॑त्य॒न्यान्। यत्र॑ वा॒जी तन॑यो वी॒डुपा॑णिः।

स॒हस्र॑पाथा अ॒क्षरा॑ स॒मेति॑। अशा॑नान्त्वाऽऽशापा॒लेभ्यः॑। च॒तुभ्र्यो॑

अ॒मृते॒॑भ्यः। इ॒दंभू॒तस्या ध्य॑क्षेभ्यः। वि॒धेम॑ ह॒विषा॑व॒यम्। विश्वा॒ आशा॒

मधु॑ना॒ सꣳ सृ॑जामि। अ॒न॒मी॒वा आप॒ ओष॑धयो भवन्तु। अ॒यय्यँज॑मानो॒

मृधो॒ व्य॑स्यताम् ।।10।।

250304

अगृ॑भीताꣳ प॒शव॑स्सन्तु॒सर्वे॒॑। अ॒ग्निस्सोम॒ो वरु॑णो

मि॒त्र इन्द्रः॑। बृह॒स्पति॑स्सवि॒तायस्स॑ह॒स्री।

पू॒षान॒ो गोभि॒रव॑सा॒ सर॑स्वती। त्वष्टा॑ रू॒पाणि॒ सम॑नक्तु य॒ज्ञैः। त्वष्टा॑ रू॒पाणि॒

दध॑ती॒ सर॑स्वती। पू॒षा भगꣳ॑ सवि॒ता नो॑ ददातु। बृह॒स्पति॒र्दद॒दिन्द्र॑स्स॒हस्र॒॑म्।

मि॒त्रो द॒ाता वरु॑ण॒स्सोमो॑ अ॒ग्निः ।।11।।

250300

क॒र॒न्नि वि॑ष्टमस्यत॒ान्नव॑ च ।।3।।

250401

आ नो॑ भर॒ भग॑मिन्द्र द्यु॒मन्त॒॑म्। निते॑ दे॒ष्णस्य॑ धीमहि प्ररे॒के। उ॒र्व इ॑व

पप्रथे॒ कामो॑ अ॒स्मे। तमापृ॑णावसुपते॒ वसू॑नाम्। इ॒मङ्का॒मं॑

मन्दया॒ गोभि॒रश्वै॒॑ः। च॒न्द्रव॑ता॒ राध॑साप॒प्रथ॑श्च।

सु॒व॒र्यवो॑ म॒तिभि॒स्तुभ्य॒ं विप्रा॒॑ः। इन्द्रा॑य॒ वाहꣳ॑ कुशि॒कासो॑ अक्रन्।

इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्रवो॑चम्। यानि॑च॒कार॑ प्रथ॒मानि॑ व॒ज्री ।।12।।

250402

अह॒न्नहि॒मन्व॒पस्त॑तर्द। प्रव॒क्षणा॑ अभिन॒त्पर्व॑तानाम्। अह॒न्नहि॒ं पर्व॑ते शिश्रिया॒णम्।

त्वष्टा॒॑ऽस्मै॒ वज्र॑ स्व॒र्य॑न्ततक्ष। वा॒श्रा इ॑व धे॒नव॒स्स्यन्द॑मानाः।

अञ्ज॑स्समु॒द्रमव॑ जग्म॒ुराप॑ः। वृ॒षा॒यमा॑णोऽवृणीत॒ सोम॒॑म्।

त्रिक॑द्रुकेष्वपिबथ्सु॒तस्य॑। आसाय॑कं म॒घवा॑ दत्त॒वज्र॒॑म्। अह॑न्नेनं प्रथम॒जा मही॑नाम्।।13।।

250403

य दिन्द्राह॑न्प्रथम॒जा मही॑नाम्। आन्मा॒यिना॒ममि॑ना॒ꣳ प्रोत मा॒याः।

आथ्सूर्य॑ञ्ज॒नय॒न्द्यामु॒षास॒॑म्। ता॒दीक्ना॒ शत्रू॒न्न किला॑विविथ्से।

अह॑न्वृत्रव्वृ॑त्र॒तर॒ं व्यꣳस॒॑म्। इन्द्र॒ो वज्रे॑णमहता व॒धेन॑। स्कन्धाꣳ॑सीव॒

कुलि॑शेना॒विवृ॑क्णा। अहि॑श्शयत उपपृक्पृ॑थि॒व्याम्।

अ॒यो॒ध्येव दु॒र्मद॒ आ हि जु॒ह्वे। म॒हावी॒रन्तु॑विबा॒धमृ॑जी॒षम्।।14।।

250404

नाता॑रीरस्य॒ समृ॑तिं व॒थाना॑म्। सꣳ रु॒जाना॑ः पिपिष॒ इन्द्र॑शत्रुः।
विश्वो॒विहा॑या अर॒तिः। वसु॑र्दधे॒ हस्ते॒ दखि॑णे। त॒रणि॒र्न शि॑श्रथत्। श्र॒व॒स्य॑ या॒ न
शि॑श्रथत्। विश्व॑स्मा॒ इदि॑षुध्य॒से। दे॒व॒त्राह॒व्यमूहि॑षे। विश्व॑स्मा॒
इथ्सु॒कृते॒ वार॑मृण्वति। अ॒ग्नि द्वा॑रा॒ व्यृ॑ण्वति।।15।।
250405
उदु॒ज्जिहा॑नो अ॒भि काम॑मी॒रयन्। प्र॒पृञ्चन्विश्वा॒ भुव॑नानि पू॒र्वथा॑। आ के॒तुना॒
सुष॑मिद्धो यजि॑ष्ठः। काम॑न्नो आग्ने अ॒भिह॑र्य दि॒ग्भ्यः। जु॒षा॒णो
ह॒व्यम॒मृते॑षु दू॒ढ्यः। आ नो॑ र॒यिं ब॑हु॒लाङ्गोम॑त॒मिषं॑म्। नि धे॑हि॒
यख्ब॑द॒मृते॑षु॒ भूषन्। अश्वि॑ना य॒ज्ञमाग॑तम्। दा॒शुषः॒ पुरु॑दꣳसस। पू॒षा र॑ख्बतु नो
र॒यिम्।।16।।
250406
इ॒मय्यँ॒ज्ञम॒श्विना॑ व॒र्धय॑न्ता। इ॒मौ र॒यिय्यँज॑मानाय धत्तम्। इ॒मौ
प॒शून्र॑ख्बताँ॒व्वि॒श्वतो॑ नः। पू॒षा न॑ः पातु॒ सद॒मप्र॑यच्छन्। प्रते॑ म॒हे
स॑रस्वति। सुभ॑गे॒ वाजि॑नीवति। स॒त्यवा॒चे॑ भरे म॒तिम्। इ॒दन्नो॑
ह॒व्यङ्घृ॒ तव॑थ्सरस्वति। स॒त्ववा॒चे प्रभ॑रेमा॒हवीꣳषि॑। इ॒मानि॑ ते दुरि॒ता
सौभ॑गानि। तेभि॑र्व॒यꣳ सु॒भगा॑सस्स्याम।।17।।
250400
व॒ज्र्यहीनामृजी॒षं व्यृ॑ण्वति रख्बतु नो र॒यिꣳ सौभ॑गा॒न्येक॑ञ्च।।4।।
250501
य॒ज्ञो रा॒यो य॒ज्ञ ईशे॒ वसू॑नाम्। य॒ज्ञस्स॒स्याना॑मु॒त सु॑ख्बित॒ीनाम्।
य॒ज्ञ इ॒ष्टिः पू॒र्वचि॑त्ति॒न्दधातु। य॒ज्ञो ब्र॑ह्म॒ण्वाꣳ अप्ये॑तु दे॒वान्।
अ॒यय्यँ॒ज्ञो व॑र्धता॒ङ्गोभि॒रश्वैः॑। इ॒यंव्वे दि॑स्स्वप॒त्या सु॒वीरा॑। इ॒दं ब॒र् हिरति॑
ब॒र् हीꣳष्य॒न्या। इ॒मय्यँ॒ ज्ञँव्विश्वे॑ अवन्तु दे॒वाः। भग॑ ए॒व भग॑वाꣳ अस्तु
देवाः। तेन॑ व॒यं भग॑वन्तस्स्याम।।18।।
250502
तन्त्वा॑भग॒सर्व॒इज्जो॑हवीमि। स नो॑ भगपुर ए॒ता भ॑वे॒ह। भग॒ प्रणे॑त॒र्भग॒ सत्य॑राधः।
भगे॒मान्धिय॒मुद॑व॒दद॑न्नः। भग॒ प्रणो॑ जनय॒ गोभि॒रश्वैः॑। भग॒
प्रनृभि॑र्नृ॒वन्त॑स्स्याम। शश्व॑ती॒स्सम॒ा उप॑यन्ति लो॒काः। शश्व॑ती॒स्सम॒ा
उप॑य॒न्त्याप॑ः। इ॒ष्टं पू॒र्तꣳ शश्व॑तीनाꣳ॒ समा॑नाꣳ शाश्व॒तेन॑।
ह॒विषे॒ष्ट्वाऽन॒न्तँल्लो॒कं प॑र॒मा रु॑रोह।।19।।
250503

इ॒यमे॒व सा या प्र॑थ॒मा व्यौच्छ॑त्। सा रू॒पाणि॑ कुरु॒ते पञ्च॑ दे॒वी। द्वे

स्वसा॑रौ वयत॒स्तन्त्र॑मे॒तत्। स॒ना॒तन॒ँव्वित॑त॒ꣳ षण्म॑यूखम्।

अवा॒न्याꣳस्तन्तू॒ँन्कि॒रतो॑ धत्तो अ॒न्यान्। नाव॑

पृज्याते॒ न ग॑माते॒ अन्त॑म्। आवो॑ यन्तूदवा॒हासो॑

अ॒द्य। वृष्टि॒य्ये विश्वे॑ म॒रुतो॑ जु॒नन्ति॑। अ॒यँय्यो अ॒ग्निर्म॑रुत॒स्समि॑द्धः।

ए॒तञ्जु॑षध्वङ्कवयो युवानः।।20।।

250504

धा॒रा॒व॒रा म॒रुतो॑ धृष्णुवो॑जसः। मृगा न भी॒मा

स्त॑वि॒षेभि॑रू॒र्मिभि॑ः। अ॒ग्नयो॒ न शु॑शु॒चाना

ऋ॑जी॒षिण॑ः। भ्रु॒मि॒न्धम॑न्त उप॒गा अ॑वृण्वत। वि च॑क्रमे॒त्रिर्दे॒वः। आवे॒धस॒न्नील॑पृष्ठं

बृ॒हन्त॑म्। बृह॒स्पति॒ꣳसद॑ने सादयध्वम्। सा॒दद्यो॑नि॒न्दम॒

आदी॑दि॒वाꣳस॑म्। हिर॑ण्यवर्णमरु॒षꣳ स॑पेम। सहिशुचि॑श्शत॒प॑त्र॒स्सशु॒न्ध्यूः।।21।।

250505

हिर॑ण्यवाशीरिषि॒रस्सु॑व॒र्॒षाः। बृह॒स्पति॒स्स स्वा॑वे॒श ऋ॒ष्वाः।

वू॒रुसख॑भ्य आसु॒तिङ्क॑रिष्ठः। पूष॒ स्तव॑व्रते व॒यम्। नरि॑ष्येम कुदाच॒ न।

स्तो॒तार॑स्त इ॒हस्म॑सि। यास्ते॑ पूष॒न्ना वो॑ अ॒न्तस्स॑मुद्रे।

हि॒र॒ण्ययी॑रु॒न्तरि॑क्षे॒ चर॑न्ति। याभि॑र्या॑सिदू॒त्याꣳ

सूर्य॑स्य। कामे॑न कृ॒तश्रव॑ इ॒च्छमा॑नः।।22।।

250506

अर॑ण्या॒न्यर॑ण्यान्य॒सौ। या प्रेव॒ नश्य॑सि। क॒था ग्राम॒न्नपृ॑च्छसि। नत्वा॒भीरि॑वविन्दती 3

वृ॒षा॒रवायव॒द॑ते। यद॒ुपाव॑तिचिच्चि॒कः। आ॒घा॒टीभि॑ रिवधा॒वयन्॒।

अ॒र॒ण्या॒निर्म॑हीयते। उ॒तगाव॑ इवादन्। उ॒तोवेश्मे॑वदृश्यते।।23।।

250507

उ॒तो अ॑रण्या॒निस्सा॒यम्। श॒कु॒टीरि॑व सर्जति। गाम॒ङ्गै॒ष॒ आह्व॑यति। दार्व॒गै॒ष॒ उपा॑वधीत्।

वस॑न्नरण्या॒न्याः सा॒यम्। अक्रु॑क्ष॒दिति॑मन्यते। नवा अ॑रण्या॒निर् ह॑न्ति।

अ॒न्यश्चे॒न्नाभि॒गच्छ॑ति।स्वा॒दोः फल॑स्य ज॒ग्ध्वा। यत्र॒कामं॑नि प॑द्यते।

अञ्ज॑नगन्धीꣳ सुर॒भीम्। ब॒ह्व॒न्नामकृ॑षीवलाम्। प्राहं मृगाणां॑ मा॒तर॑म्।

अ॒र॒ण्या॒नीम॑शꣳ सिषम्।।24।।

250500

स्या॒म॒रु॒रो॒ह॒यु॒वा॒नश्शु॒न्ध्यू॒रि॒च्छमा॑नो दृश्यत॒ निप॑द्यते च॒त्वारि॑ च।।5।।

250601

वार्त्रंहत्याय॒शव॑से। पृत॒ना॒साह्या॑यच। इन्द्र॒ त्वा व॑र्तयामसि।

सु॒ब्रह्मा॑णं वी॒रव॑न्तं बृ॒हन्त॑म्। उ॒रुंग॑भी॒रं पृ॒थुबु॑ध्नमिन्द्र। श्रु॒तर्

षि॑मु॒ग्रम॑भिमाति॒षाह॑म्। अ॒स्मभ्यं॑चि॒त्रं वृष॑णꣳर॒यिंदाः॑।

क्षे॒त्रि॒यैत्वा॒निर्ऋ॑त्यैत्वा। द्रु॒होमु॑ञ्चामि॒

वरु॑णस्य॒पाशा॑त्। अ॒ना॒गसं॒ ब्रह्म॑णेत्वा करोमि।।25।।

250602

शि॒वेते॒ द्यावा॑पृथि॒वि उ॒भे इ॒मे। शंते॑ अ॒ग्निस्स॒हाद्भिर॑स्तु। शंद्यावा॑पृथि॒वी स॒हौष॑धीभिः।

शम॒न्तरि॑क्षꣳ स॒हवाते॑नते। शंते॒चत॑स्र॒ꣲप्र॒दिशो॑भवन्तु। यादै॒वीश्चत॑स्र॒ꣲप्र॒दिशः॑।

वात॑पत्नीर॒भिसूर्यो॑विच॒ष्टे। तासा॑न्त्वाज॒रस॒ अद॑धामि। प्रयक्ष्म॑ एतु॒निर्

ऋ॑तिं पर॒ाचैः। अमो॑चि॒यक्ष्मा॑द्दुरि॒तादव॑र्त्यै।।26।।

250603

द्रु॒हꣲ पाश॒ान्निर् ऋ॑त्यै॒चोद॑मोचि। अहा॒ अव॑र्ति॒मवि॑दथ्स्यो॒नम्।

अप्य॑भूद्भ॒द्रेसु॑कृ॒तस्य॑ लो॒के। सूर्य॑मृ॒तंतम॑सो॒ग्राह्या॒यत्। दे॒वा

अमु॑ञ्चन्न॒सृ॑ज॒न्व्ये॑नसः। ए॒वम॒हमि॒मं क्षे॑त्रि॒याज्जा॑मिश॒ꣳसात्।

द्रु॒होमु॑ञ्चामि॒ वरु॑णस्य॒ पाशा॑त्। बृह॑स्पते युवमिन्द्र॑श्च॒वस्वः॑। दि॒व्यस्ये॑शाधे

उ॒तपार्थि॑वस्य। ध॒त्तꣳ र॒यिस्तु॑व॒ते की॒रये॑चित् ।।27।।

250604

यू॒यंपा॑तस्व॒स्तिभि॒स्सदा॑नः। दे॒वायु॒ध॒मिन्द्र॒माजोहु॑वानाः। वि॒श्वा॒वृध॑म॒भिये॑रक्ष॑माणाः।

येन॑ह॒तादी॒र्घमध्वा॑न॒मायन्। अ॒न॒न्तमर्थ॒मनि॑वथ्स्य॑मानाः। यत्ते॑सुजाते हि॒मव॑थ्सुभेष॒जम्।

म॒यो॒भूश्शन्त॒माय॒द्धदोसि॑। तत॑नोदेहिसीबले। अ॒दोगि॒रिभ्यो॒अधि॒यत्प्र॒ धाव॑सि।

स॒ꣳ शोभ॑माना क॒न्यैव शुभ्रे।।28।।

250605

तांत्वा॒मुद्ग॑लाह॒विषा॑ वर्धयन्ति। सान॑स्सीबले॒र॒यिमाभा॑जये॒ह। पूर्वा॑ दे॒वा॒ अप॑रेणानु॒पश्य॒ञ्जन्म॑भिः।

जन्मा॒न्यव॑रै॒ꣲपरा॑णि। वेदा॑निदेवा अ॒यम॒स्मीति॒माम्। अ॒हꣳहि॒त्वाशरी॑रंज॒रस॑ꣲप॒रस्ता॑त्।

प्रा॒णा॒पा॒नौ चक्षु॒श्श्रोत्र॑म्। वाचं॒मन॑सि॒ संभृ॑ताम्।

हि॒त्वाशरी॑रंज॒रस॑ꣲप॒रस्ता॑त्। आभूतिं॒भूतिं॑ व॒यम॑श्नवामहै।

इ॒माए॒वता उ॒षस॒ोयाꣲ प्र॑थ॒माव्यौच्छन्। तादे॒व्यꣲ कुर्व॒ते॒ पञ्च॒रू॒पा।

शश्व॑ती॒र्नाव॑पृज्यन्ति। नग॑म॒न्त्यन्त॑म् ।।29।।

250600

क॒र॒ोम्यव॑र्त्यैचिच्छु भ्रेऽश्नवामहैच॒त्वारि॑ च ।।6।।

250701

वसूनां त्वाऽधीतेन। रुद्राणांमूर्म्या। आदित्यानां तेजसा। विश्वेषां
देवानां क्रतुना। मरुतामेम्ना जुहोमि स्वाहा।
अभिभूतिरहमागमम्। इन्द्रसखा स्वायुधः। आस्वाशासु दुष्षहः।
इदंवर्चो अग्निना दत्तमागात्। यशो भर्गस्सह ओजोबलंच।।30।।
250702
दीर्घायुत्वाय शतशारदाय। प्रतिगृभ्णामिमहतेवीर्याय। आयुरसि विश्वायुरसि।
सर्वायुरसि सर्वमायुरसि। सर्वँम आयुर्भुयात्। सर्वमायुर्गेषम्।
भूर्भुवस्सुवः। अग्निर्धर्मेणान्नादः। मृत्युर्धर्मेणान्नपतिः।
ब्रह्म क्षत्रस्वाहा ।।31।।
250703
प्रजापतिः प्रणेता। बृहस्पतिः पुर एता। यमः पन्थाः। चन्द्रमाः पुनरसुस्स्वाहा।
अग्निरन्नादोऽन्नपतिः। अन्नाद्यमस्मिन् यज्ञेयजमानाय ददातु स्वाहा। सोमो
राजा राजपतिः। राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा।
वरुणस्सम्राट्थ्सम्राट्पतिः। साम्राँज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा।।32।।
250704
मित्रः क्षत्रं क्षत्रपतिः। क्षत्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा।
इन्द्रो बलं बलपतिः। बलमस्मिन् यज्ञे यजमानाय ददातु स्वाहा।
बृहस्पतिर्ब्रह्म ब्रह्मपतिः। ब्रह्मास्मिन् यज्ञे यजमानाय ददातु
स्वाहा। सविताराष्ट्रं राष्ट्रपतिः। राष्ट्रमस्मिन् यज्ञे यजमानाय ददातु
स्वाहा। पूषा विशांविट्पतिः। विशमस्मिन् यज्ञे यजमानाय ददातु
स्वाहा। सरस्वती पुष्टिः पुष्टिपत्नी। पुष्टिमस्मिन् यज्ञे यजमानाय ददातु
स्वाहा। त्वष्टा पशूनां मिथुनानां रूपकृद्रू पपतिः। रुपेणास्मिन्
यज्ञे यजमानाय पशून्ददातु स्वाहा।।33।।
250700
च स्वाहा साम्राँज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा विशमस्मिन् यज्ञे यजमानाय ददातु
स्वाहा चत्वारि च ।।7।।
250801
अग्निस्सोमो वरुणो मित्र इन्द्रो बृहस्पतिस्सविता पूषा सरस्वती त्वष्टा
दश।। स ईं पाहि य ऋजीषी तरुत्रः। यश्शिप्रवान्वृषभोयो मतीनाम्। यो
गोत्रभिद्वज्रभृद्यो हरिष्ठाः। स इन्द्र चित्रां अभि तृन्धि वाजान्। आते शुष्मो
वृषभ एतु पश्चात्। ओत्तरादधरागापुरस्तात्। आविश्वतो अभि

समेँत्व॒र्वाङ्। इन्द्रं॑ द्यु॒म्नᳲ सु॒वर्व॑द्धेह्य॒स्मे। प्रोष्व॑स्मैपुरोर॒थम्।
इन्द्रा॑य शू॒षम॑र्चत ।।34।।
250802
अ॒भीके॑ चिदुलोक॒कृत्। स॒ङ्गे स॒मथ्सु॑ नृत्र॒हा। अ॒स्माकं॑ बोधि चोदि॒ता। नभ॑न्तामन्य॒ केषाँ॑म्। ज्या॒का
अधि॒ धन्व॑सु। इन्द्रं॑ व॒यᳲ शु॒ना॒सीर॑म्। अ॒स्मिन् य॒ज्ञे ह॑वामहे।
आवाज॒ैरुप॑नोगमत्। इन्द्रा॑य॒ शु॒ना॒सीरा॑य। स्रु॒चा जु॑हुत नो ह॒विः ।।35।।
250803
जु॒षता॒ं प्रति॒मेधि॑रः। प्र॒ह॒व्यानि॑ घृ॒तव॑न्त्यस्मै। हर्यि॑श्वाय
भरता स॒जोषाँ॑ः। इन्द्र॒र्तुभि॒र्ब्रह्म॑णा वावृ॒धानः। शु॒ना॒सी॒री
ह॒विरि॒दं जु॑षस्व। वय॑स्सुप॒र्णा उप॑सेदु॒रिन्द्रँ॑म्।
प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः। अप॑ध्वा॒न्तमूँ॒र्णु॒हि
पू॒र्धि चक्षुः॑। मु॒मु॒ग्ध्य॑स्मान्नि॒धये॑ऽवब॒ध्दान्। बृ॒हदिन्द्रा॑य गायत ।।36।।
250804
मरु॑तो वृ॒त्र॒हन्त॑मम्। येन॒ज्योति॒रज॑ननृ॒ता॒वृधः॑। दे॒वं दे॒वाय॒ जागृ॑वि।
कामि॒हैका॒ᳲ कइ॒मे प॑त॒ङ्गाः। मा॒न्था॒लाᳲ कुलि॒परि॑मापतन्ती।
अना॑वृतैना॒न्प्रध॑मन्तु दे॒वाः। सौप॑र्णं॒ चक्षु॑स्त॒नुवा॑ विदेय। ए॒वाव॑न्दस्व॒
वरु॑णं बृ॒हन्तँ॑म्। न॒म॒स्याधीर॑म॒मृ त॑स्य॑ गो॒पाम्।
स
न॒श्शर्मँ॑त्रि॒वरू॑थं॒ वियᳲ॑सत् ।।37।।
250805
यू॒यं पा॑तस्व॒स्तिभि॒स्सदा॑नः। ना कें॑सुप॒र्णमु॒प यत्पत॑न्तम्। हृ॒दावेन॑न्तो
अ॒भ्यच॑क्षतत्वा। हिर॑ण्यपक्षं॑वरु॑णस्य दू॒तम्। य॒मस्य॒ योनौ॑ शकु॒नं भु॑र॒ण्युम्। शं
नोदे॑वीर॒भिष्ट॑ये। आपो॑ भवन्तु पी॒तये॑। शँय्योर॒भिस्र॑वन्तु नः।
ईशा॑ना॒वार्या॑णाम्। क्षय॑न्तीश्चर्षणी॒नाम् ।।38।।
250806
अ॒पो या॑चामि भेष॒जम्। अ॒प्सु मे॒सोमो॑ अब्रवीत्। अ॒न्तर्विश्वा॑नि भेष॒जा।
अ॒ग्निंच॑ वि॒श्वश॑म्भुवम्। आप॑श्च वि॒श्वभे॑षजीः। यद॒प्सुते॑ सरस्वति। गोष्वश्वे॑षु॒ यन्मधु॑।
तेन॑मेवाजिनीवति। मुख॑मङ्ग्धिसरस्वति। यासर॑स्वती वैशम्भ॒ल्या।।39।।
250807
तस्यां॑ मे रास्व। तस्याँ॑स्ते भक्षीय। तस्याँ॑स्ते भूयिष्ठ॒भाजो॑ भूयास्म।
अ॒हं त्वद॑स्मि॒ मद॑सि॒त्वमे॒तत्। ममा॑सि॒योनि॒स्तव॒ योनि॑रस्मि।

म॒मै॒वसन्व॑ह॒ह॒व्यान्य॑ग्ने। पु॒त्रᳶपि॒त्रेलो॑क॒कृज्जा॑तवेदः।
इ॒हैवसन्तत्र॒सन्तं॑ त्वाऽग्ने। प्रा॒णेन॑वा॒चा मन॑सा बिभर्मि।
ति॒रोमा॒सन्त॒मायु॒र्मा प्रहा॑सीत् ।।40।।
250808
ज्योति॑षात्वा वैश्वान॒रेणोप॑तिष्ठे। अ॒यंते॒ योनि॑र् ऋ॒त्वियः॑। यतो॑ जा॒तो अरो॑चथाः।
तंजा॒नन्न॑ग्न॒ आरो॑ह। अथा॑नो वर्धया॒रयिम्। या ते॑ अग्नेया॒ज्ञिया॑त॒नू
स्तयेह्यारो॑हा॒त्माऽऽत्मान॑᳚म्। अच्छा॒वसू॑नि कृ॒ण्वन्न॒स्मेनर्या॑पु॒रूणि॑।
य॒ज्ञो भू॒त्वा य॒ज्ञमासी॑द॒ स्वांयोनि॑᳚म्। जात॑वेदो॒ भुव॒ आजाय॑मान॒
स्सक्ष॑य॒ एहि॑। उ॒पाव॑रोह जातवेद॒ᳶ पुन॒स्त्वम् ।।41।।
250809
दे॒वेभ्यो॑ ह॒व्यं व॑ह नᳶ प्रजा॒नन्। आयु॑ᳶ प्र॒जाꣳ र॒यिम॒स्मासु॑ धेहि।
अज॑स्रोदीदिहिनोदु॒रो॒णे। तमिन्द्रं॑ जोहवीमिम॒घवा॑नमु॒ग्रम्।
स॒त्रादधा॑न॒मप्र॑तिष्कुत॒ꣳ॒ शवाꣳ॑सि। मꣳहि॑ष्ठोगी॒र्भि॑राच॑ य॒ज्ञियो॑ऽव॒वर्त॑त्।
रा॒येनो॒ विश्वा॑सुपथा॑ कृणोतुव॒ज्री। त्रिक॑द्रुकेषु महि॒षो यवा॑शिरं
तुवि॒शुष्म॑स्तृ॒पत्। सोम॑मपिब॒द्विष्णु॑ना सु॒तं यथाऽव॑शत्। स
ईं᳚ममादु॒महि॒ कर्म॒कर्त॑वे म॒हामु॒रुम् ।।42।।
250810
सैनꣳ॑ सश्चद्दे॒वं दे॒वस्स॒त्यमिन्दुꣳ॑ स॒त्य इन्द्रः॑। वि॒दद्यती॑
स॒रमा॑रु॒ग्णमद्रे᳚ः। महि॒ पाथ॑ᳶपू॒र्व्यꣳ
स॒द्रि॒ध्र्य॑क्कः। अग्रं॑नयथ्सु॒पद्यक्ष॑राणाम्। अच्छा॒रवं॑
प्रथ॒मा जा॑न॒तीगा॑त्। वि॒दद्गव्यꣳ॑ स॒रमा॑ दृ॒ढमू॒र्वम्।
येना॒नुकं॒मानु॑षी॒भोज॑ते॒विट्। आयेविश्वा᳚स्स्वप॒त्यानि॑च॒क्रुः। कृ॒ण्वा॒नासो॑
अमृत॒त्वाय॑गा॒तुम्। त्वंनृभि॑ र्नृपते दे॒वहू॑तौ ।।43।।
250811
भूरी॑णिवृ॒त्वाह॑र्यश्वहꣳ॑सि। त्वन्निद॑स्यु॒ञ्चुमु॑रिम्। धुनिं॒चा
स्वा॑पयोद॒भीत॑ये सु॒हन्तु॑। ए॒वापा॑हि प्र॒त्नथा॒मन्द॑तुत्वा। शु॒धिब्रह्म॑
वावृधस्वो॒तगी॒र्भिः। आ॒विस्सुर्यं᳚ कृणु॒हिपी॒पिहि॒षः। ज॒हि शत्रूꣳ॑र॒भिगा इन्द्र
तृन्धि। अग्ने॒ बाध॑स्व॒ विमृधो॑नुदस्व। अपामी॑वा॒ अप॒रक्षाꣳ॑सिसेध।
अ॒स्माथ्स॑मु॒द्राद्बृ॑ह॒तो दि॒वो नः॑ ।।44।।
250812
अ॒पांभू॒मान॒मुप॑नस्सृजे॒ह। यज्ञ॒प्रति॑तिष्ठ सुम॒तौ सु॒शेवा॒आत्वा᳚। वसू॑नि

पुरुधाविशन्तु। दीर्घमायुर्यजमानाय कृण्वन्। अधामृतेन
जरितारमङ्ग्धि। इन्द्रश्शुनावद्वितनोति सीरम्। संवथ्सरस्य
प्रतिमाणमेतत्। अर्कस्य ज्योतिस्तदिदासज्येष्ठम्। संवथ्सरः शुनवथ्सिर
मेतत्। इन्द्रस्य राधः प्रयतं पुरुत्मना। तदर्करूपं विमिमानमेति।
द्वादशारेप्रतितिष्ठतीद्वृषा। अश्वायन्तो गव्यन्तो वाजयन्तः।
हवामहेत्वोपगन्तवा उ । आभूषन्तस्त्वासुमतौ नवायाम्। वयमिन्द्रत्वाशुनः हुवेम ।।45।।
250800
अर्चतहविर्गायत यः सञ्चर् षणीनां वैशम्भल्याहासित्त्वमुरुं देवहूतौ नस्त्मना षट्च ।।8।।
250000
प्राणउदेहि पुनरानो भरयज्ञोरायो वार्त्रहत्याय वसूनाः
सईपाह्यष्टौ ।।8।।
प्राणोरक्षत्यगृभीता धारावरामरुतो दीर्घायुत्वायज्योतिषात्वा पञ्च चत्वारिंशत् ।।45।।
प्रणश्शुनः हुवेम हरिःओम्।। श्रीकृष्णार्पणमस्तु।। पञ्चमप्रपाठकस्समाप्तः।।

260000

।। षष्ठ प्रपाठक प्रारम्भः ।। हरिः ओम् ।।

260101

स्वा॒द्वीं त्वा᳚ स्वा॒दुना᳚। ती॒व्रां ती॒व्रेण॑। अ॒मृता॑म॒मृते॑न।

मधु॑मती॒ं मधु॑मता। सृ॒जामि॒ सꣳ सोमे॑न। सोमो᳚ऽस्य॒श्विभ्यां᳚ पच्यस्व।

सर॑स्वत्यै पच्यस्व। इन्द्रा॑य सु॒त्राम्णे॑ पच्यस्व।

प॒रीतोषि॑ञ्चता सु॒तम्। सोमो॒ य उ॑त्त॒मꣳ ह॒विः ।।1।।

260102

द॒ध॒न्वा यो नर्यो॑ अ॒प्स्व॑न्तरा। सु॒षाव॒ सोम॒मद्रि॑भिः। पु॒नातु॑ ते परि॒स्रुत᳚म्। सोम॒ꣳ॒

सूर्य॑स्य दुहि॒ता। वारे॑ण॒ शश्श्व॑ता॒ तना᳚। वा॒युᳶ पू॒तᳶ प॒वित्रे॑ण।

प्राङ्ख्सोमो॒ अति॑द्रुतः। इन्द्र॑स्य॒ युज्य॒स्सखा᳚। वा॒युᳶ पू॒तᳶ प॒वित्रे॑ण।

प्र॒त्यङ्ख्सोमो॒ अति॑द्रुतः ।।2।।

260103

इन्द्र॑स्य॒ युज्य॒स्सखा᳚। ब्रह्म॑ क्ष॒त्रं प॑वते॒ तेज॑ इन्द्रि॒यम्।

सुर॑या॒ सोम॑स्सु॒त आसु॑तो॒ मदा॑य। शु॒क्रेण॑ देव दे॒वता᳚ᳶ पिपृग्धि।

रसे॒नान्नं॒ यज॑मानाय धेहि। कु॒विद॒ङ्ग यव॑मन्तो॒ यवं॑चित्।

यथा॒दान्त्य॑नुपू॒र्वं वि॒यूय॑। इ॒हेहै॑षां

कृ॒णुत॒ भोज॑नानि। ये ब॒र्हिषो॒ नमो॑वृक्तिं॒ न ज॒ग्मुः।

उ॒प॒या॒मगृ॑हीतोऽस्य॒श्विभ्यां᳚ त्वा॒ जुष्टं॑ गृह्णामि।।3।।

260104

सर॑स्वत्या॒ इन्द्रा॑य सु॒त्राम्णे᳚। ए॒ष ते॒ योनि॒स्तेज॑से त्वा। वी॒र्या॑य त्वा॒

बला॑य त्वा। तेजो॑ऽसि॒ तेजो॒ मयि॑ धेहि। वी॒र्य॑मसि वी॒र्यं॑ मयि॑ धेहि। बल॑मसि॒

बलं॒ मयि॑ धेहि। नाना॒ हि वां᳚ दे॒वहि॑त॒ꣳ॒ सद॑ᳵ कृ॒तम्। मा सꣳसृ॑क्षाथां

पर॒मे व्यो॑मन्। सु॒रा त्वमसि॑ शु॒ष्मिणी॒ सोम॑ ए॒षः। मा मा॑ हिꣳसी॒स्स्वां

योनि॑मावि॒शन् ।।4।।

260105

उ॒प॒या॒मगृ॑हीतोऽस्याश्वि॒नं तेज॑ः। सा॒र॒स्व॒तं

वी॒र्य᳚म्। ऐ॒न्द्रं बल᳚म्। ए॒ष ते॒ योनि॒र्मोदा॑य त्वा। आ॒न॒न्दाय॑ त्वा॒

मह॑से त्वा। ओजो॒ऽस्योजो॒ मयि॑ धेहि। म॒न्युर॑सि म॒न्युं मयि॑ धेहि।

महो॑ऽसि॒ महो॒ मयि॑ धेहि। सहो॑ऽसि॒ सहो॒ मयि॑ धेहि। या व्या॒घ्रं

विषू॑चिका। उ॒भौ वृकं॑ च॒ रक्ष॑ति। श्ये॒नं प॑त॒त्रिणꣳ॑ सि॒ꣳहम्। सेमं

पा॒त्वꣳह॒ꣳसः। सं॒पृच॑स्स्थ॒ सं मा॑ भ॒द्रेण॑ पृङ्क्त। वि॒पृच॑स्स्थ॒ वि मा॑ पा॒प्मना॑ पृङ्क्त ।।5।।
260100
ह॒विः॰ प्र॒त्यङ्ङ्ख्सोमो॒ अति॑द्रुतो गृह्णाम्यावि॒शन्विषू॑चि॒का पञ्च॑ च ।।1।।
260201
सोमो॒ राजा॒ऽमृतꣳ॑ सु॒तः। ऋ॒जी॒षेणा॑जहान्मृ॒त्युम्।
ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्। विपानꣳ॑ शु॒क्रमन्ध॑सः।
इन्द्र॑स्येन्द्रि॒यम्। इ॒दं पयो॒ऽमृतं॒
मधु॑। सोम॑म॒द्भ्यो व्य॑पिबत्। छन्द॑सा ह॒ꣳसश्शु॑चि॒षत्।
ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्। अ॒द्भ्यः ख्षी॒रव्व्य॑पिबत् ।।6।।
260202
क्रुङ्ङाङ्गि॒रसो धि॒या। ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्।
अन्ना॑त्परि॒स्रु॒तो॒ रस॑म्। ब्रह्म॑णा॒ व्य॑पिबत् ख्ष॒त्रम्। ऋ॒तेन॑
स॒त्यमि॑न्द्रि॒यम्। रेत॒ो मूत्र॒व्विज॑हाति। योनि॑ं प्रवि॒शदि॑न्द्रि॒यम्।
गर्भो॑ ज॒रायु॒णाऽऽवृ॑तः। उल्ब॑ञ्जहाति॒ जन्म॑ना। ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् ।।7।।
260203
वेदे॑न रू॒पे व्य॑करोत्। स॒ता॒स॒ती प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्।
सोमे॑न॒ सोमौ॒ व्य॑पिबत्। सु॒ता॒सु॒तौ प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्।
दृ॒ष्ट्वा रू॒पे व्याक॑रोत्। स॒त्या॒नृ॒ते प्र॒जाप॑तिः। अश्र॑द्धामनृ॒तेऽद॑धात्।
श्र॒द्धाꣳ स॒त्ये प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्। दृ॒ष्ट्वा प॑रि॒स्रु॒तो॒ रस॑म्।
शु॒क्रेण॑ शु॒क्रव्व्य॑पिबत्। पय॒स्सोम॑ं प्र॒जाप॑तिः। ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम्।
विपानꣳ॑ शु॒क्रमन्ध॑सः। इन्द्र॑स्येन्द्रि॒यम्। इ॒दं पयो॒ऽमृतं॒ मधु॑ ।।8।।
260200
अ॒द्भ्यः ख्षी॒रव्व्य॑पिब॒ज्जन्म॑न॒र्तेन॑
स॒त्यमि॑न्द्रिय श्र॒द्धाꣳ स॒त्ये प्र॒जाप॑तिर॒ष्टौ च॑ ।।2।।
260301
सुरा॑वन्तं बर्हि॒षदꣳ॑ सु॒वीर॑म्। य॒ज्ञꣳ हि॑न्वन्ति
महि॒षा नमो॑भिः। दधा॑ना॒स्सोम॑न्दि॒वि दे॒वता॑सु।
मदे॒मेन्द्र॒य्यँज॑मानास्स्व॒र्काः। यस्ते॒ रस॒स्सम्भृ॑त॒ ओष॑धीषु।
सोम॑स्य॒ शुष्म॒स्सुर॑या सु॒तस्य॑।
तेन॑ जिन्व॒ यज॑मानं॒ मदे॑न। सर॑स्वतीम॒श्विना॒विन्द्र॑म॒ग्निम्।
यम॒श्विना॒ नमु॑चेरासु॒रादधि॑। सर॑स्व॒त्यस॑नोदिन्द्रि॒याय॑ ।।9।।
260302

इ॒मन्तꣳ शु॒क्रं मधु॑मन्त॒मिन्दु᳚म्। सोम॒ꣳ॒ राजा॑नमि॒ह भ॑क्षयामि।
यद॑त्र रि॒प्तꣳ र॒सिन॑स्सु॒तस्य॑। यदिन्द्रो॒ अपि॑ब॒च्छची॑भिः।
अ॒हन्तद॑स्य॒ मन॑सा शि॒वेन॑ । सोम॒ꣳ॒ राजा॑नमि॒ह भ॑क्षयामि।
पि॒तृभ्य॑स्स्वधा॒विभ्य॑स्स्व॒धा नम॑ः। पि॒ता॒म॒हेभ्य॑स्स्वधा॒विभ्य॑स्स्व॒धा नम॑ः।
प्रपि॑तामहेभ्यस्स्वधा॒विभ्य॑स्स्व॒धा नम॑ः। अक्ष॑न्पि॒तर॑ः।।10।।
260303
अमी॑मदन्त पि॒तर॑ः। अती॑तृपन्त पि॒तर॑ः। अमी॑मृजन्त पि॒तर॑ः। पित॑र॒श्शुन्ध॑ध्वम्।
पु॒नन्तु॑ मा पि॒तर॑स्सो॒म्यास॑ः। पु॒नन्तु॑ मा पिताम॒हाः। पु॒नन्तु॒ प्रपि॑तामहाः।
प॒वित्रे॑ण श॒तायु॑षा। पु॒नन्तु॑ मा पिताम॒हाः। पु॒नन्तु॒ प्रपि॑तामहाः ।।11।।
260304
प॒वित्रे॑ण श॒तायु॑षा। विश्व॒मायु॒र्व्य॑श्ञवै। अग्न॒ आयू॑ꣳषि पव॒सेऽग्ने॒ पव॑स्व।
पव॑मान॒स्सुव॒र्जन॑ᳶ पु॒नन्तु॑ मा देवज॒नाः। जात॑वेदᳶ
प॒वित्र॑व॒द्यत्ते॑ प॒वित्र॑म॒र्चिषि॑। उ॒भाभ्या᳚न्देव सवितर्वै᳚श्वदे॒वी पु॑न॒ती।
ये स॑मा॒नास्सम॑नसः। पि॒तरो॑ यम॒राज्ये᳚। तेषा᳚ँल्लो॒कस्स्व॒धा नम॑ः। य॒ज्ञो दे॒वेषु॑ कल्पताम्।।12।।
260305
ये स॑ञ्जा॒तास्सम॑नसः। जी॒वा जी॒वेषु॑ माम॒काः।
तेषा॒ꣳ॒ श्रीर्मयि॑ कल्पताम्। अ॒स्मिँल्लो॒के श॒तꣳ समा᳚ः। द्वे स्रु॒ती अ॑शृणवं पितृ॒णाम्।
अ॒हन्दे॒वाना॑मु॒त मर्त्या॑नाम्। याभ्या॑मि॒दँव्विश्व॒मेज॒त्समे॑ति।
यद॑न्त॒रा पि॒तरं॑ मा॒तर॑ञ्च। इ॒दꣳ ह॒विᳶ प्र॒जन॑नं मे अस्तु। दश॑वीरꣳ स॒र्वग॑ण
स्व॒स्तये᳚। आ॒त्म॒सनि॑ प्रजा॒सनि॑। प॒शु॒सन्य॑भय॒सनि॑ लोक॒सनि॑। अ॒ग्निᳶ
प्र॒जां ब॑हु॒लां मे॑ करोतु। अन्न॒ं पयो॒ रेतो॑ अ॒स्मासु॑ धत्त।
रा॒यस्पोष॒मिष॒मूर्ज॑म॒स्मासु॑ दीधर॒थ्स्वाहा᳚ ।।13।।
260300
इ॒न्द्रि॒याय॑ पि॒तर॑श्श॒तायु॑षा पु॒नन्तु॑ मा पिताम॒हाᳶ
पु॒नन्तु॒ प्रपि॑तामहाᳵ कल्पताꣳ स्व॒स्तये॒ पञ्च॑ च ।।3।।
260401
सीसे॑न॒ तन्त्र॒ं मन॑सा मनी॒षिण॑ः। ऊ॒र्णा॒सू॒त्रेण॑ क॒वयो॑ वयन्ति। अ॒श्विना॑
य॒ज्ञꣳ स॑वि॒ता सर॑स्वती। इन्द्र॑स्य रू॒पं वरु॑णो भिष॒ज्यन्। तद॑स्य रू॒पम॒मृत॒ꣳ॒ शची॑भिः।
ति॒स्रोऽद॑धुर्दे॒वता᳚ँस्सꣳर॒राणाः। लोमा॑नि॒ शष्पै᳚र्बहु॒धा न तोक्म॑भिः।
त्वग॑स्य मा॒ꣳ॒सम॑भव॒न्न ला॒जाः। तद॒श्विना॑ भि॒षजा॑ रु॒द्रव॑र्तनी। सर॑स्वती वयति॒
पेशो॒ अन्त॑रः ।।14।।

260402
अस्थि॑ म॒ज्जानं॒ मास॑रैः। का॒रो॒त॒रेण॒ दध॑तो॒ गवा॒न्त्व॒चि। सर॑स्वती॒ मन॑सा पेश॒लव्वँसु॑।
नास॑त्याभ्यां वयति द॒र्श॒तव्वँपुः॑। रसं॑ परि॒स्रुता॒ न रोहि॑तम्।
न॒ग्नहु॒र्धीर॒स्तस॑र॒न्न वेम॑। पय॑सा शु॒क्रम॒मृत॑ञ्ज॒नित्र॒म्। सुर॑या॒ मूत्रा॑ज्जनयन्ति॒
रेतः॑। अपाम॑तिन्दु॒र्म॒तिं बाध॑मानाः। ऊव॑ध्य॒व्वाँतः॑ स॒बुव॒न्तद॒ारात्। ।।15।।
260403
इन्द्र॑स्सु॒त्रामा॒ हृद॑येन स॒त्यम्। पु॒रो॒डाशे॑न सवि॒ता ज॑जान।
यकृ॑त्क्लोमान॒व्वँरु॑णो भिष॒ज्यन्। मत॑स्ने वाय॒व्यै॑र्न मि॑नाति पि॒त्तम्। आ॒न्त्राणि॑ स्था॒ली
मधु॒ पिन्व॑माना। गु॒दा॒ पात्रा॑णि सु॒दु॒घा न धे॒नुः। श्ये॒नस्य॒ पत्र॒न्न प्ली॒हा शची॑भिः।
आ॒स॒न्दी नाभि॑रु॒द॒र॒न्न मा॒ता। कु॒म्भो व॑नि॒ष्ठुर्ज॑नि॒ता शची॑भिः।
यस्मि॒न्नग्रे॒ योन्या॒ङ्गर्भो॑ अ॒न्तः। ।।16।।
260404
प्ला॒शीर्व्य॑क्तश्श॒तधा॑र॒ उत्सः॑। दु॒हे न कु॒म्भीः॑ स्व॒धां पि॒तृभ्यः॑। मु॒ख॒ꣳ सद॑स्य॒
शिर॒ इथ्सदे॑न। जि॒ह्वा प॒वित्र॑म॒श्विना॒ सꣳ सर॑स्वती। चप्प॒न्न पा॒युर्भि॒षग॑स्य॒ वालः॑।
व॒स्तिर्न शेपो॒ हर॑सा तर॒स्वी। अ॒श्विभ्या॒ञ्चक्षु॒र॒मृतं॒ ग्रहा॑भ्याम्। छागे॑न॒ तेजो॑
ह॒विषा॑ शृ॒तेन॑। पक्ष्मा॑णि गो॒धूमैः॑ क्व॑लैरु॒तानि॑। पेशो॒ न शु॒क्लमसि॑तव्वँसाते ।।17।।
260405
अवि॒र्न मे॒षो न॒सि वी॒र्या॑य। प्रा॒णस्य॒ पन्था॑ अ॒मृतो॒
ग्रहा॑भ्याम्। सर॑स्व॒त्युप॒वाकै॑र्व्या॒नम्। नस्या॑नि ब॒र्हिर्बद॑रैर्जजान। इन्द्र॑स्य
रू॒पमृ॑ष॒भो बला॑य। कर्णा॑भ्या॒ꣳ श्रोत्र॑म॒मृत॒ङ्ग्रहा॑भ्याम्।
यवा॒ न ब॒र्हिर्भ्रु॒वि केस॑राणि। कु॒र्कन्धु॒ जज्ञे॒ मधु॒ सार॒घं
मु॒खा॑त्। आ॒त्मन्नु॒पस्थे॒ न वृक॑स्य॒ लोम॑। मु॒खे॒ श्मश्रू॑णि॒ न व्या॑घ्रल॒ोमम्। ।।18।।
260406
केशा॒ न शी॒र्षन् यश॑से श्रि॒यै शिखा॑। सि॒ꣳहस्य॒ लोम॒ त्विषि॑रिन्द्रि॒याणि॑।
अङ्गा॑न्या॒त्मन्भि॒षजा॒ तद॒श्विना॑। आ॒त्मान॒मङ्गै॒स्सम॑धा॒थ्सर॑स्वती। इन्द्र॑स्य
रू॒पꣳ श॒तमा॑न॒मायुः॑। च॒न्द्रेण॒ ज्योति॑र॒मृत॒न्दधा॑ना।
सर॑स्वती॒ योन्या॒ङ्गर्भ॑म॒न्तः। अ॒श्विभ्या॒ं पत्नी॒ सुकृ॑तं
बिभर्ति। अ॒पाꣳ रसे॑न॒ वरु॑णो॒ न साम्ना॑। इन्द्र॑ श्रि॒ये
ज॒नय॑न्न॒प्सु राजा॑। तेजः॑ पशू॒नाꣳ ह॒विरि॑न्द्रि॒याव॑त्।
प॒रि॒स्रुता॒ पय॑सा सार॒घं मधु॑। अ॒श्विभ्या॒न्दुग्धं॑ भि॒षजा॒
सर॑स्वत्या सुतासु॒ताभ्या॑म्। अ॒मृत॒स्सोम॒ इन्दुः॑ ।।19।।

260400
अन्त॑र आ॒राद॒न्तर्व॑साते व्याघ्रलो॒मः॒ राजा॑ च॒त्वारि॑ च ।।4।।
260501
मि॒त्रो॑ऽसि॒ वरु॑णोऽसि। सम॒हं विश्वै᳚र्दे॒वैः। ख्ष॒त्रस्य॒
नाभि॑रसि। ख्ष॒त्रस्य॒ योनि॑रसि। स्यो॒नामा सीद॑। सु॒षदा॒मा सीद॑।
मा त्वा॑ हिꣳसीत् । मा मा॑ हिꣳसीत्। निष॑साद धृ॒तव्र॑तो॒ वरु॑णः। पु॒स्त्या᳚स्वा ।।20।।
260502
साम्रा᳚ज्याय सु॒क्रतुः॑। दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे।
अ॒श्विनो᳚र्बा॒हुभ्या᳚म्। पू॒ष्णो हस्ता᳚भ्याम्।
अ॒श्विनो॒र्भैष॑ज्येन। तेज॑से ब्रह्मवर्च॒साया॒भिषि॑ञ्चामि।
दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे।
अ॒श्विनो᳚र्बा॒हुभ्या᳚म्। पू॒ष्णो हस्ता᳚भ्याम्। सर॑स्वत्यै॒ भैष॑ज्येन ।।21।।
260503
वी॒र्या॑या॒न्नाद्या॑या॒भिषि॑ञ्चामि। दे॒वस्य॑ त्वा
सवि॒तुः प्र॑स॒वे। अ॒श्विनो᳚र्बा॒हुभ्या᳚म्। पू॒ष्णो
हस्ता᳚भ्याम्। इन्द्र॑स्येन्द्रि॒येण॑। श्रि॒यै यश॑से॒
बला॑या॒भिषि॑ञ्चामि। को॑ऽसि कत॒मो॑ऽसि। कस्मै᳚ त्वा॒ काय॑
त्वा। सुश्लो॒काँ (4) सुम॑ङ्ग॒लाँ (4) सत्य॑रा॒जा (3) न्। शिरो॑ मे॒ श्रीः ।।22।।
260504
यशो॒ मुख᳚म्। त्विषिः॒ केशा᳚श्च॒ श्मश्रू᳚णि।
राजा॑ मे प्रा॒णो॑ऽमृत᳚म्। स॒म्राट्चख्षुः॑। वि॒राट्छ्रोत्र᳚म्।
जि॒ह्वा मे॑ भ॒द्रम्। वाङ्महः॑। मनो॑म॒न्युः। स्व॒राड्भामः॑।
मोदाः᳚ प्रमो॒दा अ॒ङ्गु॒लीरङ्गा॑नि ।।23।।
260505
चि॒त्तं मे॒ सहः॑।
बा॒हू मे॒ बल॑मिन्द्रि॒यम्। हस्तौ॑ मे॒ कर्म॑ वी॒र्य᳚म्। आ॒त्मा
ख्ष॒त्रमुरो॒ मम॑। पृष्टीर्मे॑ रा॒ष्ट्रमु॒दर॒मꣳसौ᳚। ग्री॒वाश्च॒
श्रोण्यौ᳚। ऊ॒रू अ॑र॒त्नी जानू॑नी। विशो॒ मेऽङ्गा॑नि स॒र्वतः॑।
नाभि॑र्मे चि॒त्तँव्वि॒ज्ञान᳚म्। पा॒युर्मेऽप॑चितिर्भ॒सत्।।24।।
260506
आ॒न॒न्द॒न॒न्दावा॒ण्डौ मे᳚। भग॒स्सौभा᳚ग्यं॒
पसः॑। जङ्घा᳚भ्यां प॒द्भ्यां धर्मो᳚ऽस्मि। वि॒शि राजा॒ प्रति॑ष्ठितः।

प्रति॑ ख्ष॒त्रे प्रति॑तिष्ठामि रा॒ष्ट्रे।

प्रत्यश्वे॑षु प्रति॑तिष्ठामि॒ गोषु॑। प्रत्यङ्गे॑षु

प्रति॑तिष्ठाम्या॒त्मन्। प्रति॑ प्रा॒णेषु॑

प्रति॑तिष्ठामिपु॒ष्टे। प्रति॒ द्यावा॑पृथि॒व्योः।

प्रति॑तिष्ठामि य॒ज्ञे ।।25।।

260507

त्र॒या दे॒वा एका॑दश। त्र॒य॒स्त्रि॒ꣳ॒शास्सु॒राध॑सः। बृह॒स्पति॑पुरोहिताः।

दे॒वस्य॑ सवि॒तुस्स॒वे। दे॒वा दे॒वैर॑वन्तु मा। प्र॒थ॒मा द्वि॒तीयैः॑।

द्वि॒तीया॑स्तृ॒तीयैः॑। तृ॒तीया॑स्स॒त्येन॑। स॒त्यय्ँ॑ य॒ज्ञेन॑। य॒ज्ञो यजु॑र्भिः ।।26।।

260508

यजूꣳ॑षि॒ साम॑भिः। सामा॑न्यृ॒ग्भिः। ऋचो॑ या॒ज्या॑भिः। या॒ज्या॑ वषट्का॒रैः। व॒ष॒ट्का॒रा आहु॑तिभिः।

आहु॑तयो मे॒ कामा॒न्थ्सम॑र्धयन्तु। भूस्स्वाहा॑। लोमा॑नि॒

प्रय॑ति॒र्मम॑। त्वङ्म॒ आन॑ति॒राग॑तिः। मा॒ꣳ॒सं म॒ उप॑नतिः। वस्वस्थि॑। म॒ज्जा म॒ आन॑तिः। ।।27।।

260500

पु॒स्त्या॑स्वा सर॑स्वत्यै॒ भैष॑ज्येन॒ श्रीरङ्गा॑नि भ॒सद्य॒ज्ञे य॒ज्ञो

यजु॑र्भि॒रुप॑नति॒र्द्वे च॑ ।।5।।

260601

यद्दे॑वा देव॒हेड॑नम्। देवा॑सश्चकृ॒मा व॒यम्। अ॒ग्निर्मा॒

तस्मा॒देन॑सः। विश्वा॑न्मुञ्च॒त्वꣳ॒ह॑सः। यदि॒ दिवा॒ यदि॒ नक्त॑म्।

एनाꣳ॑सि चकृ॒मा व॒यम्। वा॒युर्मा॒ तस्मा॒देन॑सः।

विश्वा॑न्मुञ्च॒त्वꣳ॒ह॑सः। यदि॒ जाग्र॒द्यदि॒ स्वप्ने॑। एनाꣳ॑सि चकृ॒मा व॒यम् ।।28।।

260602

सूर्यो॑ मा॒ तस्मा॒देन॑सः। विश्वा॑न्मुञ्च॒त्वꣳ॒ह॑सः। यद्ग्रामे॒ यदर॑ण्ये। यथ्स॒भाया॒ँ

य्यदि॑न्द्रि॒ये। यच्छू॒द्रे यद॒र्ये॑। एन॑श्चकृ॒मा व॒यम्।

यदेक॒स्याधि॒ धर्म॑णि। तस्या॑व॒यज॑नमसि। यदापो॒ अघ्नि॑या॒ वरु॒णेति॒

शपा॑महे। ततो॑ वरुण नो मुञ्च ।।29।।

260603

अव॑भृथ निचङ्कुण निचे॒रुर॑सि निचङ्कुण। अव॑ दे॒वैर्दे॒वकृ॑त॒मेनो॑ऽयाट्। अव॒ मर्त्यै॒र्मर्त्य॑कृतम्।

उ॒रोरा नो॑ देव रि॒षस्पा॑हि। सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु।

दु॒र्मि॒त्रास्तस्मै॑ भूयासुः। यो॑ऽस्मान्द्वेष्टि॑। यञ्च॑

व॒यन्द्वि॒ष्मः। द्रु॒प॒दादि॒वेन्मु॑मुचा॒नः। स्वि॒न्नस्स्ना॒त्वी मला॑दिव ।।30।।

260604

पू॒तं प॒वित्रे॑ण॒वाज्य॒᳚म्। आप॑श्शुन्धन्तु॒ मैन॑सः।
उद्व॒यन्तम॑स॒स्परि॑। पश्य॑न्त॒ो ज्योति॒रुत्त॑रम्। दे॒वन्दे॑व॒त्रा
सूर्य॒᳚म्। अग॑न्म॒ ज्योति॑रुत्त॒मम्। प्रति॑युत॒ो वरु॑णस्य॒ पाश॑ः।
प्रत्य॑स्त॒ो वरु॑णस्य॒ पाश॑ः। एधो᳚ऽस्येधिषी॒महि॑। स॒मिद॑सि ।।31।।
260605
तेजो॑ऽसि॒ तेज॒ो मयि॑ धेहि। अ॒पो अन्व॑चारिषम्। रसे॑न॒ सम॑सृख्स्महि।
पय॑स्वाꣳ अग्न॒ आग॑मम्। तं मा॒ सꣳसृ॑ज॒ वर्च॑सा। प्र॒जया॑ च॒
धने॑न च। स॒माव॑वर्ति पृथि॒वी। सम॒ुषाः। सम॒ु सूर्य॑ः। सम॒ु
विश्व॑मि॒दञ्जग॑त्। वै॒श्वा॒न॒रज्यो॑तिर्भूयासम्। वि॒भुङ्का॒म॒व्य॑श्ञवै। भूस्स्वाहा᳚ ।।32।।
260600
स्वप्न॒ एनाꣳ॑सि चकृ॒मा व॒यं मु॑ञ्च॒ मला॑दिव स॒मिद॑सि॒ जग॒त्त्रीणि॑ च ।।6।।
260701
होता॑ यख्स॒थ्स॒मिधेन्द्र॑मि॒डस्प॒दे। नाभा॑ पृथि॒व्या अधि॑।
दि॒वो वर्ष्म॒न्थ्समि॑ध्यते। ओजि॑ष्ठश्चर्॒षणी॒ सहान्॑।
वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यख्स॒त्तनू॒नपा॑तम्।
ऊ॒तिभि॒र्जेता॑र॒मप॑राजितम्। इन्द्र॑न्दे॒वꣳ
सु॑व॒र्विद॒᳚म्। प॒थिभि॒र्मधु॑मत्तमैः। न॒राशꣳसे॑न॒ तेज॑सा।।33।।
260702
वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑यख्स॒दिडा॑भि॒-
रिन्द्र॑मीडि॒तम्। आ॒जुह्वा॑न॒मम॑र्त्यम्। दे॒वो दे॒वैस्सवी᳚र्य॑ः।
वज्र॑हस्तः॒ पुरन्द॒रः। वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑
यख्स॒द्ब॒र्॒हिषीन्द्र॑न्निषद्व॒रम्। वृ॒ष॒भन्नर्या॑पसम्।
वसु॑भीरु॒द्रैरा॑दि॒त्यैः। स॒युग्भि॑र्ब॒र्॒हिरास॑दत् ।।34।।
260703
वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यख्स॒दोज॒ो न वी॒र्य॒᳚म् ।
सह॒ो द्वार॒ इन्द्र॑मवर्धयन्न्। सु॒प्रा॒य॒णा विश्र॑यन्तामृत॒ावृध॑ः।
द्वार॒ इन्द्रा॑य मी॒ढुषे᳚। वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑।
होता॑ यख्स॒दुषे इन्द्र॑स्य धे॒नू। सु॒दुघे॑ मा॒तरौ॑ म॒ही।
सव॒ातर॒ौ न तेज॑सी। व॒थ्समिन्द्र॑मवर्धताम् ।।35।।
260704
वी॒तामाज्य॑स्य॒ होत॒र्यज॑। होता॑ यख्स॒द्दैव्या॒ होता॑रा।

भि॒षजा॒ सखा॑या। ह॒विषेन्द्रं॑ भिषज्यतः। क॒वी दे॒वौ प्रचे॑तसौ।
इन्द्रा॑य धत्त इन्द्रि॒यम्। वी॒तामाज्य॑स्य॒ होत॒र्यज॑। होता॑
यख्षत्ति॒स्रो दे॒वीः। त्रय॑स्त्रि॒धात॑वो॒पस॑ः। इडा॒ सर॑स्वती॒
भार॑ती ।।36।।
260705
म॒हीन्द्र॑पत्नीर्ह॒विष्म॑तीः। वि॒यन्त्वाज्य॑स्य॒
होत॒र्यज॑। होता॑ यख्ष॒त्त्वष्टा॑र॒मिन्द्र॒न्दे॒वम्।
भि॒षजꣳ॑ सु॒यज॑ङ्घृत॒श्रिय॑म्। पु॒रु॒रूपꣳ॑
सु॒रेत॑सं म॒घोन॑म्। इन्द्रा॑य॒ त्वष्टा॒
दध॑दिन्द्रि॒याणि॑। वेत्वाज्य॑स्य॒ होत॒र्यज॑।
होता॑ यख्ष॒द्वन॒स्पति॑म्। श॒मि॒तारꣳ॑ श॒तक्र॑तुम्।
धि॒यो जो॒ष्टार॑मिन्द्रि॒यम् ।।37।।
260706
मध्वा॑ सम॒ञ्जन् प॒थिभि॑स्सु॒गेभि॑ः। स्वदा॑ति ह॒व्यं मधु॑ना घृ॒तेन॑।
वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यख्ष॒दिन्द्र॒ स्वाहाऽऽज्य॑स्य।
स्वाह॒ मेद॑सः। स्वाहा॑ स्त॒ोकाना॑म्। स्वाह॒ स्वाहा॑कृतीनाम्। स्वाहा॑
ह॒व्यसू॑क्तीनाम्। स्वाहा॑ दे॒वाꣳ आ॑ज्य॒पान्। स्वाहेन्द्रꣳ॑
हो॒त्राज्जु॒षा॒णाः। इन्द्र॒ आज्य॑स्य वियन्तु। होत॒र्यज॑ ।।38।।
260700
तेज॑साऽऽसददवर्धता॒ं भार॑तीन्द्रि॒यञ्जु॒षा॒णा द्वे च॑ ।।7।।
260801
स॒मिधेन्द्र॒न्तनू॒नपा॑त॒मिडा॑भिर्ब॒र्हि॒ष्योज॑ उ॒षे दैव्या॑
ति॒स्रस्त्वष्टा॑र॒व्वँ॑न॒स्पति॒मिन्द्र॑म्।।
स॒मिधेन्द्र॑श्च॒तुर्वे॑त्वेको॑ वि॒यन्तु॒ द्विर्वी॒तामेको॑
वि॒यन्तु॒ द्विर्वे॑त्वेको॑ वि॒यन्तु॒ होत॒र्यज॑।।
समि॑द्ध इन्द्र॑ उ॒षसा॒मनी॑के। पु॒रो॒रुचा॑ पू॒र्व॒कृद्वा॑वृ॒धा॒नः।
त्रि॒भिर्दे॒वैस्त्रि॒ꣳ॒शता॒ वज्र॑बाहुः। ज॒घान॑ वृ॒त्रँ॑व्वि दुरो॑
ववार। न॒रा॒शꣳस॒꣸ प्रति॒शू॒रो मिमा॑नः। तनू॒नपा॒त्प्रति॑ य॒ज्ञस्य॒
धाम॑। गोभि॑र्व॒पाव॒ान्मधु॑ना सम॒ञ्जन्। हिर॑ण्यैश्च॒न्द्री
य॑जति॒ प्रचे॑ताः। ई॒डि॒तो दे॒वैर्हरि॑वाꣳ अभि॒ष्टिः। आ॒जुह्वा॑नो
ह॒विषा॒ शर्ध॑मानः ।।39।।

260802
पु॒र॒न्द॒रो म॒घवा॑न् वज्र॑बाहुः।
आया॑तु य॒ज्ञमुप॑नो जु॒षा॒णः। जु॒षा॒णो ब॒र्॒हिर्हरि॑वान्न॒ इन्द्रः॑।
प्रा॒चीनꣳ॑ सीदत्प्र॒दिशा॑ पृथि॒व्याः। उ॒रु॒व्यचा॒ᳲ प्रथ॑मान
स्यो॒नम्। आ॒दि॒त्यैर॒क्तव्वँ॑सुभिस्स॒जोषाः॑। इन्द्र॒न्दुर॒ᳲ
कव॒ष्यो॑ धाव॑मानाः। वृषा॑णय्यँन्तु॒ जन॑यस्सु॒पत्नीः॑। द्वारो॑
दे॒वीर॒भितो॒ विश्र॑यन्ताम्। सु॒वीरा॑ वी॒रं प्रथ॑माना॒ महो॑भिः ।।40।।
260803
उ॒षासा॒नक्ता॑ बृह॒ती बृ॒हन्त॑म्। पय॑स्वती सु॒दु॒घे॒ शूर॒मिन्द्र॑म्।
पेश॑स्वती॒ तन्तु॑ना स॒व्व्यँय॑न्ती। दे॒वाना॑न्दे॒वय्यँ॑जतः
सुरु॒क्मे। दैव्या॒ मिमा॑ना॒ मन॑सा पुरु॒त्रा। होता॑रा॒विन्द्रं॑
प्रथ॒मासु॒वाचा॑। मू॒र्धन् य॒ज्ञस्य॒ मधु॑ना॒ दधा॑ना।
प्रा॒चीन॒ञ्ज्योति॑र् ह॒विषा॑वृधातः। ति॒स्रो दे॒वीर् ह॒विषा॒
वर्ध॑मानाः। इन्द्र॑ञ्जु॒षा॒णा वृष॑ण॒न्न पत्नीः॑ ।।41।।
260804
अच्छि॑न्न॒न्तन्तुं॑ पय॑सा॒ सर॑स्वती। इडा॑ दे॒वी भार॑ती
वि॒श्वतू॑र्तिः। त्वष्टा॒ दध॒दिन्द्रा॑य॒ शुष्म॑म्।
अपा॒कोचि॑ष्टुर्य॒शसे॑ पु॒रूणि॑। वृ॒षायज॒न्वृष॑णं॒ भूरि॑रेताः।
मू॒र्धन् य॒ज्ञस्य॒ सम॑नक्तु दे॒वान्। वन॒स्पति॒रव॑सृष्टो न पाशैः॑।
त्मन्या॑ सम॒ञ्जञ्छ॑मि॒ता न दे॒वः। इन्द्र॑स्य ह॒व्यैर्ज॒ठरं॑ पृणा॒नः।
स्वदा॑ति ह॒व्यं मधु॑ना घृ॒तेन॑। स्तो॒काना॒मिन्दुं॒ प्रति॒ शूर॒
इन्द्रः॑। वृ॒षायमा॑णो वृष॒भस्तु॑रा॒षाट्। घृ॒त॒प्रुषा॒ मधु॑ना
ह॒व्यमु॒न्दन्। मू॒र्धन् य॒ज्ञस्य॑ जुषता॒ꣳ॒ स्वाहा॑ ।।42।।
260800
शर्ध॑माना॒ो महो॑भि॒ᳲ पत्नी॑र्घृ॒तेन॑ च॒त्वारि॑ च ।।8।।
260901
आच॑र्॒षणि॒प्रा वि॒वेष॒ यन्माः॑। तꣳ स॒ध्रीचीः॑। स॒त्यमित्तन्न
त्वावाꣳ॑ अ॒न्यो अस्ति॑। इन्द्र॑ दे॒वो न मर्त्यो॑ ज्याया॒न्।
अह॒न्नहिं॑ परि॒शया॑न॒मर्णः॑। अवा॑सृज॒ोऽपो अच्छा॑ समु॒द्रम्।
प्रस॑साहिषे पुरुहूत॒ शत्रू॒न्। ज्येष्ठ॑स्ते॒ शुष्म॑ इ॒ह
रा॒तिर॑स्तु। इन्द्रा भर॒ दखि॑णेना॒ वसू॑नि। पति॒स्सिन्धू॑नामसि

रे॒वती॑नाम्। स शेव॑धि॒मधि॑ धाद्द्यु॒म्नम॒स्मे। महि॑

ख्ष॒त्रञ्जना॒षाडि॑न्द्र॒ तव्य॑म्। रख्षा॑ च नो म॒घोनः॑

पा॒हि सू॒रीन्। रा॒ये च॑ नः स्वप॒त्या इ॒षे धाः॑ ।।43।।

260900

रे॒वती॑नाञ्च॒त्वारि॑ च ।।9।।

261001

दे॒वं ब॒र्॒हिरिन्द्र॑ꣳ सुदे॒वन्दे॒वैः। वी॒रव॑थ्स्ती॒र्णँ

व्वेद्यामवर्धयत्। वस्तो॑र्वृ॒तं प्राक्तो॑र्भृ॒तम्। रा॒या

ब॒र्॒हिष्म॒तोऽत्य॑गात्। व॒सु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑।

दे॒वीर्द्वार॒ इन्द्र॑ꣳ सङ्घा॒ते। वि॒ड्वीर्याम॑न्नवर्धयन्न्।

आ व॒थ्सेन॒ तरु॑णेन कु॒मारे॑ण चमीवि॒ता अपावा॑णम्।

रे॒णुक॑काटन्नुदन्ताम्। व॒सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॑ ।।44।।

261002

दे॒वी उ॒षासा॒नक्ता॑। इन्द्र॑य्य॒ञ्ज्ञे प्र॑य॒त्य॑ह्वेताम्।

दैवी॒र्विशः॒ प्राया॑सिष्टाम्। सुप्री॑ते॒ सुधि॑ते अभूताम्।

व॒सु॒वने॑ वसु॒धेय॑स्य वीता॒य्य॑ज॑। दे॒वी जोष्ट्री॒ वसु॑धिती।

दे॒वमिन्द्र॑मवर्धताम्। अया॑व्य॒न्याघा द्वेषा॑ꣳसि। आन्यावा॑ख्षी॒द्

वसु॒ वार्या॑णि। यज॑मानाय शिख्षि॒ते ।।45।।

261003

व॒सु॒वने॑ वसु॒धेय॑स्य वीता॒य्य॑ज॑। दे॒वी ऊ॒र्जाहु॑ती॒ दुघे॑ सु॒दुघे॑।

पय॒सेन्द्र॑मवर्धताम्। इष॒मूर्ज॑म॒न्याऽवा॑ख्षीत्। सग्धि॒ꣳ

सपी॑तिम॒न्या। नवे॑न॒ पूर्व॒न्दय॑माने। पु॒राणे॑न॒ नव॑म्।

अधा॑ता॒मूर्ज॑मू॒र्जाहु॑ती॒ वसु॒ वार्या॑णि। यज॑मानाय शिख्षि॒ते।

व॒सु॒वने॑ वसु॒धेय॑स्य वीता॒य्य॑ज॑ ।।46।।

261004

दे॒वा दैव्या॒ होता॑रा।

दे॒वमिन्द्र॑मवर्धताम्। ह॒ताघ॑शꣳसा॒वाभा॑ष्ट॒र्व्व॑सु॒वार्या॑णि।

यज॑मानाय शिख्षि॒तौ। व॒सु॒वने॑ वसु॒धेय॑स्य वीता॒य्य॑ज॑।

दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीः। पति॒मिन्द्र॑मवर्धयन्न्।

अस्पृ॑ख्ष॒द्भार॑ती॒ दिव॑म्। रु॒द्रैर्य॒ज्ञꣳ सर॑स्वती।

इडा॒ वसु॑मती गृ॒हान् ।।47।।

261005

व॒सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॑।

दे॒व इन्द्रो॒ न॒रा॒शꣳस॑ः। त्रि॒व॒रू॒थस्त्रि॑वन्धु॒रः।

दे॒वमिन्द्र॑मवर्धयत्। श॒तेन॑ शितिपृ॒ष्ठाना॒माहि॑तः। स॒हस्रे॑ण॒

प्रव॑र्तते। मि॒त्रावरु॒णेद॑स्य हो॒त्रमर्ह॑तः। बृह॒स्पति॑ः

स्तो॒त्रम्। अ॒श्वि॒नाऽऽध्व॑र्यवम्। व॒सु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ।।48।।

261006

दे॒व इन्द्रो॒ वन॒स्पति॑ः। हिर॑ण्यवर्णो॒

मधु॑शाखस्सुपिप्प॒लः। दे॒वमिन्द्र॑मवर्धयत्।

दिव॒मग्रे॑णाप्रात्। आऽन्तरि॑ख्षं पृथि॒वीम॑दꣳहीत्। व॒सु॒वने॑

वसु॒धेय॑स्य वेतु॒ यज॑। दे॒वं ब॒र्हिर्वारि॑तीनाम्।

दे॒वमिन्द्र॑मवर्धयत्। स्वा॒स॒स्थमिन्द्रे॒णास॑न्नम्। अ॒न्या

ब॒र्हीꣳष्य॒भ्य॑भूत्। व॒सु॒वने॑ वसु॒धेयस्य॑ वेतु॒ यज॑।

दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृत्। दे॒वमिन्द्र॑मवर्धयत्।

स्वि॑ष्टङ्कु॒र्वन्थ्स्वि॑ष्ट॒कृत्। स्वि॑ष्टम॒द्य क॑रोतु नः।

व॒सु॒वने॑ वसु॒धेय॑ष्य वेतु॒ यज॑।।49।।

261000

वि॒य॒न्तु॒ यज॑ शिख्षि॒ते शि॑ख्षि॒ते व॑सु॒वने॑ वसु॒धेय॑स्य

वीता॒ँय्यज॑ गृहान् वे॑तु॒ यजा॑भू॒थ्षट्च॑ ।।10।।

261101

दे॒वंब॒र्हिर्दे॒वीर्द्वारो॑ दे॒वी उ॒षासा॒नक्ता॑ दे॒वी जोष्ट्री॑

दे॒वी ऊ॒र्जाहु॑ती दे॒वा दैव्या॒ होता॑रा शिख्षि॒तौ दे॒वीस्ति॒स्र-

स्ति॒स्रो दे॒वीर्दे॒व इन्द्रो॒ न॒रा॒शꣳसो॑ दे॒व इन्द्रो॒

वन॒स्पति॒र्दे॒वं ब॒र्हिर्वारि॑तीनान्दे॒वो अ॒ग्निः

स्वि॑ष्ट॒कृद्दे॒वम्। वे॒तुवि॒य॒न्तु॒ च॒तुर्वी॑ता॒मेको॑ वियन्तु

च॒तुर्वे॑त्ववर्धयदवर्धय॒न्त्रिर॑वर्धता॒मेको॑ऽवर्धय

श्च॒तुर॑वर्धयत्। वस्तो॒रा व॒थ्सेन॒ दैवी॒रया॒वीषꣳ

ह॒ताऽस्पृ॑ख्षच्छ॒तेन॒ दिव॑ स्वासु॒स्थ स्वि॑ष्टꣳ शिख्षि॒ते

शि॑ख्षि॒ते शि॑ख्षि॒तौ ।।

होता॑ यख्षथ्स॒मिधा॒ऽग्निमि॒डस्प॒दे। अ॒श्विनेन्द्र॒ꣳ सर॑स्वतीम्।

अ॒जो धू॒म्रो न गो॒धूमै॒ꣳ क्व॑लैर्भेष॒जम्। मधु॒ शष्पै॒र्न तेज॑

इन्द्रि॒यम्। पय॒स्सोम॑ᳲ परि॒स्रुता॑ घृ॒तं मधु॑।
वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यक्ष॒त्तनू॒नपा॒थ्सर॑स्वती।
अवि॑र्मे॒षो न भे॑ष॒जम्। प॒था मधु॑म॒ताभ॑रन्। अ॒श्विनेन्द्रा॑य वी॒र्य᳚म् ।।50।।
261102
बद॑रैरुप॒वाका॑भिर्भेष॒जन्तोक्म॑भिः।
पय॒स्सोम॑ᳲ परि॒स्रुता॑ घृ॒तं मधु॑। वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑।
होता॑ यक्ष॒न्नरा॒शꣳस॒ं न न॒ग्नहु᳚म्। पति॒ꣳ सुरा॑यै भेष॒जम्।
मे॒षस्सर॑स्वती भि॒षक्। रथो॒ न च॒न्द्र्य॑श्विनो᳚र्व॒पा इन्द्र॑स्य
वी॒र्य᳚म्। बद॑रैरुप॒वाका॑भिर्भेष॒जन्तोक्म॑भिः।
पय॒स्सोम॑ᳲ परि॒स्रुता॑ घृ॒तं मधु॑। वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑ ।।51।।
261103
होता॑ यक्षदि॒डेडि॒त आ॒जुह्वा॑न॒स्सर॑स्वतीम्।
इन्द्र॒ं बले॑न व॒र्धय॑न्। ऋ॒ष॒भेण॒ गवे॑न्द्रि॒यम्।
अ॒श्विनेन्द्रा॑य वी॒र्य᳚म्। यवै᳚ᳲ क॒र्कन्धु॑भिः। मधु॑ ला॒जैर्न
मास॑रम्। पय॒स्सोम॑ᳲ परि॒स्रुता॑ घृ॒तं मधु॑। वि॒यन्त्वाज्य॑स्य॒
होत॒र्यज॑। होता॑ यक्षद्ब॒र्हिस्सु॒ष्टरी॒मोर्ण॑म्रदाः। भि॒षङ्नास॑त्या ।।52।।
261104
भि॒षजा॒ऽश्विनाऽश्वा॒ शिशु॑मती।
भि॒षग्धे॒नुस्सर॑स्वती। भि॒षग्दु॒ह इन्द्रा॑य भेष॒जम्। पय॒स्सोम॑ᳲ
परि॒स्रुता॑ घृ॒तं मधु॑। वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑। होता॑
यक्ष॒द्दुरो॒ दिश॑ः। क॒व॒ष्यो॑ न व्यच॑स्वतीः। अ॒श्विभ्या॒न्न दुरो॒
दिश॑ः। इन्द्रो॒ न रोद॑सी॒ दुघे᳚। दु॒हे काम॒ान्थ्सर॑स्वती ।।53।।
261105
अ॒श्विनेन्द्रा॑य भेष॒जम्। शु॒क्रन्न ज्योति॑रिन्द्रि॒यम्। पय॒स्सोम॑ᳲ
परि॒स्रुता॑ घृ॒तं मधु॑। वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑। होता॑
यक्षथ्सु॒पेश॑स॒ोषे नक्त॒न्दिवा᳚। अ॒श्विना॑ सञ्जाना॒ने। सम॑ञ्जाते॒
सर॑स्वत्या। त्विषि॒मिन्द्रे॒ न भे॑ष॒जम्। श्ये॒नो न रज॑सा हृ॒दा।
पय॒स्सोम॑ᳲ परि॒स्रुता॑ घृ॒तं मधु॑ ।।54।।
261106
वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यक्ष॒द्दैव्या॒ होता॑रा भि॒षजा॒श्विना᳚।
इन्द्र॒न्न जागृ॑वी॒ दिवा॒ नक्त॒न्न भे॑ष॒जैः। शू॒ष॒ꣳ सर॑स्वती

भिषक्। सीसेन दुह इन्द्रियम्। पयस्सोमः परिस्रुता घृतं मधु।
वियन्त्वाज्यस्य होतर्यज। होता यक्षत्तिस्रो देवीर्न
भेषजम्। त्रयस्त्रिधातवोऽपसः। रूपमिन्द्रे हिरण्ययम् ।।55।।
261107
अश्विनेडा न भारती। वाचा सरस्वती।
मह इन्द्राय दधुरिन्द्रियम्। पयस्सोमः परिस्रुता घृतं मधु।
वियन्त्वाज्यस्य होतर्यज। होता यक्षत्
त्वष्टारमिन्द्रमश्विना। भिषजन्न सरस्वतीम्। ओजो न
जूतिरिन्द्रियम्। वृको न रभसो भिषक्। यशस्सुरया भेषजम् ।।56।।
261108
श्रिया न मासरम्। पयस्सोमः परिस्रुता घृतं
मधु। वियन्त्वाज्यस्य होतर्यज। होता यक्षद्वनस्पतिम्।
शमितारꣳ शतक्रतुम्। भीमन्न मन्युꣳ
राजानव्व्याँघ्रन्नमसाऽश्विना भामम्। सरस्वती भिषक्।
इन्द्राय दुह इन्द्रियम्। पयस्सोमः परिस्रुता घृतं मधु।
वियन्त्वाज्यस्य होतर्यज ।।57।।
261109
होता यक्षदग्नि स्वाहा
ऽऽज्यस्य स्तोकानाम्। स्वाहा मेदसां पृथक्। स्वाहा
छागमश्विभ्याम्। स्वाहा मेषꣳ सरस्वत्त्यै।
स्वाहर्षभमिन्द्राय सिꣳहाय सहसेन्द्रियम्। स्वाहाऽग्निन्न
भेषजम्। स्वाहा सोममिन्द्रियम्। स्वाहेन्द्रꣳ सुत्रामाणꣳ
सवितारव्वँरुणं भिषजां पतिम्। स्वाहा वनस्पतिं प्रियं
पाथो न भेषजम्। स्वाहा देवाꣳ आँज्यपान्।।58।।
261110
स्वाहाऽग्निꣳ होत्राज्जुषाणो अग्निर्भेषजम्। पयस्सोमः
परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। होता
यक्षदश्विना सरस्वतीमिन्द्रꣳ सुत्रामाणम्। इमे
सोमास्सुरामाणः। छागैर्न मेषैर्ऋषभैस्सुताः। शष्पैर्न
तोक्मभिः। लाजैर्महस्वन्तः। मदा मासरेण परिष्कृताः। शुक्राः
पयस्वन्तोऽमृताः। प्रस्थिता वो मधुश्चुतः। तानश्विना

सर॑स्व॒तीन्द्र॑स्सु॒त्रामा॑ वृत्र॒हा। जु॒षन्ता॑ꣳ सो॒म्यं मधु॑।
पिब॑न्तु॒ मद॑न्तु वि॒यन्तु॒ सोम॒॑म्। होत॒र्यज॑ ।।59।।
261100
वी॒र्यँ॑वि॒यन्त्वाज्य॑स्य॒ होत॒र्यज॒ नास॑त्या॒ सर॑स्वत॒ी मधु॑
हिर॒ण्यय॑ं भेष॒जँव्वि॒यन्त्वाज्य॑स्य॒ होत॒र्यजा॒ज्य॒पान॒मृता॒× पञ्च॑ च ।।11।।
261201
स॒मिधा॒ऽग्निं॒ षट्। तनू॒नपा॒॑थ्स॒प्त। न॒राशꣳस॒मृषि॑ः। इ॒डेडि॒तो
यवै॑र॒ष्टौ। ब॒र्हि॒स्स॒प्त। दु॒रो॒ऽश्विना॒ नव॑। सु॒पेश॒सर्॒षि॑ः।
दैव्या॒ होता॑रा॒ सीसे॑न॒ रस॑ः। ति॒स्रस्त्वष्टा॑रम॒ष्टाव॑ष्टौ।
वन॒स्पति॒मृषि॑ः। अ॒ग्निन्त्रयो॑दश। अ॒श्विना॒ द्वाद॑श त्रयोदश।
स॒मिधा॒ऽग्निं बद॑रै॒र्बद॑रै॒र्यवै॑र॒श्विना॒ त्विषि॑म॒श्विना॒ न
भे॑ष॒जꣳ रूपम॒श्विना॑ भी॒मं भाम॒॑म्।।
समि॑द्धो अ॒ग्निर॑श्विना। त॒प्तो घ॒र्मो वि॒राट्थ्सु॒तः। दु॒हे
धे॒नुस्सर॑स्वती। सोम॑ꣳ शु॒क्रमि॒हेन्द्रियम्। त॒नूपा भि॒षजा॑
सु॒ते। अ॒श्विनो॒भा सर॑स्वती। मध्वा॒ रजा॑ꣳसीन्द्रियम्। इन्द्रा॑य
प॒थिभि॑र्वहान्। इन्द्रा॒येन्दु॑ꣳ सर॑स्वती। न॒राशꣳसे॑न
न॒ग्नहु॑ः ।।60।।
261202
अधा॑ताम॒श्विना॒ मधु॑। भे॒ष॒जं भि॒षजा॑ सु॒ते।
आ॒जुह्वा॑ना॒ सर॑स्वती। इन्द्रा॑येन्द्रि॒याणि॑ वी॒र्य॒॑म्।
इडा॑भिरश्विना॒विष॒॑म्। समू॒र्ज॒ꣳ सꣳ र॒यिन्द॑धुः। अश्वि॑ना॒
नमु॑चेस्सु॒तम्। सोम॑ꣳ शु॒क्रं प॑रि॒स्रुता॒॑। सर॑स्वत॒ी तमाभ॑रत्।
ब॒र्हि॒षेन्द्रा॑य॒ पात॑वे ।।61।।
261203
क॒व॒ष्यो॑ न व्यच॑स्वतीः। अ॒श्विभ्या॒ं न दु॒रो दिश॑ः। इन्द्रो॒ न रोद॑स॒ी दुघे॒॑। दु॒हे
कामा॒न्थ्सर॑स्वती। उ॒षासा॒ नक्त॑मश्विना। दिवेन्द्र॑ꣳ
सा॒यमि॑न्द्रि॒यैः। स॒ज्ञाना॒ने सु॒पेश॑सा। सम॑ञ्जाते॒ सर॑स्वत्या।
पा॒तन्नो॑ अश्विना॒ दिवा॒॑। पा॒हि नक्त॑ꣳ सरस्वति ।।62।।
261204
दैव्या॑ होतारा भिषजा। पा॒तमिन्द्र॑ꣳ सचा॑ सु॒ते। ति॒स्रस्त्रे॒धा सर॑स्वती।
अ॒श्विना॒ भार॒तीडा॒॑। ती॒व्रं प॑रि॒स्रुता॒ सोम॒॑म्। इन्द्रा॑य

सुषवुर्मदम्। अश्विना भेषजं मधु। भेषजन्नस्सरस्वती।
इन्द्रे त्वष्टा यशश्श्रियम्। रूपꣳ रूपमधुस्सुते।
ऋतुथेन्द्रो वनस्पतिः। शशमानꣳ परिस्रुता।
कीलालमश्विभ्यां मधु। दुहे धेनुस्सरस्वती। गोभिर्न
सोममश्विना। मासरेण परिष्कृता। समधाताꣳ सरस्वत्या।
स्वाहेन्द्रे सुतं मधु ।।63।।
261200
नग्नहुꣳ पातवे सरस्वत्यधुस्सुतेऽष्टौ च ।।12।।
261301
अश्विना हविरिन्द्रियम्। नमुचेर्धिया सरस्वती। आ
शुक्रमासुराद्वसु। मघमिन्द्राय जभ्रिरे। यमश्विना सरस्वती।
हविषेन्द्रमवर्धयन्न्। स बिभेद वलं मघम्। नमुचावासुरे सचा।
तमिन्द्रं पशवस्सचा। अश्विनोभा सरस्वती ।।64।।
261302
दधाना अभ्यनूषत। हविषा यज्ञमिन्द्रियम्। य इन्द्र
इन्द्रियन्दधुः। सविता वरुणो भगः। स सुत्रामा हविष्पतिः।
यजमानाय सश्चत। सविता वरुणोऽदधत्। यजमानाय दाशुषे। आदत्त
नमुचेर्वसु। सुत्रामा बलमिन्द्रियम् ।।65।।
261303
वरुणःख्सत्रमिन्द्रियम्। भगेन सविता श्रियम्। सुत्रामा यशसा
बलम्। दधाना यज्ञमाशत। अश्विना गोभिरिन्द्रियम्।
अश्वेभिर्वीर्यं बलम्। हविषेन्द्रꣳ सरस्वती।
यजमानमवर्धयन्न्। ता नासत्या सुपेशसा। हिरण्यवर्तनी नरा।
सरस्वती हविष्मती। इन्द्र कर्मसु नोऽवत। ता भिषजा सुकर्मणा ।
सा सुदुघा सरस्वती। स वृत्रहा शतक्रतुः। इन्द्राय
दधुरिन्द्रियम्।।66।।
261300
उभा सरस्वती बलमिन्द्रियन्नरा षट्च।।13।।
261401
देवं बर्हिस्सरस्वती। सुदेवमिन्द्रे अश्विना। तेजो न
चख्सुरख्स्योः। बर्हिषा दधुरिन्द्रियम्। वसुवने वसुधेयस्य

वियन्तु यजं। देवीर्द्वारों अश्विनां। भिषजेन्द्रे सरंस्वती।
प्राणन्न वीर्यन्नसि। द्वारों दधुरिन्द्रियम्। वसुवनें
वसुधेयंस्य वियन्तु यजं।।67।।
261402
देवी उषासांवश्विनां। भिषजेन्द्रे सरंस्वती। बलन्न वाचमास्यें।
उषाभ्यांन्दधुरिन्द्रियम्। वसुवनें वसुधेयंस्य वियन्तु यजं।
देवी जोष्ट्रीं अश्विनां। सुत्रामेन्द्रे सरंस्वती। श्रोत्रन्न
कर्णयोर्यशः। जोष्ट्रीभ्यान्दधुरिन्द्रियम्। वसुवनें
वसुधेयंस्य वियन्तु यज्ञं ।।68।।
261403
देवी ऊर्जाहुती दुघें
सुदुघें। पयसेन्द्रं सरंस्वत्यश्विना भिषजांवत। शुक्रन्न
ज्योतिस्स्तनयोराहुती धत्त इन्द्रियम्। वसुवनें वसुधेयंस्य
वियन्तु यजं। देवा देवानां भिषजां। होतांराविन्द्रमश्विनां।
वषट्कारैस्सरंस्वती। त्विषिन्न हृदये मतिम्।
होतृभ्यान्दधुरिन्द्रियम्। वसुवनें वसुधेयंस्य वियन्तु यजं।।69।।
261404
देवीस्तिस्रस्तिस्रो देवीः। सरंस्वत्यश्विना भारतीडां।
शूषन्न मध्ये नाभ्यांम्। इन्द्राय दधुरिन्द्रियम्। वसुवनें
वसुधेयंस्य वियन्तु यजं। देव इन्द्रो नराशंसः।
त्रिवरूथस्सरंस्वत्याऽश्विभ्यामीयते रथः। रेतो न
रूपममृतंज्जनित्रंम्। इन्द्राय त्वष्टा दधदिन्द्रियाणि।
वसुवनें वसुधेयंस्य वियन्तु यजं ।।70।।
261405
देव इन्द्रो वनस्पतिः। हिरंण्यपर्णो अश्विभ्यांम्। सरंस्वत्यास्सुपिप्पलः।
इन्द्राय पच्यते मधुं। ओजो न जूतिमृषभो न भामंम्।
वनस्पतिर्नो दधदिन्द्रियाणि। वसुवनें वसुधेयंस्य वियन्तु
यजं। देवं बर्हिर्वारितीनाम्। अध्वरे स्तीर्णमश्विभ्यांम्।
ऊर्णम्रदास्सरंस्वत्याः ।।71।।
261406
स्योनमिन्द्र ते सदः। ईशायै

म॒न्युꣳ राजा॑नं ब॒र्॒हिषा॑ दधुरिन्द्रि॒यम्। व॒सु॒वने॑
वसु॒धेय॑स्य वियन्तु॒ यज॑। दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृत्। दे॒वान्
य॑क्षद्यथाय॒थम्। होता॑रा॒विन्द्र॑म॒श्विना॑। वा॒चा वाच॒ꣳ
सर॑स्वतीम्। अ॒ग्निꣳ सोम॑ स्विष्ट॒कृत्। स्विि॑ष्ट॒
इन्द्र॑स्सु॒त्रामा॑ सवि॒ता वरु॑णो भि॒षक्। इ॒ष्टो दे॒वो वन॒स्पति॑ः।
स्वि॑ष्टा दे॒वा आँ॑ज्य॒पाः। इ॒ष्टो अ॒ग्निर॒ग्निना॑। होता॑ हो॒त्रे
स्वि॑ष्ट॒कृत्। यश॒ो न दध॑दिन्द्रि॒यम्। ऊर्ज॒मप॑चिति स्व॒धाम्।
व॒सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॑ ।।72।।
261400
द्वारो॑ दधुरिन्द्रिय व्वँ॑सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॒
जोष्ट्री॑भ्यान्दधुरिन्द्रि॒यव्वँ॑सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॒
होतृ॑भ्यान्दधुरिन्द्रि॒यव्वँ॑सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒
यजे॑न्द्रि॒याणि॑ वसु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॒ सर॑स्वत्या॒
वन॒स्पति॒ष्षट्च॑।।14।।
261501
दे॒वं ब॒र्॒हिर्दे॒वीर्द्वारो॑ दे॒वी उ॒षासा॑व॒श्विना॑ दे॒वी
जोष्ट्री॑ दे॒वी ऊ॒र्जाहु॑ती दे॒वा दे॒वाना॑ भि॒षजा॑ वषट्का॒रै
दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीर्दे॒व इन्द्रो॑ न॒राशꣳसो॑ दे॒व
इन्द्रो॑ वन॒स्पति॑र्दे॒वं ब॒र्॒हिर्वारि॑तीनान्दे॒वो
अ॒ग्निस्स्वि॑ष्ट॒कृद्दे॒वान्। स॒मिधा॒ऽग्निन्दे॒वं
ब॒र्॒हिस्सर॑स्वत्य॒श्विना॒ सर्वे॑ वियन्तु। द्वार॑स्ति॒स्रस्सर्वे॑
वियन्तु। अ॒ज इन्द्र॒मोज॒ोऽग्निं पर॒स्सर॑स्वतीम्। नक्तं॒
पूर्व॒स्सर॑स्वति। अ॒न्यत्र॒ सर॑स्वती। भि॒षक्पूर्वे॑न्दुह इन्द्रि॒यम्।
अ॒न्यत्र॑ दधुरिन्द्रि॒यम्। सौ॒त्रा॒म॒ण्याꣳ सु॑तासु॒ती।
अ॒ञ्जन्त्य॒यय्यँ॑ज॑मानः।।
अ॒ग्निम॒द्य होता॑रमवृणीत। अ॒यꣳ सु॑तासु॒ती यज॑मानः। पच॑न्प॒क्तीः।
पच॑न्पु॒रोडाशा॑न्। गृ॒ह्णन्ग्रहा॑न्। ब॒ध्नन्न॒श्विभ्या॒ञ्छाग॒ꣳ
सर॑स्वत्या॒ इन्द्रा॑य। ब॒ध्नन्थ्सर॑स्वत्यै
मे॒षमिन्द्रा॑या॒श्विभ्या॑म्। ब॒ध्नन्निन्द्रा॑यर्॒ष॒भम॒श्विभ्या॒ꣳ
सर॑स्वत्यै। सू॒प॒स्था अ॒द्य दे॒वो वन॒स्पति॑रभवत्।

अ॒श्विभ्या॒ञ्छागे॑न॒ सर॑स्वत्या॒ इन्द्रा॑य ।।73।।
261502
सर॑स्वत्यै मे॒षेणेन्द्रा॑या॒श्विभ्या॑म्। इन्द्रा॑यर्॒ष॒भेणा॒श्विभ्या॑ꣳ
सर॑स्वत्यै। अख्ष॒ स्तान्मे॑द॒स्तः॑ प्रति॑पच॒ताग्र॑भीषुः।
अवी॑वृधन्त॒ ग्रहैः॑। अपा॑ताम॒श्विना॒ सर॑स्व॒तीन्द्र॑स्सु॒त्रामा॑
वृत्र॒हा। सोमा॑न्थ्सु॒राम्णः॑। उपो॑ उक्थाम॒दाः श्रौ॒द्विमदा॑ अदन्न्।
अवी॑वृधन्ताङ्गू॒षैः। त्वाम॒द्यर्॒ष॑ आर्॒षेयर्॒षीणान्नपादवृणीत। अ॒यꣳ
सु॑तासु॒ती यज॑मानः। ब॒हुभ्य॒ आ सङ्ग॑तेभ्यः। ए॒ष मे॑ दे॒वेषु॒ वसु॒
वार्या य॑ख्ष्यत॒ इति॑। ता या दे॒वा दे॑व॒दाना॒न्यदुः॑। तान्य॑स्मा॒
आ च॒ शास्व॑। आ च॑ गुरस्व। इ॒षि॒तश्च॑ होत॒रसि॑ भद्र॒वाच्या॑य॒
प्रेषि॑तो॒ मानु॑षः। सू॒क्त॒वा॒काय॑ सू॒क्ता ब्रू॑हि।।74।।
261500
इन्द्रा॑य॒ यज॑मानस्स॒प्त च॑ ।।15।।
261601
उ॒शन्त॑स्त्वा हवामह॒ आ नो॑ अग्ने सुके॒तुना॑। त्वꣳ सो॑म म॒हे
भग॒न्त्वꣳ सो॑म॒ प्रचि॑कितो मन॒ीषा। त्वया॒ हि नः॑ पि॒तर॑स्सोम॒
पूर्वे॒ त्वꣳ सो॑म पि॒तृभि॑स्सँ॑व्विद॒ानः। बर्॒हि॑षदः॑ पितर॒ आऽहं
पि॒तॄन्। उप॑हूताः॑ पि॒तरोऽग्नि॑ष्वात्ताः॑ पितरः।
अ॒ग्नि॒ष्वा॒त्तानृ॑तु॒मतो॑ हवामहे। नर॒ाशꣳसे॑ सोमपी॒थय्यँ॑ आ॒शुः।
ते न॒ो अर्व॑न्तस्सु॒हवा॑ भवन्तु। शन्नो॑ भवन्तु द्विपदे॒
शञ्चत॑ुष्पदे। ये अ॑ग्निष्वा॒त्ता येऽन॑ग्निष्वात्ताः ।।75।।
261602
अ॒ꣳहो॒मुचः॑ पि॒तर॑स्सो॒म्यासः॑। परेऽव॑रे॒ऽमृता॑सो॒ भव॑न्तः।
अधि॑ ब्रुवन्तु॒ ते अ॑वन्त्व॒स्मान्। वा॒न्या॑यै दु॒ग्धे जु॒षमा॑णाः॑
कर॒म्भम्। उ॒दीरा॑णा॒ अव॑रे॒ परे॑ च। अ॒ग्नि॒ष्वा॒त्ता
ऋ॒तुभि॑स्सँ॑व्विद॒ानाः। इन्द्र॑वन्तो ह॒विरि॒दञ्जु॑षन्ताम्। यद॑ग्ने
कव्यवाहन॒ त्वम॑ग्न ईडि॒तो जा॑तवेदः। मात॑ली क॒व्यैः। ये
ता॑तृपुर्दे॑व॒त्रा जेह॑मानाः। हो॒त्रा॒वृध॒स्स्तोम॑तष्टासो अ॒र्कैः।
आऽग्ने॑ याहि सुवि॒दत्रे॑भिर॒र्वाङ्। स॒त्यैः॑ क॒व्यैः॑
पि॒तृभि॑र्घर्म॒सद्भिः॑। ह॒व्य॒वाह॑म॒जरं॑ पुरुप्रि॒यम्।
अ॒ग्निङ्घृ॒तेन॑ ह॒विषा॑ सप॒र्यन्। उपा॑सदङ्कव्य॒वाह॑ं पितॄ॒णाम्।

स नः॑ प्र॒जाँव्वी॒रव॑ती॒ᳩ सम॑ृण्वतु।।76।।
261600
अन॑ग्निष्वात्ता॒ जेह॑मानास्स॒प्त च॑ ।।16।।
261701
होता॑ यक्षदि॒डस्प॒दे। स॒मि॒धानं॑ म॒हद्यशः॑। सुष॑मिद्धव्व॑रे॑ण्यम्।
अ॒ग्निमिन्द्र॑व्वँय॒ोधस॑म्। गा॒य॒त्रीञ्छन्द॑ इन्द्रि॒यम्।
त्र्यवि॒ङ्गाव्वँय॒ो दध॑त्। वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑
यक्ष॒च्छुचि॑व्रतम्। तनू॒नपा॑तमु॒द्भिद॑म्। यङ्गर्भ॒मदि॑तिर्द॒धे ।।77।।
261702
शुचि॒मिन्द्र॑व्वँय॒ोधस॑म्। उ॒ष्णिह॒ञ्छन्द॑ इन्द्रि॒यम्।
दि॒त्य॒वाह॒ङ्गाव्वँय॒ो दध॑त्। वेत्वाज्य॑स्य होत॒र्यज॑। होता॑
यक्षदी॒डेन्य॑म्। ई॒डि॒तव्वृ॑त्र॒हन्त॑मम्। इडा॑भि॒रीड्य॒ᳩ सहः॑।
सोम॒मिन्द्र॑व्वँय॒ोधस॑म्। अ॒नु॒ष्टुभ॒ञ्छन्द॑ इन्द्रि॒यम्।
त्रि॒व॒थ्सङ्गाव्वँय॒ो दध॑त् ।।78।।
261703
वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑
यक्षथ्सुबर्हि॒षद॑म्। पू॒षण्वन्त॒मम॑र्त्यम्। सीद॑न्तं ब॒र्॒हिषि॑
प्रि॒ये। अ॒मृतेन्द्र॑व्वँय॒ोधस॑म्। बृ॒ह॒तीञ्छन्द॑ इन्द्रि॒यम्।
पञ्चा॑वि॒ङ्गाव्वँय॒ो दध॑त्। वेत्वाज्य॑स्य॒ होत॒र्यज॑।
होता॑यक्ष॒द्व्यच॑स्वतीः। सु॒प्रा॒य॒णा ऋ॑त॒ावृधः॑ ।।79।।
261704
द्वारो॑ दे॒वीर्॒हि॑र॒ण्ययीः॑। ब्र॒ह्माण॒ इन्द्र॑व्वँय॒ोधस॑म्।
प॒ङ्क्तिञ्छन्द॑ इ॒हेन्द्रि॒यम्। तु॒र्य॒वाह॒ङ्गाव्वँय॒ो दध॑त्।
वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यक्षथ्सु॒पेश॑से। सु॒शि॒ल्पे
बृ॒ह॒ती उ॒भे। नक्त॒ोषासा॒ न द॑र्॒श॒ते। विश्व॒मिन्द्र॑व्वँय॒ोधस॑म्।
त्रि॒ष्टुभ॒ञ्छन्द॑ इन्द्रि॒यम् ।।80।।
261705
पृ॒ष्ठ॒वाह॒ङ्गाव्वँय॒ो दध॑त्। वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यक्ष॒त्प्रचे॑तसा।
दे॒वाना॑मु॒त्त॒मय्यँशः॑। होता॑रा॒ दैव्या॑ क॒वी।
स॒युजेन्द्र॑व्वँय॒ोधस॑म्। जग॑ती॒ञ्छन्द॑ इ॒हेन्द्रि॒यम्।
अ॒न॒ड्वाह॒ङ्गाव्वँय॒ो दध॑त्। वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑

यख्स॒त्पेश॑स्वतीः ।।81।।
261706
ति॒स्रो दे॒वीर्ह॒वि॒रण्ययीँ॑ः। भार॑तीर्बृ॒ह॒तीर्म॒हीः। पति॒मिन्द्र॑व्वँय॒ोधस॑म्।
वि॒राज॒ञ्छन्द॑ इ॒हेन्द्रि॒यम्। धे॒नुङ्गान्न वय॒ो दध॑त्।
वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑ यख्सथ्सु॒रेत॑सम्। त्वष्टा॑रं
पुष्टि॒वर्ध॑नम्। रू॒पाणि॒ बिभ्र॑तं॒ पृथ॑क्।
पुष्टि॒मिन्द्र॑व्वँय॒ोधस॑म् ।।82।।
261707
द्वि॒पद॒ञ्छन्द॑ इ॒हेन्द्रि॒यम्।
उ॒ख्खाण॒ङ्गान्न वय॒ो दध॑त्। वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑
यख्सच्छ॒तक्र॑तुम्। हिर॑ण्यपर्णमु॒क्थिन॑म्। र॒श॒नां बिभ्र॑तव्वँ॒शिम्।
भग॒मिन्द्र॑व्वँय॒ोधस॑म्। क॒कु॒भ॒ञ्छन्द॑ इ॒हेन्द्रि॒यम्।
व॒शाँव्वे॒हत॒ङ्गान्न वय॒ो दध॑त्। वेत्वाज्य॑स्य॒ होत॒र्यज॑। होता॑
यख्स॒थ्स्वाहा॑कृतीः। अ॒ग्निङ्गृ॒हप॑तिं॒ पृथ॑क्। वरु॑णं
भेष॒जङ्क॒विम्। ख्स॒त्रमिन्द्र॑व्वँय॒ोधस॑म्। अति॑च्छन्दस॒ञ्छन्द॑
इन्द्रि॒यम्। बृ॒हदृ॑ष॒भङ्गाव्वँय॒ो दध॑त्। वेत्वाज्य॑स्य॒ होत॒र्यज॑।।83।।
261700
द॒धे दध॑द्द॒ता॒वृध॑ इन्द्रि॒यं पेश॑स्वतीर्वय॒ोधस॒ं वेत्वाज्य॑स्य॒ होत॒र्यज॑ स॒प्त च॑ ।।17।।
261801
इ॒डस्प॒देँ॑ऽग्निङ्गा॑य॒त्रीन्त्र्यवि॑म्। शुचि॑व्रत॒ं
शुचि॑मु॒ष्णिह॑न्दित्य॒वाह॑म्। ई॒डेन्य॒ं
सोम॑मनु॒ष्टुभ॑न्त्रिव॒थ्सम्। सु॒ब॒र्ह्वि॒षद॑म॒मृतेन्द्रं॑ बृ॒ह॒तीं
पञ्चा॑विम्। व्यच॑स्वतीस्सुप्राय॒णा द्वारो॑ ब्र॒ह्माण॑ᳲ प॒ङ्क्तिमि॒ह
तु॒र्य॒वाह॑म्। सु॒पेश॑से॒ विश्व॒मिन्द्र॑न्त्रि॒ष्टुभ॑ं
पष्ठ॒वाह॑म्। प्रचे॑तसा स॒युजेन्द्र॒ञ्जग॑तीमि॒हान॒ड्वाह॑म्।
पेश॑स्वतीस्ति॒स्रᳲ पति॑व्वि॒राज॑मि॒ह धे॒नुन्न।
सु॒रेत॑स॒न्त्वष्टा॑र॒ं पुष्टि॒मिन्द्र॑न्द्वि॒पद॑मि॒होख्खाण॒न्न।
श॒तक्र॑तु॒ं भग॒मिन्द्र॑ङ्क॒कुभ॑मि॒ह व॒शान्न। स्वाहा॑कृतीः
ख्स॒त्रमति॑च्छन्दसं बृ॒हदृ॑ष॒भङ्गाव्वँय॒ो दध॑दिन्द्रि॒यमृषि॑ वसु॒
नव॑ द॒शेहेँ॑न्द्रि॒यमष्ट॑ नव दश॒ गान्न वय॒ो दध॑दि॒डस्प॒दे
सर्वँ॑ वेतु ।।

समि॑द्धो अ॒ग्निस्स॒मिधा॑। सुष॑मिद्धो वरे॑ण्यः। गा॒य॒त्री छन्द॑
इन्द्रि॒यम्। त्र्यवि॒र्गौर्वयो॑ दधुः। तनू॒नपा॒च्छुचि॑व्रतः।
त॒नू॒पाच्च॒ सर॑स्वती। उ॒ष्णिक्छन्द॑ इन्द्रि॒यम्। दि॒त्य॒वाड्
गौर्वयो॑दधुः। इडा॑भिर॒ग्निरीड्य॑ः। सोमो॑ दे॒वो अम॑र्त्यः ।।84।।
261802
अ॒नु॒ष्टुप्छन्द॑ इन्द्रि॒यम्। त्रि॒व॒थ्सो गौर्वयो॑ दधुः।
सु॒ब॒र्॒हि॒र॒ग्निः पू॑ष॒ण्वान्। स्ती॒र्णब॑र्॒हि॒रम॑र्त्यः।
बृ॒ह॒ती छन्द॑ इन्द्रि॒यम्। पञ्चा॑वि॒र्गौर्वयो॑ दधुः। दुरो॑
दे॒वीर्दिशो॑ म॒हीः। ब्र॒ह्मा दे॒वो बृह॒स्पति॑ः। प॒ङ्क्तिश्छन्द॑
इ॒हेन्द्रि॒यम्। तु॒र्य॒वाङ्गौर्वयो॑ दधुः ।।85।।
261803
उ॒षे य॒ह्वी सु॒पेश॑सा। विश्वे॑ दे॒वा अम॑र्त्याः। त्रि॒ष्टुप्छन्द॑ इन्द्रि॒यम्।
प॒ष्ठ॒वाड्गौर्वयो॑ दधुः। दैव्या॑ होतारा भिषजा। इन्द्रे॑ण स॒युजा॑
यु॒जा। जग॑ती छन्द॑ इ॒हेन्द्रि॒यम्। अ॒न॒ड्वान्गौर्वयो॑ दधुः।
ति॒स्र इडा॒ सर॑स्वती। भार॑ती म॒रुतो॒ विश॑ः ।।86।।
261804
वि॒राट्छन्द॑ इ॒हेन्द्रि॒यम्। धे॒नुर्गौर्न वयो॑ दधुः। त्वष्टा॑ तु॒रीपो॒ अद्भु॑तः।
इ॒न्द्रा॒ग्नी पु॑ष्टि॒वर्ध॑ना। द्विपाच्छन्द॑ इ॒हेन्द्रि॒यम्।
उ॒क्षा गौर्न वयो॑ दधुः। श॒मि॒ता नो॒ वन॒स्पति॑ः। स॒वि॒ता
प्र॑सु॒वन्भग॑म्। क॒कुच्छन्द॑ इ॒हेन्द्रि॒यम्। व॒शा वे॒हद्गौर्न वयो॑
दधुः। स्वाहा॑ य॒ज्ञव्वँरु॑णः। सु॒क्ष॒त्रो भे॑ष॒जङ्क॑रत्।
अति॑च्छन्दा॒श्छन्द॑ इन्द्रि॒यम्। बृ॒हदृ॑ष॒भो गौर्वयो॑ दधुः ।।87।।
261800
अम॑र्त्यस्तु॒र्य॒वाङ्गौर्वयो॑ दधु॒र्विशो॑ व॒शा वे॒हद्गौर्न वयो॑ दधुश्च॒त्वारि॑ च ।।18।।
261901
व॒स॒न्तेन॒र्तुना॑ दे॒वाः। वस॑वस्त्रि॒वृता॑ स्तु॒तम्।
र॒थ॒न्त॒रेण॒ तेज॑सा। ह॒विरिन्द्रे॒ वयो॑ दधुः। ग्री॒ष्मेण॑ दे॒वा
ऋ॒तुना॑। रु॒द्राः पञ्च॒द॒शे स्तु॒तम्। बृ॒ह॒ता यश॑स॒ा बल॑म्।
ह॒विरिन्द्रे॒ वयो॑ दधुः। व॒र्॒षाभि॑र्ऋ॒तुना॑ऽऽदि॒त्याः। स्तोमे॑
स॒प्त॒द॒शे स्तु॒तम् ।।88।।
261902

वै॒रू॒पेण॑ वि॒शौज॑सा। ह॒विरि॑न्द्रे
वयो॑ दधुः। शा॒र॒देन॒र्तुना॑ दे॒वाः। ए॒क॒वि॒ꣳश ऋ॒भव॑स्स्तु॒तम्।
वै॒रा॒जेन॑ श्रि॒या श्रिय॑ꣳम्। ह॒विरि॑न्द्रे वयो॑ दधुः।
हे॒म॒न्तेन॒र्तुना॑ दे॒वाः। म॒रुत॑स्त्रि॒ण॒वे स्तु॒तम्। बले॑न॒
शक्व॑री॒स्सहः॑। ह॒विरि॑न्द्रे वयो॑ दधुः। शै॒शि॒रेण॒र्तुना॑ दे॒वाः।
त्र॒य॒स्त्रि॒ꣳशेऽमृत॑ स्तु॒तम्। स॒त्येन॑ रे॒वतीः॑ ख्ष॒त्रम्।
ह॒विरि॑न्द्रे वयो॑ दधुः ।।89।।
261900
स्तोमे॑ सप्तद॒शे स्तु॒तꣳ सहो॑ ह॒विरि॑न्द्रे वयो॑ दधुश्च॒त्वारि॑ च ।।19।।
262001
व॒स॒न्तेन॑ ग्री॒ष्मेण॑ व॒र्षाभि॑श्शार॒देन॑ हेम॒न्तेन॑ शैशि॒रेण॒ षट्।।
दे॒वंब॒र्॒हिरिन्द्र॑व्वँय॒ोधस॑ꣳम्। दे॒वन्दे॒वम॑वर्धयत्।
गा॒य॒त्रि॒या छन्द॑सेन्द्रि॒यम्। तेज॒ इन्द्रे॒ वय॒ो दध॑त्।
व॒सु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑। दे॒वीर्द्वारो॑
दे॒वमिन्द्र॑व्वँय॒ोधस॑ꣳम्। दे॒वीर्दे॒वम॑वर्धयन्न्।
उ॒ष्णिह॒ा छन्द॑सेन्द्रि॒यम्। प्रा॒णमिन्द्रे॒ वय॒ो दध॑त्।
व॒सु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॑ ।।90।।
262002
दे॒वी दे॒वव्वँय॒ोधस॑ꣳम्। उ॒षे इन्द्र॑मवर्धताम्। अ॒नु॒ष्टु॒भा॒
छन्द॑सेन्द्रि॒यम्। वा॒च॒मिन्द्रे॒ वय॒ो दध॑त्। व॒सु॒वने॑
वसु॒धेय॑स्य वीता॒य्यँज॑। दे॒वी जोष्ट्री॑ दे॒वमिन्द्र॑व्वँय॒ोधस॑ꣳम्।
दे॒वी दे॒वम॑वर्धताम्। बृ॒ह॒त्या छन्द॑सेन्द्रि॒यम्।
श्रो॒त्रमिन्द्रे॒ वय॒ो दध॑त्। व॒सु॒वने॑ वसु॒धेय॑स्य वीता॒य्यँज॑।।91।।
262003
दे॒वी ऊ॒र्जाहु॑ती दे॒वमिन्द्र॑व्वँय॒ोधस॑ꣳम्। दे॒वी
दे॒वम॑वर्धताम्। प॒ङ्क्त्या छन्द॑सेन्द्रि॒यम्। शु॒क्रमिन्द्रे॒ वय॒ो
दध॑त्। व॒सु॒वने॑ वसु॒धेय॑स्य वीता॒य्यँज॑। दे॒वा दैव्या॒
होता॑रा दे॒वमिन्द्र॑व्वँय॒ोधस॑ꣳम्। दे॒वा दे॒वम॑वर्धताम्।
त्रि॒ष्टु॒भा॒ छन्द॑सेन्द्रि॒यम्। त्विषि॒मिन्द्रे॒ वय॒ो दध॑त्।
व॒सु॒वने॑ वसु॒धेय॑स्य वीता॒य्यँज॑ ।।92।।
262004

दे॒वीस्ति॒स्रस्ति॒स्रो
दे॒वीर्व॑यो॒धसं॑म्। पति॒मिन्द्र॑मवर्धयन्न्। जग॑त्या॒
छन्द॑सेन्द्रि॒यम्। बल॒मिन्द्रे॒ वयो॒ दध॑त्। व॒सु॒वने॑
वसु॒धेय॑स्य वियन्तु॒ यज॑। दे॒वो नरा॒शꣳसो॑
दे॒वमिन्द्र॑व्वँयो॒धसं॑म्। दे॒वो दे॒वम॑र्धयत्। वि॒राजा॒
छन्द॑सेन्द्रि॒यम्। रेत॒ इन्द्रे॒ वयो॒ दध॑त्। व॒सु॒वने॑
वसु॒धेय॑स्य वेतु॒ यज॑ ।।93।।
262005
दे॒वो वन॒स्पति॑र्दे॒वमिन्द्र॑
व्वँयो॒धसं॑म्। दे॒वो दे॒व॑मवर्धयत्। द्विपदा॒ छन्द॑सेन्द्रि॒यम्।
भग॒मिन्द्रे॒ वयो॒ दध॑त्। व॒सु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑।
दे॒वं ब॒र्॒हिर्वारि॑तीनान्दे॒वमिन्द्र॑व्वँयो॒धसं॑म्।
दे॒वन्दे॒वम॑वर्धयत्। क॒कुभा॒ छन्द॑सेन्द्रि॒यम्। यश॒ इन्द्रे॒ वयो॒
दध॑त्। व॒सु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑। दे॒वो
अ॒ग्निस्स्वि॑ष्ट॒कृद्दे॒वमिन्द्र॑व्वँयो॒धसं॑म्। दे॒वो दे॒वम॑वर्धयत्।
अति॑च्छन्दसा॒ छन्द॑सेन्द्रि॒यम्। ख्ष॒त्रमिन्द्रे॒ वयो॒ दध॑त्।
व॒सु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ ।।94।।
262000
वि॒य॒न्तु॒ यज॑ वीता॒य्यँज॑ वीता॒य्यँज॑ वेतु॒ यज॑ वेतु॒ यज॒ पञ्च॑ च ।।20।।
260000
दे॒वं ब॒र्॒हिर्गा॑यत्रि॒या तेज॑ः। दे॒वीर्द्वार॑ उ॒ष्णिहा॑
प्रा॒णम्। दे॒वी दे॒वमु॒षे अ॑नु॒ष्टुभा॒ वाचं॑म्। दे॒वी जोष्ट्री॑
बृह॒त्या श्रोत्रं॑म्। दे॒वी ऊ॒र्जाहु॑ती प॒ङ्क्त्या शु॒क्रम्। दे॒वा
दैव्या॒ होता॑रा त्रि॒ष्टुभा॒ त्विषिं॑म्। दे॒वीस्ति॒स्रस्ति॒स्रो
दे॒वीः॒ पति॒ञ्जग॑त्या॒ बलं॑म्। दे॒वो नरा॒शꣳसो॑ वि॒राजा॒ रेत॑ः।
दे॒वो वन॒स्पति॑र्द्वि॒पदा॒ भगं॑म्। दे॒वं
ब॒र्॒हिर्वारि॑तीनाङ्क॒कुभा॒ यश॑ः। दे॒वो
अ॒ग्निस्स्वि॑ष्ट॒कृदति॑च्छन्दसा ख्ष॒त्रम्। वे॒तु॒ वि॒य॒न्तु॒
च॒तुर्वी॑ता॒मेको॑ वियन्तु च॒तुर्वे॑त्ववर्धयदवर्धय
श्च॒तुर॑वर्धता॒मेको॑ऽवर्धय श्च॒तुर॑वर्धयत्।।

स्वाद्वीन्त्वा सोमस्सुरावन्तꣳ सीसेन मित्रोसि यद्देवा
होता यख्षथ्समिधेन्द्रꣳ समिद्ध इन्द्र आचर्षणिप्रा
देवं बर्हिर्होता यख्षथ्समिधाऽग्निꣳ समिद्धो
अग्निरश्विनाऽश्विना हविरिन्द्रियन्देवं
बर्हिस्सरस्वत्यग्निमद्योशन्तो होता यख्षदिडस्पदे समिद्धो
अग्निस्समिधा वसन्तेनर्तुना देवं बर्हिरिन्द्रव्वँयोधसं विꣳशतिः।।20।।
स्वाद्वीन्त्वाऽमीमदन्त पितरस्साम्राँज्याय पूतं
पवित्रेणोषासानक्ता बदरैरधातान्देव इन्द्रो वनस्पतिꣳ
पष्ठवाहङ्गान्देवी देवव्वँयोधसञ्चतुर्नवतिः ।।94।।
स्वाद्वीन्त्वा वेतु यज।। हरिः ओम् ।। श्रीकृष्णार्पणमस्तु।। षष्ठ प्रपाठकस्समाप्तः

270000

।। सप्तम प्रपाठक प्रारम्भः।। हरिःओम्।।

270101

त्रि॒वृथ्त्सोमो॑भवति। ब्र॒ह्म॒व॒र्च॒ सँव्वेत्रि॒वृत्। ब्र॒ह्म॒व॒र्च॒

समो॒वाव॑ रुन्धे। अ॒ग्नि॒ष्टो॒मस्सोमो॑ भवति। ब्रह्मव॒र्च॒सव्वाँ अ॑ग्नि॒ष्टो॒मः।

ब्र॒ह्म॒व॒र्च॒ सम॒ेवाव॑रुन्धे। र॒थ॒न्त॒रꣳ साम॑भवति।

ब्र॒ह्म॒व॒र्च॒सँव्वै र॑थन्त॒रम्। ब्र॒ह्म॒व॒र्च॒ सम॒ेवाव॑रुन्धे। प॒रि॒स्र॒जीहोता॑ भवति ।।1।।

270102

अ॒रु॒णोर्मि॑र्म्मि॒रस्त्रि॑शु॒क्रः। ए॒तद्वै ब्र॑ह्मवर्च॒ सस्य॑रू॒पम्। रू॒पेणै॒व

ब्र॑ह्मवर्च॒समव॑रुन्धे बृह॒स्पति॑रकामयत दे॒वानां॑ पु॒रो॒धाङ्ग॑च्छेय॒मिति॑। स

ए॒तं

बृ॑हस्पतिस॒वम॑पश्यत्। तमाहा॑रत्। तेना॑यजत। तत॒ोवैसदे॒वानां॑

पु॒रो॒धाम॑गच्छत्। यꣳ पु॑रो॒धाका॑म॒स्स्यात्। स बृ॑हस्पतिस॒वेन॑यजेत ।।2।।

270103

पु॒रो॒धाम॒ेवग॑च्छति। तस्य॑प्रातस्सव॒ने स॒न्नेषु॑ नाराश॒ꣳ॒सेषु॑। एका॑दश॒ दखि॑णा

नीयन्ते। एका॑दश॒ माध्य॑न्दिने॒ सव॑ने स॒न्नेषु॑ नाराश॒ꣳ॒सेषु॑। एका॑दश तृतीय

सव॒ने स॒न्नेषु॑ नाराश॒ꣳ॒ सेषु॑। त्रय॑स्त्रिꣳश॒थ्संप॑द्यन्ते। त्रय॑स्त्रिꣳश॒द्वै

दे॒वताः॑। दे॒वता॑ए॒वाव॑रुन्धे। अश्व॑श्चतु॒स्त्रि॒ꣳ॒शः। प्रा॒जा॒प॒त्यो वा अश्वः॑ ।।3।।

270104

प्र॒जाप॑तिश्चतु॒स्त्रि॒ꣳ॒शो दे॒वता॑नाम्। याव॑तीरे॒वदे॒वताः॑। ताए॒वाव॑रुन्धे।

कृ॒ष्णा॒जी॒नेऽ॑भिषि॑ञ्चति। ब्रह्म॑णो॒ वा ए॒तद्रू॒पम्।

यत्कृ॑ष्णाजि॒नम्। ब्र॒ह्म॒व॒र्च॒से नै॒वैन॒ꣳ॒

सम॑र्धयति। अज्ये॑ना॒भिषि॑ञ्चति। तेजो॒ वा आज्यं॑म्। तेज॑ ए॒वास्मि॑न्दधाति ।।4।।

270100

होता॑भवति यजेत॒वा अश्वो॑दधाति ।।1।।

270201

यदा॑ग्नेयो भव॑ति। अ॒ग्निमु॑खा॒ह्यृद्धिः॑। अथ॒यत्पौ॑ष्णः। पु॒ष्टि॒र्वै॑पूषा।

पु॒ष्टि॒र्वैश्य॑स्य। पुष्टि॑मे॒वाव॑रुन्धे। प्र॒स॒वाय॑ सावि॒त्रः। अथ॒यत्त्वा॒ष्ट्रः॑ ।

त्वष्टा॒हिरू॒पाणि॑ विकु॒रोति॑। नि॒र्व॒रु॒ण॒त्वाय॑ वारु॒णः ।।5।।

270202

अथो॒य ए॒वकश्च सन् थ्सूयते॑। सहि वा॑रु॒णः। अथ॒ यद्वै॑श्वदे॒वः।

वै॒श्व॒दे॒वोहिवैश्यः॑। अथ॒यन्मा॑रु॒तः। मा॒रु॒तोहिवैश्यः॑। स॒प्तैतानि॑

हवीꣳषि भवन्ति। सप्तगणावै मरुतः। पृश्निꣳपष्ठौही मारुत्यालभ्यते।
विड्वैमरुतः। विशएवैतन्मध्यतोऽभिषिच्यते। तस्माद्वा एषविशꣳ
प्रियः। विशोहि मध्येतोऽभिषिच्यते। ऋषभचर्मेऽध्यभिसिञ्चति। सहिप्रजनयिता।
दध्नाऽभिषिञ्चति। ऊर्ग्वा अन्याद्यन्दधि। ऊर्जैवैनमन्नाद्येन समर्धयति ।।6।।
वारुणो विड्वैमरुतोऽष्टौच ।।2।।
270301
यदाग्नेयो भवति। आग्नेयो वैब्राह्मणः। अथयत्सौम्यः। सौम्यो हि
ब्राह्मणः। प्रसवायैव सावित्रः। अथयद्बार् हस्पत्यः। एतद्वै
ब्राह्मणस्य वाक्पतीयम्। अथ यदग्नीषोमीयः। आग्नेयो वै ब्राह्मणः
तौयदासयङ्गच्छेते।।7।।
270302
अथ वीर्यावत्तरोभवति। अथ यत्सारस्वतः। एतद्धि प्रत्यख्षं ब्राह्मणस्य वाक्पतीयम्।
निर्वरुणत्वायैववारुणः। अथो यएव कश्चसन् थ्सूयते। स हि वारुणः। अथ
यद्द्यवापृथिव्यः। इन्द्रो वृत्रायवज्रमुदयच्छत्। तन्द्यावापृथिवी।
नान्वमन्येताम्। तमेतेनैव भागधेयेन्वमन्येताम् ।।8।।
270303
वज्रस्य वा एषो।ऽनुमानाय। अनुमतवज्रस्सूयाता इति। अष्टावेतानिहणꣳषि
भवन्ति। अष्टाख्षरा गायत्री । गायत्री ब्रह्मवर्चसम्। गायत्रियैव
बह्मवर्चसमव रुन्धे। हिरण्येन घृतमुत्पुनाति। तेजस एव रुचे।
कृष्णाजीनेऽभिषिञ्चति। ब्रह्मणो वा एतदृख्सामयो रूपम्। यत्कृष्णाजिनम्।
ब्रह्मन्नेवैनमृख्सामयोरध्यभिषिञ्चति। घृतेनाभिषिञ्चति। तथा वीर्यावत्तरो भवति।।9।।
270300
सङ्गच्छेते भागधेयेनान्वमन्येताꣳ रूपञ्चत्वारिंच ।।3।।
270401
नवैसोमेन सोमस्य सवोऽस्ति। हतो ह्येषः। अभिषुतोह्येषः।
नहिहतस्सूयते। सौमीꣳ सूतवशामालभते। सोमोवैरेतोधाः। रेत एव
तद्दधाति। सौम्यर्चाऽभिषिञ्चति। रेतोधा ह्येषा। रेतस्सोमः। रेत
एवास्मिन्दधाति। यत्किञ्चराजसूयमृते सोमम्। तथ्सर्वं भवति।
अषाढय्युँथ्सुपृतनासुपप्रिम्। सुवर् षामफ्स्वाव्वृं जनस्य गोपाम्।
भरेषुजाꣳ सुख्षितिꣳ सुश्रवसम्। जयन्तस्त्वामनुमदेम सोम ।।10।।
270400

रेत॒स्सोम॑स्स॒प्तच॑ ।।4।।
270501
योवैसोमे॑नसू॒यते᳚। सदे॑वस॒वः। य॒ᳶप॒शुना॑सू॒यते᳚। सदे॑वस॒वः। य
इष्ट्या॑सू॒यते᳚। सम॑नुष्यस॒वः। ए॒तँव्वै पृथ॑येदे॒वाᳶप्राय॑च्छन्।
तत॒ोवैसोऽप्या॑र॒ण्याना᳚ पश॒ूनाम॑सूयत। याव॑ती॒ᳶ
किय॑तीश्चप्र॒जावाच॒व्वँद॑न्ति। तास॒ाᳬ सर्वा॑साᳬसूयते।।11।।
270502
यए॒तेन॒यज॑ते। यउ॑चैनमे॒वँव्वेद॑। न॒ारा॒श॒स्यर्चाऽभिषि॑ञ्चति।
म॒नु॒ष्या॑वै नर॒ाशᳬस॑ः। नि॒ह्नुत्य॒वावैतत्। अथ॒ाभिषि॑ञ्चति।
यत्किञ्च॑राज॒सूय॑मनुत्तर वे॒दीकँ॑म्। तथ्सर्वं॑ भवति। येमे॑पञ्च॒ाशत॑न्द॒दुः।
अश्वा॑नाᳬस॒धस्तु॑तिः। द्यु॒मद॑ग्ने मह॒िश्रव॑ः। बृ॒हत्कृ॑धि म॒घेना᳚म्।
नृ॒वद॑मृतनृ॒णाम्।।12।।
270500
सू॒य॒ते स॒धस्तु॑ति॒ स्त्रीणि॑च ।।5।।
270601
ए॒षगो॑स॒वः। ष॒ट्त्रि॒ᳬश उ॒क्थ्यो॑बृ॒हथ्सा॑मा। पव॑माने कण्वरथन्त॒रं भ॑वति।
योवैवा॑ज॒पेय॑ः। सस॑म्राट् थ्स॒वः। यो रा॑ज॒सूय॑ः। सव॑रुणस॒वः।
प्र॒जाप॑ति॒स्स्वारा᳚ज्यं परिमे॒ष्ठी। स्वारा᳚ज्य॒ङ्गौरे॒व। गौरि॑वभवति ।।13।।
270602
य ए॒तेन॒ यज॑ते। यउ॑चैनमे॒वँव्वेद॑। उ॒भे बृ॑हद्रथन्त॒रे भ॑वतः। तद्धि
स्वारा᳚ज्यम्। अ॒युत॒न्दखि॑णाः। तद्धिस्वारा᳚ज्यम्। प्र॒ति॒धुष॒ाऽभिषि॑ञ्चति।
तद्धिस्वारा᳚ज्यम्। अनू॑द्धते॒ वेद्यै॑दखिण॒त अ॑हव॒नीय॑स्य बृह॒तस्स्तो॒त्रं
प्रत्य॒भिषि॑ञ्चति। इ॒यव्वाँ॑व र॑थन्त॒रम् ।।14।।
270603
अ॒सौबृ॒हत्। अ॒नयो॑रे॒वैन॒मन॑न्तर् हितम॒भिषि॑ञ्चति। प॒शु॒त॒ोमो वा
ए॒षः। तेन॑गोस॒वः ष॒ट्त्रि॒ᳬशस्सर्व॑ः। रे॒वज्ज्ञातस्सह॑सा वृ॒द्धः।
ख्स॒त्राणा᳚ङ्क्ष॒त्रभृत्त॑मो वय॒ोधाः। म॒हान्म॑हि॒त्वेत॑स्तभ॒ानः। ख्स॒त्रेरा॒ष्ट्रे च॑जागृहि।
प्र॒जाप॑तेस्त्वा परमे॒ष्ठिन॒स्स्वारा᳚ज्येन॒ाभिषि॑ञ्चा॒मीत्या॑ह। स्वारा᳚ज्यमे॒वैन॑ङ्गमयति ।।15।।
270600
इ॒वभ॒व॒ति॒र॒थ॒न्त॒रमा॒ हैक॑ञ्च ।।6।।
270701
सि॒ᳬहे व्या॒घ्र उ॒त या पृदा॑कौ। त्विषि॑र॒ग्नौ ब्रा᳚ह्म॒णे सूर्ये॒या।

इन्द्रय्याँदेवीसुभगा जजान। सानआगन्वर्चसा सँव्विदाना। याराजन्ये
दुन्दुभावायतायाम्। अश्वस्य क्रन्द्ये पुरुषस्य मायौ। इन्द्रय्यँ देवी
सुभगाजजान। सानआगन्वर्चसा सँव्विदाना। याहस्तिनि द्वीपिनीया हिरण्ये।
त्विषिरश्वेषु पुरुपेषु गोषु ।।16।।
270702
इन्द्रय्याँदेवीसुभगाजजान। सानअगस्वर्चसा सँव्विदाना। रथेअख्षेषु वृषभस्य
वाजे। वातेपर्जन्ये वरुणस्य शुष्मे। इन्द्रय्याँदेवी सुभगाजजान।
सान आगन्वर्चसासँव्विदाना। राडसिविराडसि। सम्राडसि स्वराडसि। इन्द्रायत्वा
तेजस्वते तेजस्वन्तश्रीणामि। इन्द्रायत्वौजस्वत ओजस्वन्तश्रीणामि।।17।।
270703
इन्द्रायत्वा पयस्वते पयस्वन्तश्रीणामि। इन्द्राय त्वाऽऽयुष्मत
आयुष्मन्तः श्रीणामि। तेजोसि। तत्तेप्रयच्छामि। तेजस्वदस्तु मेमुखम्।
तेजस्वच्छिरो अस्तुमे। तेजस्वान् विश्वतःप्रत्यङ्। तेजसा संपिपृग्धिमा।
ओजोसि। तत्ते प्रयाच्छामि।।18।।
270704
ओजस्वदस्तु मेमुखम् ओजस्वच्छिरो अस्तुमे। ओजस्वान् विश्वतः प्रत्यङ्।
ओजसासंपिपृग्धिमा। पयोसि। तत्तेप्रयच्छामि। पयस्वदस्तुमे मुखम्। पयस्वच्छिरो
अस्तुमे। पयस्वान् विश्वतः प्रत्यङ्। पयसा सं पिपृग्धिमा ।।19।।
270705
आयुरसि। तत्तेप्रयच्छामि। आयुष्मदस्तु मेमुखम्।आयुष्मच्छिरो अस्तुमे।
आयुष्मान् विश्वतःप्रत्यङ्। आयुषासंपिपृग्धिमा।
इममग्न आयुषे वर्चसे कृधि । प्रियः रेतो वरुणसोमराजन्।
मातेवास्मा अदितेशर्मयच्छ। विश्वेदेवाजरदष्टिर्यथाऽसत्।।20।।
270706
आयुरसि विश्वायुरसि। सर्वायुरसि सर्वमायुरसि। यतो वातो मनोजवाः। यतः
ख्षरन्ति सिन्धवः। तासान्त्वासर्वासाः रुचा। अभिषिञ्चामिनर्चसा। समुद्र
इवासिगह्मना। सोम इवास्यदाभ्यः। अग्निरिन विश्वतःप्रत्यङ्।
सूर्यइवज्योतिषाविभूः।।21।।
270707
अपाँय्योद्रवणेरसः। तमहमस्मा आमुष्यायणाय। तेजसे ब्रह्मवर्चसाय गृह्णामि।
आपाय्यँऊर्मौरसः। तमहमस्मा आमुष्यायणाय। ओजसेवीर्यायगृह्णामि। अपाँय्यो

म॑ध्य॒तोरस॑ः। तम॒हम॒स्मा आ॑मुष्याय॒णाय॑। पुष्ट्यै᳚ प्र॒जन॑नाय
गृह्णामि। अ॒पाँय्यो य॒ज्ञियो॒रस॑ः। तम॒हम॒स्मा अ॑मुष्याय॒णाय॑।
आयु॑षे दीर्घायु॒त्वा॑ गृह्णामि ।।22।।
270700
गोष्वो ज॑स्वन्तꣳ श्रीणा॒म्योजो॑सि॒ तत्ते॒ प्रय॑च्छामि॒पय॑सा॒
संपि॑पृग्धि॒माऽस॑द्धि॒भूर्य॒ज्ञियो॒रसो॒ द्वेच॑ ।।7।।
270801
अ॒भिप्रेही॑ वी॒रय॑स्व। उ॒ग्रश्चेत्ता॑सपत्न॒हा। आति॑ष्ठमित्र॒वर्ध॑नः। तुभ्य॑न्दे॒वा
अधि॑ब्रवन्। अ॒ङ्कौन्य॒ङ्काव॒भित॒ आति॑ष्ठवृत्रह॒न्नर्थ᳚म्। आ॒तिष्ठ॑न्त॒ं परि॒विश्वे॑
अभूषन्। श्रिय॒व्वँसा॑नश्चरति॒स्वरो॑चाः। म॒हत्तद॒स्यासु॑रस्य॒नाम॑।
आवि॒श्वरू॑पो अ॒मृता॑नितस्थौ। अनु॒ त्वेन्द्रो॑ मद॒त्वनु॒बृह॒स्पति॑ः ।।23।।
270802
अनु॒सोमो॒ अन्व॒ग्निरा॑वीत्। अनु॑त्वा॒ विश्व॑दे॒वा अ॑वन्तु। अनु॑स॒प्तराजा॑नो॒य
उ॒ताभिषि॑क्ताः। अनु॑त्वा मि॒त्रावरु॑णावि॒हाव॑तम्। अनु॒द्यावा॑पृथि॒वी
वि॒श्वश॑म्भू। सूर्यो॒ अहो॑भि॒रनु॑ त्वाऽवतु। च॒न्द्रमा॒
नख्ष॑त्रै॒रनु॑त्वाऽवतु। द्यौश्च॑त्वा पृथि॒वीच॒ प्रचे॑तसा। शु॒क्रो
बृ॒हद्दख्षि॑णात्वापिपर्तु। अनु॑स्व॒धा चि॑किता॒ꣳ
सोमो॑ अ॒ग्निः। आयं पृ॑णक्तु॒ रज॑सी उ॒पस्थ᳚म् ।।24।।
270800
बृह॒स्पति॒स्सोमो॑ अ॒ग्नि रेक॑ञ्च ।।8।।
270901
प्र॒जाप॑तिᳶप्र॒जाअ॑सृजत। ता अ॑स्माथ्सृ॒ष्टाᳶपरा॑चीरायन्। सए॒तं
प्र॒जाप॑तिरोद॒नम॑पश्यत्। सोऽन्नं॑ भू॒तो॑ऽतिष्ठत्। ता
अ॒न्यत्रा॒न्नाद्य॒मवि॑त्वा। प्र॒जाप॑तिं प्र॒जा
उ॒पाव॑र्तन्त। अन्नमे॒वैनं॑ भूतं पश्य॑न्तीᳶ प्र॒जा उ॒पाव॑र्तन्ते। य ए॒तेन॒यज॑ते। य
उ॑चैनमे॒वँव्वेद॑। सर्वा॒ण्यन्ना॑नि भवन्ति ।।25।।
270902
सर्वे॒ पुरु॑षाः। सर्वा᳚ण्ये॒वान्ना॒न्यव॑रुन्धे। सर्वा॒न्पुरु॑षान्। राड॑सि वि॒राड॒सीत्या॑ह।
स्वारा᳚ज्यमे॒वैन॑ङ्गमयति। यद्धिर॑ण्य॒न्ददा॑ति। तेज॒स्तेनाव॑रुन्धे। यत्ति॑सृध॒न्वम्।
वी॒र्य॑न्तेन॑। यदष्ट्रा᳚म्।।26।।
270903
पुष्टि॒न्तेन॑। यत्क॑म॒ण्डलु᳚म्। आयु॒ष्टेन॑। यद्धिर॑ण्यमाब॒ध्नाति॑। ज्योति॒र्वै हिर॑ण्यम्।

ज्योतिरे॒वास्मि॑न्दधाति। अथो॒ तेज॒ो वै हिर॑ण्यम्। तेज॑ ए॒वात्मन्ध॑त्ते। यदो॑द॒नं

प्रा॒श्ञाति॑। ए॒तदे॒व सर्व॑मव॒रुध्य॑ ।।27।।

270904

तद॑स्मिन्नेकु॒दाऽधा॑त्। रो॒हि॒ण्याङ्का॒र्य॑ः। यद्ब्रा॑ह्म॒ण

ए॒व रो॑हि॒णी। तस्मा॑दे् चव। अथो॒वर्ष्मै॒वैन॑ं समा॒नाना॑ङ्करोति।

उ॒द्य॒तासू॒र्ये॑णक॒ार्य॑ः। उ॒द्यन्त॒व्वाँ ए॒तं सर्वा॑ः

प्र॒जाःप्रति॑नन्दन्ति। दि॒दृ॒ख्षेण्यो॑

दर् श॒नीयो॑भवति। य ए॒वँव्वेद॑। ब्र॒ह्म॒वा॒दिनो॑वदन्ति।।28।।

270905

अ॒वेत्यो॑वभृ॒था 3 ना 3 इति॑। यद्द॑र्भपु॒ञ्जी॒लैःपु॒वय॑ति। तथ्स्व॑दे॒वावै॑ति।

तन्नावै॑ति। त्रि॒भिःप॑वयति। त्रय॑इ॒मेल॒ोकाः। ए॒भिरे॒वैन॑ल्लो॒कैःप॑वयति।

अथो॑अ॒पाव्वाँ ए॒तत्तेज॒ोवर्च॑ः। यद्द॒र्भाः। यद्द॑र्भपु॒ञ्जी॒लैःपु॒वय॑ति।

अ॒पामे॒वैन॒न्तेज॑सा॒वर्च॑सा॒ऽभिषि॑ञ्चति ।।29।।

270900

भ॒व॒न्त्यष्टा॑मव॒रुध्य॑ वदन्ति द॒र्भा यद्द॑र्भपु॒ञ्जी॒लैः पु॒वय॒त्येक॑ञ्च ।।9।।

271001

प्र॒जाप॑तिरकामयत ब॒होर्भूया॑न् थ्स्या॒मिति॑। स ए॒तं

प॑ञ्चशार॒दीय॑मपश्यत्। तमाऽह॑रत्। तेना॑यजत। तत॒ो वै

सब॒होर्भूया॑नभवत्। यःक॒ामये॑त ब॒होर्भूया॑न् थ्स्या॒मिति॑। सप॑ञ्च

शार॒दीये॑न यजेत। ब॒होरे॒वभूया॑न्भवति। म॒रु॒थ्स॒ोमोवा ए॒षः।

म॒रुत॒ोहिदे॒वान॒ां भूय॑ष्ठाः ।।30।।

271002

ब॒हु॒र्भ॑वति। यए॒तेन॒ यज॑ते। य उ॑चैनमे॒वँव्वेद॑। प॒ञ्च॒शा॒र॒दीयो॑भवति। पञ्च॒वा

ऋ॒तव॑स्सव्वँथ्स॒रः। ऋ॒तुष्वे॒व स॑व्वँथ्स॒रेप्रति॑तिष्ठति।

अथो॒पञ्चा॑ख्षरापु॒ङ्क्तिः। पाङ्क्तो॑य॒ज्ञः। य॒ज्ञमे॒वाव॑रुन्धे। स॒प्त॒द॒शस्तोम॒ानाति॑यन्ति।

स॒प्त॒द॒शःप्र॒जाप॑तिः प्र॒जाप॑ते॒राप्त्यै॑ ।।31।।

271000

भूयि॑ष्ठायन्ति॒ द्वेच॑ ।।10।।

271101

अ॒गस्त्यो॑ म॒रुद्भ्य॑उ॒ख्ष्णः प्रोख्ष॑त्। तानिन्द्र॒ आद॑त्त। तए॑न॒व्वँज्र॑मु॒द्यत्य॒ाभ्याय॑न्त।

तान॒गस्त्य॑श्चैवेन्द्र॑श्च कयाश॒ुभीये॑ नाशमयताम्। ताञ्छा॒न्तानुपा॑ह्वयत।

यत्कया॑श॒ुभीय॒ं भव॑ति॒ शान्त्यै॑। तस्मा॑दे॒त ऐन्द्रा॑मारु॒ता

उ॒ख्षार्ण॑स्सव॒नीया॑ भवन्ति। त्र॒य॑ᳲप्रथ॒मेऽह॒न्नाल॑भ्यन्ते। ए॒वन्द्वि॒तीये᳚।
ए॒वन्तृ॒तीये᳚ ।।32।।
271102
ए॒वञ्च॑तु॒र्थे। पञ्चो᳚त्त॒मेऽह॒न्नाल॑भ्यन्ते। वर्
षि॑ष्ठमिव॒ह्यो॑तदह॑ः। वर् षि॑ष्ठस्सम॒ानानां᳚ भवति। य ए॒तेन॒ यज॑ते।
यउ॑चैन मे॒वँव्वेद॑। स्वारा᳚ज्य॒व्वाँ ए॒षय॒ज्ञः। ए॒तेन॒ वा एक॒या
वा॑कान्द॒मस्स्वारा᳚ज्यमगच्छत्। स्वरा᳚ज्यङ्गच्छति। य ए॒तेन॒ यज॑ते ।।33।।
271103
यउ॑चैनमे॒वँव्वेद॑। मा॒रु॒तो वा ए॒षस्स्तोम॑ः। ए॒तेन॒वै म॒रुतो॑ दे॒वाना॑ं
भूयि॑ष्ठाअभवन्। भूयि॑ष्ठस्सम॒ानानां᳚भवति। यए॒तेन॒ यज॑ते। य
उ॑चैनमे॒वँव्वेद॑। प॒ञ्च॒शा॒र॒दीयो॒वा ए॒ष य॒ज्ञः। आप॑ञ्च॒मात्पु
रु॑षा॒दन्न॑मत्ति। यए॒तेन॒ यज॑ते। यउ॑चैनमे॒वँव्वेद॑।
स॒प्त द॒शस्तोमा॒नाति॑यन्ति। स॒प्त॒द॒शᳲ
प्र॒जाप॑तिः। प्र॒जाप॑तेरे॒वनैति॑ ।।34।।
271100
तृ॒तीये॑ गच्छति॒ यए॒तेन॒ यज॑तेऽ त्तियए॒ तेन॒यज॑ते॒ यउ॑चैनमे॒वँ व्वेद॒ त्रीणि॑च।।11।।
271201
अ॒गस्त्य॒ स्स्वारा᳚ज्यं मारु॒तᳲप॑ञ्चशार॒ दीयो॒वा ए॒षय॒ज्ञ स्स॑प्तद॒शं प्र॒जाप॑तेरे॒वनैति॑।।
अ॒स्या जरा॑सोद॒मामरि॒त्रा᳚ः। अ॒र्चद्धू॑मासो अ॒ग्नय॑ᳲपात॒काः।
श्वि॒ती॒चय॑श्श्वा॒त्रासो॑ भु॒रण्यव॑ः। व॒न॒र् षदो॑वा॒यवो॒ नसोमा᳚ः। यजा॑नो
मि॒त्रावरु॑णा। यजा॑दे॒वाᳲऋ॒तं बृ॒हत्। अग्ने॒ यक्षि॒स्वन्दम॑म्। अश्वि॑ना॒
पिब॑तᳳ सु॒तम्। दीद्य॑ग्नी शुचिव्रता। ऋ॒तुना॑ यज्ञवाहसा।।35।।
271202
द्वेविरू॑पे चरत॒स्स्वर्थे᳚। अ॒न्याऽन्या॑व॒थ्समुप॑ धापयेते। हरि॑र॒न्यस्या॑ं भव॑ति
स्व॒धावान्। शु॒क्रो अ॒न्यस्या᳚न्ददृशे सु॒वर्चा᳚ः। पू॒र्वा॒प॒रञ्च॑रतो
मा॒यये॒तौ। शिशू॒ क्रीड॑न्त॒ौ परि॑यातो अध्व॒रम्। विश्वा᳚न्य॒न्योभुव॑नाऽभि॒चष्टे᳚।
ऋ॒तून॒न्यो वि॒दध॑ज्जायत॒े पुन॑ः। त्रीणि॑ श॒ता त्रीष॒हस्रा᳚ण्य॒ग्निम्। त्रि॒ᳳश॑च्च
दे॒वानवा॑सा सपर्यन् ।।36।।
271203
औख्य॑न्घृ॒तैरा॑स्तृ॒णन्ब॒र् हिर॑स्मै। आदिद्धोता॑र॒न्न्य॑षादयन्त। अ॒ग्निना॒ऽग्निस्समि॑ध्यते।
क॒विर्गृ॒हप॑ति॒र्युवा᳚। ह॒व्य॒वाड्जु॒ह्वा᳚स्यः। अ॒ग्निर्दे॒वाना᳚ञ्ज॒ठर॑म्।

पूतदक्षःकविक्रतुः। देवोदेवेभिरागमत्। अग्निश्रियो मरुतो
विश्वकृष्टयः। आत्वेषमुग्रमव ईमहेवयम् ।।37।।
271204
तेस्वानिनो रुद्रिया वर् षनिर्णिजः।
सिꣳहान हेषक्रतवस्सुदानवः। यदुत्तमे मरुतो मध्यमेवा।
यद्वाऽनमेसुभगासोदिविष्ठ। ततोनोरुद्रा उतवाऽन्वस्य। अग्ने
वित्ताद्धविषोयद्यजामः। ईडेअग्नि स्ववसन्नमोभिः। इह
प्रसत्तोविचयत्कृतन्नः। रथैरिव प्रभरे
वाजयद्भिः। प्रदक्षिणिन्मरुताꣳ स्तोममृद्ध्याम् ।।38।।
271205
श्रुधिश्रुत्कर्ण वह्निभिः। देवैरग्नेसयावभिः। आसीदन्तुबर् हिषि। मित्रो वरुणो अर्यमा।
प्रातर्यावाणोअध्वरम्। विश्वेषामदितिर्यज्ञियानाम्।
विश्वेषामतिथिर्मानुषाणाम्। अग्निर्देवानामवआवृणानः। सुमृडीकोभवतु
विश्ववेदाः। त्वेअग्ने सुमतिं भिक्षमाणाः ।।39।।
271206
दिविश्रवो दधिरे यज्ञियासः। नक्ताचचक्रुरुषसा
विरूपे। कृष्णञ्च वर्णमरुणञ्चसन्धुः। त्वामग्नआदित्यास आस्यम्।
त्वाञ्जिह्वाꣳ शुचयश्चक्रिरे कवे। त्वाꣳ रातिषाचो अध्वरेषु सश्चिरे। त्वेदेवा
हविरदन्त्याहुतम्। नित्वायज्ञस्य साधनम्। अग्नेहोतारमृत्विजम्।
वनुष्वद्देवधीमहि प्रचेतसम्। जीरन्दूतममर्त्यम्।।40।।
271200
यज्ञवाहसासपर्यन्वयमृद्ध्यांभिक्षमाणः प्रचेतसमेकञ्च ।।12।।
271301
तिष्ठाहरीरथ आयुज्यमानायाहि। वायुर्ननियुतोनोअच्छ। पिबास्यन्धो
आभिसृष्टोअस्मे। इन्द्रस्स्वाहाररिमातेमदाय। कस्यवृषा सुतेसचा।
नियुत्वान्वृषभोरणत्। वृत्रहा सोमपीतये। इन्द्रव्वँयम्महाधने।
इन्द्रमर्भे हवामहे। युजव्वृँत्रेषु वज्रिणम् ।।41।।
271302
द्विताायोवृत्रहन्तमः। विदइन्द्रश्शतक्रतुः। उपनोहरिभिस्सुतम्। ससूर्
आजनयञ्ज्योतिरिन्द्रम्। अयाधियातरणिरद्रिबर् हाः। ऋतेनशुष्मीनवमानो
अर्कैः। व्युस्रिधो अस्त्रोअद्रिर्बिभेद। उतत्यदाश्वश्वियम्।

यदिन्द्र नाहुषीष्वा। अग्नेविखुप्रतीदयत् ।।42।।
271303
भरेष्विन्द्रंसुहवं हवामहे। अंहोमुचंसुकृतन्दैवञ्जनम्।
अग्निम्मित्रव्वँरुणं सातयेभगम्। द्यावापृथिवी मरुतस्स्वस्तये।
महिख्षेत्रं पुरुश्चन्द्रँव्विविद्वान्। आधित्सखिभ्यश्चरथं समैरत्। इन्द्रो
नृभिरजनद्दीद्यानस्साकम्। सूर्यमुषसङ्गातुमग्निम्।
उरुन्नोलोकमनुनेषिविद्वान्। सुवर्वज्ज्योतिरभयस्वस्ति ।।43।।
271304
ऋष्वात इन्द्रस्थविरस्य बाहू। उपस्थेयामशरणा बृहन्ता। आनो
विश्वाभिरूतिभिस्स जोषाः। ब्रह्मजुषाणो हर्यश्वयाहि। वरीवृजत्
स्थ्सविरेभिस्सुशिप्र। अस्मेदधद्वृषणंशुष्ममिन्द्र।
इन्द्रायगाव अशिरम्। दुदुह्रेवज्रिणेमधु। यथ्सीमुपह्वरे विदत्।
तास्तेवज्रिन्धेनवोजो जयुर्नः ।।44।।
271305
गभस्तयो नियुतोविश्ववाराः। अहरहर्भूय इज्झोगुवानाः। पूर्णाइन्द्रख्षुमतो भोजनस्य।
इमान्तेधियं प्रभरेमहो महीम्। अस्यस्तोत्रेधिषणायत्त आनजे। तमुथ्सवेच
प्रसवेच सासहिम्। इन्द्रन्दे वासश्शवसामदन्ननु ।।45।।
271300
वज्रिणमयथ्स्वस्ति जोजयुर्नस्सप्तच।।13।।
271401
प्रजापतिःपशूनसृजत। तेऽस्माथ्सृष्टाः पराञ्चआयन्।
तानग्निष्टोमेननाप्नोत्। तानुक्थ्येननाप्नोत्। तान् थ्षोडशिना नाप्नोत्।
तान्रात्रियानाप्नोत्। तान् थ्सन्धिना नाप्नोत्। सोग्निमब्रवीत्। इमान्म
ईप्सेति। तानग्निस्त्रिवृतास्तोमेननाप्नोत्।।46।।
271402
सइन्द्रमब्रवीत्। इमान्म ईप्सेति। तानीन्द्रः पञ्चदशेन स्तोमेन नाप्नोत्।
सविश्वान्देवानब्रवीत्। इमान्म ईप्सतेति। तान् विश्वेदेवास्सप्त
दशेनस्तोमेन नाप्नुवन्। सविष्णुमब्रवीत्। इमान्मईप्सेति। तान्
विष्णुरेकविंशेन स्तोमेनाप्नोत्। वारवन्तीयेनावारयत।।47।।
271403
इदँव्विष्णुर्विचक्रमइति व्यक्रमत। यस्मात्पशवःप्रप्रेवभ्रंशेरन्। स एतेनयजेत।
यदाप्नोत्। तदप्तोर्यामस्याप्तोर्यामत्वम्। एतेनवैदेवा

जैत्वानिजित्वा। यङ्कामुमकामयन्ततमाँप्नुवन्। यङ्कामङ्कामयते। तमे तेनाँप्नोति ।।48।।
271400
स्तमेनुनाप्नोदवारयतनव च।।14।।
271501
व्याघ्रोऽयमुग्नौचरति प्रविष्टः। ऋषीणां पुत्रो अभिशस्तिपा अयम्।
नुमस्कारेण नमसाते जुहोमि। मा देवानाँम्मिथुयाकर्मभागम्। सावीर्।
हि देवप्रसुवायपित्रे। वर्ष्माणमस्मैवरिमाणमस्मै। अथास्मभ्यंं
सवितस्सुर्वताता। दिवेदिव आसुवाभूरिपश्वः। भूतोभूतेषु चरति
प्रविष्टः। सभूतानामधिपतिर्बभूव ।।49।।
271502
तस्यमृत्यौ चरति राजसूयम्। सराजाराज्यमनुमन्यतामिदम्।
येभिश्शिल्पैःपप्रथानामदृंहत्। येभिर्द्यामभ्यपिंशत्प्रजापतिः।
येभिर्वाचँव्विश्वरूपाःसमव्ययत्। तेनेममग्रइहवर्चसा समङ्ग्धि।
येभिरादित्यस्तपतिप्रकेतुभिः। येभिस्सूर्योददृशे चित्रभानुः। येभिर्वाचं
पुष्कलेभिरव्ययत्। तेनेममग्रइहवर्चसासमङ्ग्धि ।।50।।
271503
आयंभातुशवसा पञ्चकृष्टीः। इन्द्रइवज्येष्ठो भवतु प्रजावान्।
अस्माअस्तुपुष्कलञ्चित्रभानु। आयंपृणक्तुरजसीउपस्थम्।
यत्तेशिल्पङ्कश्यपरोचनावत्। इन्द्रियावत्पुष्कलञ्चित्रभानु। यस्मिन् थ्सूर्या
अर्पितास्सप्तसाकम्। तस्मिन्राजानमधिविश्रयेमम्। द्यौरसिपृथिव्यसि।
व्याघ्रो वैयाघ्रेऽधि ।।51।।
271504
विश्रयस्वदिशोमहीः। विशस्त्वासर्वावाञ्छन्तु। मात्व
द्राष्ट्रमधिभ्रशत्। यादिव्याआपःपयसा संबभूवुः। या अन्तरिख्ष
उतपार्थिवीर्याः। तासाँन्त्वासर्वासाः रुचा। अभिषिञ्चामि वर्चसा।
अभित्वावर्चसाऽसिचन्दिव्येन। पयसासह। यथासाराष्ट्रवर्धनः ।।52।।
271505
तथाँत्वासविताकरत्। इन्द्रँव्विश्वा अवीवृधन्। समुद्रव्यचसङ्गिरः। रथीतमः
रथीनाम्। वाजानाः सत्पतिंपतिम्। वसवस्त्वापुरस्ता दभिषिञ्चन्तु
गायत्रेण छन्दसा। रुद्रास्त्वा दख्षणतोऽभिषिञ्चन्तु त्रै ष्टु भेन छन्दसा।
आदित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा। विश्वेत्वादेवा

उत्तरतोऽभिषिञ्चन्त्वानुष्टु भेनछन्दसा। बृहस्पतिस्त्वो परिष्टादभिषिञ्चतु
पाङ्क्तेन छन्दसा ।।53।।
271506
अरुणन्त्वावृ कमुग्रङ्खजङ्करम्। रोचमानं मरुतामग्रे अर्चिषः। सूर्यवन्तं
मघवानँव्विषासहिम्। इन्द्रमुक्थेषु नाम हूतमङ्हुवेम।
प्रबाहवासिसृतञ्जीवसेनः। आनो गव्यूतिमुख्षतङ्घृतेन। अनोजने श्रवयतय्युँवाना। श्रुतं
मे मित्रावरुणा हवेमा। इन्द्रस्यते वीर्यकृतः। बाहू उपावहरामि।।54।।
271500
बभूवाव्ययत्तेनेममग्र इहवर्चसा समङ्ग्धि वैयाग्रेऽधि राष्ट्रवर्धनः
पाङ्क्तेन छन्दसोपावहरामि।।15।।
271601
अभि प्रेहि वीरयस्व। उग्रश्चेत्ता सपत्नहा। आतिष्ठवृत्रहन्तमः।
तुभ्यन्देवा अधिब्रवन्। अङ्कौ न्यङ्कावभितो रथँय्यौ।
ध्वान्तव्वाँताग्रमनुसञ्चरन्तौ। दूरेहेतिरिन्द्रियावाँन्पतत्री। ते नोऽग्नयः
पप्रयःपारयन्तु। नमस्तत्रृषेगद। अव्यथायैत्वा स्वधायैत्वा।।55।।
271602
मा न इन्द्राभितस्त्वदृष्वारिष्टासः। एवा ब्रह्मन्तवेदस्तु। तिष्ठा रथे
अधियद्वज्रहस्तः। आरश्मीन्देवयुवसेस्वश्वः। आतिष्ठ वृत्रहन्नातिष्ठन्तं
परि। अनुत्वेन्द्रो मदत्वनुत्वा मित्रावरुणौ। द्यौश्च त्वा पृथिवीच
प्रचेतसा। शुक्रो बृहद्दक्षिणा त्वा पिपर्तु। अनुस्वधा चिकिताङ् सोमो अग्निः।
अनुत्वाऽवतु सविता सवेन ।।56।।
271603
इन्द्रँव्विश्वा अवीवृधन्। समुद्रव्यचसङ्गिरः। रथीतमङ् रथीनाम्।
वाजानाङ् सत्पतिं पतिम्। परिमासेन्या घोषाः। ज्यानाँव्वँजन्तु गृध्नवः।
मेथिष्ठाः पिन्वमाना इह। माङ्गोपतिमभिसँव्विशन्तु। तन्मेऽनुमतिरनुमन्यताम्।
तन्माता पृथिवीतत्पिताद्यौः ।।57।।
271604
तद्ग्रावाणस्सोमसुतो मयोभुवः। तदश्विना शृणुतङ् सौभगायुवम्। अवतेहेडु उदुत्तमम्।
एनाव्याघ्रंपरिषस्वजानाः। सिङ्हङ् हिन्वन्ति महतेसौभगाय। समुद्रन्न
सुहवन्तस्थिवाङ्सम्। मर्मृज्यन्ते द्वीपिनमप्स्वन्तः। उदसावतु सूर्यः
उदिदं मामकव्वँचः। उदिहिदेवसूर्य। सहवग्नुनाममम। अहव्वाँचो

विवार्चनम्। मयिवार्गस्तुधर्णसिः। यन्तुनदयो वर् षन्तु पर्जन्याः।

सुपिप्पला ओषधयो भवन्तु। अन्नवतामोदनवतामामिक्षवताम्। एषाः राजा भूयसाम् ।।58।।

271600

स्वधायैत्वा सवेनद्यौस्सूर्यसप्तर्च।।16।।

271701

येकेशिनःप्रथमास्सत्रमासत। येभिराभृतय्यँदिदँव्विरोचते। तेभ्यो जुहोमि

बहुधा घृतेन। रायस्पोषेणेमव्वँर्चसा सः सृजाथ। नर्तेब्रह्मण

स्तपसो विमोकः। द्विनाम्नी दीख्षावशिनीह्युग्रा। प्रकेशास्सुवतेखाण्डिनो

भवन्ति। तेषं ब्रह्मेदीशे वपनस्य नान्यः। आरोहप्रोष्ठँव्विषहस्वशत्रून्।

आवास्राग्दीख्षावशिनीह्युग्रा ।।59।।

271702

देहि दख्षिणं प्रति रस्वायुः। अथामुच्यस्व वरुणस्य पाशात्।

येनावपथ्सविताख्षुरेण। सोमस्य राज्ञो वरुणस्यविद्वान्। तेनब्रह्मणो

वपतेदमस्योर्जेमम्। रय्या वर्चसा सः सृजाथ। मातेकेशाननुगाद्वर्च

एतत्। तथाधाता करोतुते। तुभ्यमिन्द्रो बृहस्पतिः। सवितावर्चिअदधात् ।।60।।

271703

तेभ्योनिधानंबहुधाव्यैच्छन्। अन्तराद्यावापृथिवी अपस्सुवः। दर्भिस्तम्बे

वीर्यकृते निधाय। पौःस्येनेमव्वँर्चसासःसृजाथ। बलन्ते

बाहुवोस्सविता दधातु। सोमस्त्वाऽनक्तु पयसा घृतेन। स्त्रीषु

रूपमश्विनैतन्निधत्तम्। पौःस्येनेमव्वँर्चसासःसृजाथ।

यथ्सीमन्तङ्कङ्कतस्तेलिलेख। यद्वाख्षुरःपरिववर्जवपःस्ते।

स्त्रीषुरूपमश्विनैतन्निधत्तम्। पौःस्येनेमः सः सृजाथो वीर्येण ।।61।।

271700

अवास्राग्दीख्षावशिनीह्युग्राऽदधाद्ववर्जवप 'स्तेद्वेच ।।17।।

271801

इन्द्रँव्वैस्वाविशो मरुतोनापाचायन्। सोऽनपचाय्याएतँव्विघनमपश्यत्।

तमाऽहरत्। तेनायजत। तेनैवासान्तः स स्तम्भव्व्यँहन्। यद्व्यहन्।

तद्विघनस्य विघनत्वम्। विपाप्मानं भ्रातृव्यः हते। यएतेन यजते।

यउचैनमेवँव्वेद ।।62।।

271802

यःराजाणँव्विशोनापचायेयुः। योवाब्राह्मणस्त मसापाप्मनाप्रा वृतस्स्यात्। सएतेन यजेत।

विघनेनैवैनद्विहत्य। विशामाधिपत्यङ्गच्छति। तस्यद्वेद्वादुशे

स्तो॒त्रेभ॑व॑तः। द्वेच॑तु॒र्वि॒ꣳशे। औद्भि॑द्यमे॒वतत्। ए॒तद्वैख्ष॒त्रस्यौद्भि॑द्यम्।
यद॑स्मै॒स्वाविशो॑ ब॒लिꣳ हर॑न्ति ।।63।।
271803
हर॑न्त्यस्मै॒ विशो॑ब॒लिम्। ऐने॒मप्र॑तिख्यातङ्गच्छति। यए॒वँव्वेद॑।
प्र॒बाहु॒ग्वा अग्रे॑ ख्ष॒त्राण्याते॑पुः। तेषा॒मिन्द्रः॑
ख्षा॒त्राण्याद॑त्त। नवाइ॒मानि॑ ख्ष॒त्राण्य॑भूव॒न्निति॑। तन्नख्ष॑त्राणन्नख्षत्र॒त्वम्।
आश्रेय॑सो॒ भ्रातृ॑व्यस्य॒ तेज॑इन्द्रि॒यन्द॑त्ते। यए॒तेन॒ यज॑ते। यउ॑चैनमे॒वँव्वेद॑।।64।।
271804
तद्यथा॑ह॒वै स॑च॒क्रिणौ॒ कर्प्लु॑कावु॒पाव॑हितौ॒ स्याता॑म्। ए॒वमे॒तौ यु॒ग्मन्तौ॒स्तोमौ॑।
अ॒युख्षु॒स्तोमे॑षु क्रियते। पा॒प्मनोप॑हत्यै। अप॑पा॒प्मानं॒ भ्रातृ॑व्यꣳ
हते। यए॒ तेन॒ यज॑ते। यउ॑चैनमे॒वँव्वेद॑। तद्यथा॑ ह॒वै
सू॑तग्राम॒ण्यः॑ । ए॒वञ्छन्दाꣳ॑सि । तेष्व॒सावा॑दि॒त्यो बृ॑ह॒ती र॒भ्यू॑ढः ।।65।।
271805
स॒तोबृ॑हतीषु स्तुवते स॒तो बृ॑हन् । प्र॒जया॑
प॒शुभि॑रस॒ानीत्ये॒व । व्यति॑षक्ताभिस्स्तुवते । व्यति॑षक्तँ॒व्वै
ख्ष॒त्रँव्वि॒शा । वि॒शैवैन॑ङ्ख्ष॒त्रेण॒ व्यति॑षजति ।
व्यति॑षक्ताभिस्स्तुवते। व्यति॑षक्तो॒वै
ग्रा॑म॒णीस्स॑जा॒तैः। स॒जा॒तैरे॒वैन॒व्यँति॑षजति।
व्यति॑षक्ताभि स्स्तुवते। व्यति॑षक्तो॒वै पुरु॑षꣳपा॒प्मभिः॑।
व्यति॑षक्ताभिरे॒वास्य॑ पा॒प्मनो॑ नुदते ।।66।।
271800
वेद॒हर॑न्त्येनमे॒वँव्वेदा॒भ्यू॑ढꣳ पा॒प्मभि॒रेक॑ञ्च।।18।।
270000
त्रि॒वृद्यदा॑ग्ने॒यो॑ऽग्नि मु॑खा॒ह्यृद्धि॒र्यदा॑ग्ने॒य आ॑ग्ने॒यो
न वै सोमे॑न॒ यो वै सोमे॑नै॒ष गो॑स॒वस्सि॒ꣳहे॑ऽभि प्रेहि॑
मित्र॒वर्ध॑नः प्र॒जाप॑ति॒स्ता ओद॒॑नं प्र॒जाप॑तिरकामयत
ब॒होर्भूया॑न॒गस्त्यो॒स्या जरा॑स॒स्तिष्ठा॒ हरी॑ प्र॒जाप॑तिꣳ
प॒शून्व्य॒घ्रो॑ऽयम॒ भिप्रेहि॑ वृत्र॒हन्त॑मो॒ येके॒शिन॒
इन्द्र॒व्वाँ अ॒ष्टाद॑श ।।18।
त्रि॒वृद्योवै सोमे॒नायु॑रसि ब॒हुर्भ॑वति॒। तिष्ठा ह॒रीरथ॒ आयं

भा॑तु॒ तेभ्यो॑ नि॒धान॒ङ्॒षेट्॑ थ्र्वाँष्टिः ।।66।।

त्रि॒वृत्पा॒प्मनो॑ऽनुदते।। हरिः॑ओम्।।श्रीकृष्णार्पणमस्तु सप्तमप्पाठकस्समाप्तः

280000

अष्टमप्रपाठकप्रारम्भः हरिः ओम्।।

280101

पीवोऽन्नाꣳ रयिवृधस्सुमेधाः। श्वेतस्सिषक्ति नियुतामभिश्रीः।

तेवायवे समनसोवितस्थुः। विश्वेन्नरस्स्वपत्यानि चक्रुः।

रायेऽनुयञ्जज्ञतू रोदसी उभे। रायेदेवी धिषणाधातिदेवम्।

अधावायुन्नियुतस्सश्चतस्वाः। उतश्वेतव्वँसुधितिन्निरेके। आवायो

प्रयाभिः। प्रवायुमच्छा बृहतीमनीषा ।।1।।

280102

बृहद्रयिँव्विश्ववाराꣳ रथप्राम्। द्युतद्यामा नियुतꣳ पत्यमानः। कविꣳ

कविमियख्षसि प्रयज्यो।आनोनियुद्भि श्शतिनीभि रध्वरम्। सहस्रिणीभि

रुपयाहियज्ञम्। वायोअस्मिन् हविषिमादयस्व।

यूयंपातस्वस्तिभिस्सदानः। प्रजापते

नत्वदेतान्यन्यः। विश्वाजातानि परिता बभूव। यत्कामास्ते

जुहुमस्तन्नो अस्तु।।2।।

280103

वयस्याम पतयोरयीणाम्। रयीणां

पतिय्यँजतं बृहन्तम्। अस्मिन्भरेनृतमव्वाँजसातौ। प्रजापतिं

प्रथमजामृतस्य। यजामदेवमधिनोब्रवीतु। प्रजापतेत्वन्निधिपाꣳपुराणः।

देवानां पिताजनिताप्रजानाम्। पतिर्विश्वस्य जगतꣳपरस्पाः। हविर्नो

देव विहवेजुषस्व। तवेमेलोकाꣳप्रदिशो दिशश्च ।।3।।

280104

परावतो निवत उद्वतश्च। प्रजापतेविश्वसृज्जीवधन्य इदन्नो देव।

प्रतिहर्यहव्यम्। प्रजापतिं प्रथमय्यँ ज्ञियानाम्। देवानामग्रे

यजतय्यँजध्वम्। सनोददातु द्रविणꣳसुवीर्यम्।

रायस्पोषँव्विष्यतुनाभिमस्मे। योरायईशे

शतदाय उक्थ्यः। यꣳपशूनाꣳ रख्षिता विष्ठितानाम्। प्रजापतिꣳ प्रथमजा ऋतस्य।।4।।

280105

सहस्रधामाजुषताꣳ हविर्नः। सोमापूषणेमौ देवौ। सोमापूषणा रजसो विमानम्। सप्तचक्रꣳ

रथमविश्वमिन्वम्। विषूवृतं मनसा युज्यमानम्। तञ्जिन्वथो वृषणा पञ्चरश्मिम्।

दिव्यन्यस्सदनञ्चक्रउच्चा। पृथिव्यामन्यो अध्यन्तरिख्षे। तावस्मभ्यं पुरुवारं

पुरुख्षम्। रायस्पोषँव्विष्यतान्नाभिमस्मे।।5।।
280106
धियं पूषाजिन्वतु विश्वमिन्वः। रयिꣳ सोमोरयिपतिर्दधातु। अवतुदेव्यदितिरनर्वा।
बृहद्वदेम विदथेसुवीराः। विश्वान्यन्यो भुवनाजजान। विश्वमन्यो
अभिचख्षाण एति। सोमापूषणाववतन्धियं मे। युवभ्याँव्विश्वाः
पृतनाजयेम। उदुत्तमव्वँरुणा स्तभ्नाद्याम्। यत्किञ्चेदङ्किं तवासः।
अवतेहेडुस्तत्त्वायामि। आदित्यानामवसान दख्षिणा। धारयन्त आदित्यास
स्तिस्रोभूमिं र्धारयन्। यज्ञो देवानाꣳ शुचिरपः।।6।।
280100
मनीषाऽस्तुचर्तस्या स्मेकितवासश्च त्वारिंच ।।1।।
280201
तेशुक्रासश्शुचयोरश्मिवन्तः। सीदन्नादित्या अधिबर् हिषिप्रिये। कामेन
देवास्सर थन्दिवोनः। आयान्तु यज्ञमुपनोजुषाणाः। तेसूनवो अदितेः
पीवसामिषम्। घृतं पिव्वत्प्रतिहर्यन्नृ तेजाः। प्रयज्ञिया
यजमानाययेमुरे। आदित्याःकामंपितु मन्तमस्मे। आनःपुत्रा
आदितेर्यान्तु यज्ञम्। आदित्यासःपथिभिर्दे वयानैः ।।7।।
280202
अस्मेकामन्दाशुषे सन्नमन्तः। पुरोडाशङ्घृतवन्तञ्जुषन्ताम्। स्कभायत
निर् ऋतिꣳ सेधतामतिम्। प्ररश्मिभिर्यतमाना अमृध्राः। आदित्याःकाम
प्रयताव्वँषट्कृतिम्। जुषध्वन्नोहव्यदातिय्यँजत्राः। आदित्यान्काममवसे
हुवेम। येभूतानि जनयन्तो विचिख्युः। सीदन्तु पुत्रा अदितेरुपस्थम्।
स्तीर्णं बर् हिर् हविरद्याय देवाः ।।8।।
280203
स्तीर्णँबर् हिस्सीदतायज्ञे अस्मिन्। ध्राजास्सेधन्तो अमतिन्दुरेवाम्।
अस्मभ्यं पुत्रा अदितेःप्रयꣳसत। आदित्याः कामहविषो जुषाणाः।
अग्नेनयसुपथाराये अस्मान्। विश्वानिदेव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनः। भूयिष्ठान्ते नम उक्तिव्विधेम। प्रवश्शुक्राय
भानवेभरध्वम्। हव्यंमतिञ्चाग्नये सुपूतम् ।।9।।
280204
योदैव्यानि मानुषा जनूꣳषि। अन्तर्विश्वानि विद्मनाजिगाति।
अच्छागिरेमतयोदेवयन्तीः। अग्निर्य्यन्ति

द्रविणं भिक्षमाणाः। सुसन्दृशं सुप्रतीकं

स्वञ्चम्। हव्यवाहमरतिंमानुषाणाम्। अग्नेत्वमस्म

द्युयोध्यमीवाः। अनग्निंत्रा अभ्यमन्तकृष्टीः। पुनरस्मभ्यं

सुवितायदेव। ख्वाँविश्वेभिरजरेभिर्यजत्र ।।10।।

280205

अग्नेत्वंपारया नव्यो अस्मान्। स्वस्तिभिरतिदुर्गाणिविश्वाँ। पूश्चपृथ्वी

बहुलान उर्वी। भवातोकाय तनयायशँय्योः। प्रकारवो मननावच्यमानाः। देव

द्रीचींन्नयथ देवयन्तः। दक्षिणावाड्वाजिनीप्राच्येति। हविर्भरन्त्यग्नयेघृताचिं।

इन्द्रन्नरो युजेरथम्। जगृभ्णातेदक्षिणमिन्द्रहस्तम् ।।11।।

280206

वसूयवो वसुपते वसूनाम्। विद्माहित्वागोपतिंशूरगोनाम्।

अस्मभ्यञ्चित्रव्वृँषणं रयन्दाः। तवेदँव्विश्वमभितं पशव्यम्।

यत्पश्यसि चक्षसा सूर्यस्य। गवामसि गोपतिरेक इन्द्र। भक्षीमहिते

प्रयतस्यवस्वः। समिन्द्रणो मनसा नेषिगोभिः। सं सूरिभिर्मघवन् थ्संस्वस्त्या।

संब्रह्मणा देवकृतय्यँदस्ति।।12।।

280207

सन्देवानां सुमत्या यज्ञियानाम्। आराच्छत्रु मपबाधस्व दूरम्।

उग्रोयश्शम्बं पुरुहूत तेन। अस्मे धेहि यवमद्गोमदिन्द्र।

कृधीधियञ्जारित्रेवाजरत्नाम्। आवेधसं सहिशुचिः। बृहस्पतिं प्रथमञ्जायमानः।

महोज्योतिषंपरमे व्योमन्। सप्तास्यस्तुविजातो रवेण। विसप्तरश्मिरधमत्तमांसि ।।13।।

280208

बृहस्पतिस्समजयद्वसूनि। महोप्रजान्गोमतो देवएषः। अपस्सिषा सन्

थ्सुवरप्रतीत्तः। बृहस्पतिर् हन्त्यमित्रमर्कैः। बृहस्पते पर्येवापित्रे।

आनोदिवं पावीरवी। इमाजुह्वाना यस्तेस्तनः। सरस्वत्यभिनो नेषि।

इयं शुष्मेभिर्बिसखा ईवारुजत्। सानुगिरीणान्तविषेभिरूर्मिभिः।

पारावदघ्नीमवसे सुवृक्तिभिः। सरस्वतीमाविवासेम धीतिभिः ।।14।।

280200

देवयानैर्देवास्सुपूतय्यँजत्रहस्तमस्ति तमां स्यूर्मिभिर्द्वे च ।।2।।

280301

सोमोधेनुं सोमो अर्वन्तमाशुम्। सोमोवीरङ्कर्मण्यन्ददातु।

सादन्यँव्विदथ्यं सभेयम्। पितुश्श्रवणँय्योददाशदस्मै। अषाढय्युँथ्सुत्वं

सोम॒क्रतु॑भिः। याते॒धामा॑नि ह॒विषा॒यज॑न्ति। त्वमि॒मा ओष॑धीस्सोम॒विश्वाः॑।
त्वम॒पो अ॑जनय॒स्त्वङ्गाः। त्वमात॑तन्थ॒ोर्व॑न्तरि॑ख्षम्। त्वञ्ज्योति॑षा॒वितमो॑ववर्थ।।15।।
280302
याते॒धामा॑नि दि॒वियापृ॑थि॒व्याम्। यापर्व॑ते॒ष्वोष॑धीष्व॒प्सु। तेभि॑र्नो॒
विश्वैः॑स्सु॒मना॒ अहे॑डन्। राजः॑न् थ्सोम॒प्रति॑ह॒व्या गृ॑भाय।
विष्णो॒र्नुक॒न्तद॑स्य प्रि॒यम्। प्रतद्विष्णुः॑। प॒रोमात्र॑याता॒नुवा॑वृधान। न
ते॑ महि॒त्वमन्व॑श्ञुवन्ति। उ॒भेते॑विद्म॒ रज॑सीपृ
थि॒व्या विष्णो॑ देव॒त्वम्। प॒र॒मस्य॑विथ्से ।।16।।
280303
विच॑क्रमे॒त्रिर्दे॒वः। आ ते॑म॒हो योजा॒त ए॒व। अ॒भिगो॒त्राणि॑। आभि॒स्स्पृधो॑मिथ॒तीरर॑िषण्यन्।
अ॒मित्र॑स्य व्यथया॒मन्यु॒मिन्द्र। आभि॒र्विश्वा॑ अभि॒युजो॒ विषू॑चीः। आर्या॑य॒
विशोव॑तारी॒र्दा॑सीः॑। अ॒यꣳ शृ॒ण्वे॒ अध॒ जय॑न्नु॒तघ्नन्। अ॒यमु॒तप्रकृ॑णुते यु॒धागाः। य॒दा
स॒त्यङ्कृ॑णु॒ते म॒न्युमिन्द्रः॑ ।।17।।
280304
विश्व॑न्द्रृ॒ढं भ॑यत॒एज॑दस्मात्। अनु॒स्व॒धाम॑ख्षर॒न्नापो॑ अस्य। अव॑र्धत॒ मध्य॒
आना॒व्या॑नाम्। स॒ध्रीचीने॑न॒ मन॑सा॒तमि॑न्द्र ओजि॑ष्ठेन। हन्म॑नाहन्न॒भिद्यून्।
म॒रुत्व॑न्तव्वृँ॒ष॒भव्वाँ॑वृध॒ानम्। अर्क॑वारिन्दि॒व्यꣳ शा॒समिन्द्रँ॑म्।
वि॒श्वासाह॒मव॑से॒ नूत॑नाय। उ॒गग्रꣳ स॑ह॒ोदामि॒हतꣳ हु॑वेम। जनि॑ष्ठा उ॒ग्रस्सह॑सेतु॒राय॑ ।।18।।
280305
म॒न्द्र ओजि॑ष्ठो बहु॒लाभि॑मानः। अव॑र्ध॒न्निन्द्रँ॑
म॒रुत॑श्चि॒दत्र॑। मा॒ता यद्वीरन्दु॒धन॒द्धनि॑ष्ठा।
क्कस्यावो॑मरुतस्स्व॒धाऽऽसित्॑। यन्मामेकꣳ॑ स॒मध॑त्ताहि॒हत्ये॑।
अ॒हह्यु॑ग्रस्त॑वि॒षस्तुवि॑ष्मान्। विश्व॑स्य॒
शत्रो॒रन॑मव्वँ॑धस्नैः। वृत्रस्य॑त्वा श्व॒सथा॒दीष॑माणाः।
विश्वे॑दे॒वा अ॑जहु॒र्ये सखा॑यः। म॒रुद्भि॑रिन्द्र स॒ख्यन्ते॑ अस्तु।।19।।
280306
अथे॒माविश्वा॒ꣳ पृत॑नाजयासि। वधीः॑व्वृँ॒त्रं म॑रुत इन्द्रि॒येण॑। स्वेन॒भामे॑न तवि॒षो
ब॑भूवान्। अ॒हमे॒तामन॑वे वि॒श्वश्च॑न्द्राः। सु॒गा
अ॒पश्च॑कर॒वज्र॑बाहुः। सयोवृषा॒वृष्णि॑येभि॒स्समो॑काः। म॒होदि॒वꣳ
पृ॑थि॒व्याश्च॑ स॒म्राट्। स॒ती॒नस॑त्वा॒हव्यो॒ भरे॑षु। म॒रुत्वा॑न्नो भव॒त्विन्द्र॑ऊ॒ती।
इन्द्रो॑वृ॒त्रम॑तरद्वृ॒त्र॒तूर्ये॑।।20।।

280307
अना धृष्योमघवा शूर इन्द्रः। अन्वेनँविशो अमदन्तपूर्वीः। अयंराजा जगतश्चर्
षणीनाम्। स एववीरस्स उवीर्यावान्। स एकराजो जगतःपरस्याः। यदावृत्रमतरच्छूर
इन्द्रः। अथाभवद्दमिताभिक्रतूनाम्। इन्द्रोयज्ञव्वँर्धयन्विश्ववेदाः।
पुरोडाशस्य जुषताः हविर्नः। वृत्रन्तीर्त्वादानवव्वँज्रबाहुः ।।21।।
280308
दिशोऽदृःहद्दृःहिताद्दःहणेन। इमय्यँज्ञव्वँर्धयन्विश्ववेदाः। पुरोडाशं
प्रतिगृभ्णात्विन्द्रः। यदावृत्रमतरच्छूर इन्द्रः। अथैकराजोअभ
वज्ञनानाम्। इन्द्रो देवाञ्छम्बर हत्य आवत्। इन्द्रो देवानामभवत्पुरोगाः।
इन्द्रोयज्ञेहविषावावृधानः। वृत्रतूर्नो अभयः शर्मयंसत्।
यस्सप्तसिन्धूः रदधात्पृथिव्याम्। यस्सप्तलोकानकृणोद्दिशश्च।
इन्द्रोहविष्मान्थ्सगणोमरुद्भिः। वृत्रतूर्नोयज्ञमिहोपयासत्।।22।।
280300
ववर्थविथ्स इन्द्रस्तुरायास्तुवृत्रतूर्येवज्रबाहुः पृथिव्यान्त्रीणिच ।।3।।
280401
इन्द्रस्तरस्वानभिमाति होग्रः। हिरण्यवाशीरिषिरस्सुवर् षाः। तस्यवयः
सुमतौ यज्ञियस्य। अपिभद्रेसौमनसेस्याम। हिरण्यवर्णो
अभयङ्कृणोतु। अभिमातिहेन्द्रःपृतनासुजिष्णुः।
सनश्शर्मत्रिवरूथँव्वियः सत्। यूयंपातस्वस्तिभिस्सदानः। इन्द्र स्तुहि
वज्रिण स्तोमपृष्ठम्। पुरोडाशस्यजुषताःहविर्नः ।।23।।
280402
हत्वाभिमातीः पृतनास्सहस्वान्। अथाभयङ्कृणुहि विश्वतोनः। स्तुहिशूरव्वँज्रिणमप्रतीत्तम्।
अभिमातिहनं पुरुहूतमिन्द्रम्। यएक इच्छतपतिर्ज नेषु। तस्मा
इन्द्राय हविराजुहोत। इन्द्रो देवानामधिपाः पुरोहितः। दिशांपतिरभवद्वाजिनीवान्।
अभिमातिहातविषस्तुविष्मान्। अस्मभ्यञ्चित्रवृषणः रयिन्दात् ।।24।।
280403
यइमे द्यावापृथिवीमहित्वा। बलेनादृःहदभिमातिहेन्द्रः। सनोहविः प्रतिगृभ्णातुरातये।
देवानान्देवो निधिपानो अव्यात्। अनवस्तेरथव्वँष्णेयत्ते। इन्द्रस्यनुवीर्याण्यहन्नहिम्।
इन्द्रोयातोऽवसितस्यराजा। शमस्यचशृङ्गिणो वज्रबाहुः। सेदुराजाक्षेतिचर् षणीनाम्। अरान्न
नेमिःपरिताबभूव ।।25।।
280404
अभिसिध्मो अजिगादस्यशत्रून्। वितिग्मेन वृषभेणा पुरोभेत्। सव्वँज्रेणासृजद्वृत्रमिन्द्रः।

प्रस्वां॑म॒तिर्म॑तिर॒च्छाश॑दानः। विष्णु॑न्दे॒वव्वँ॑रु॑णमू॒तये॒भग॑म्। मेद॑सादे॒वाव॒पया॑

यजध्वम्। तानो॑य॒ज्ञमाग॑तँ॑व्वि॒श्वधे॑ना। प्र॒जाव॑द॒स्मेद्रवि॑णे॒हध॑त्तम्।

मेद॑सादे॒वाव॒पया॑यजध्वम्। विष्णु॑ञ्चदे॒वव्वँ॑रु॑णञ्च॒रा॒तिम् ।।26।।
280405
ताने॒ो अमी॑वा अप॒बाध॑मानौ। इ॒मय्यँ॒ज्ञञ्जु॒षमा॑णा॒वुपे॑त॑म्। विष्णू॑वरुणायु॒वम॑ध्व॒राय॑नः।

वि॒शेजना॑य॒महि॒शर्म॑यच्छतम्। दी॒र्घप्र॑यज्यू ह॒विषा॑वृध॒ाना। ज्योति॒षाऽरा॑तीर्द॑हत॒न्तमाँ॑सि।

यय॒ोरोज॑सास्कभि॒तारजाँ॑सि। वी॒र्ये॑भिर्वी॒रत॑म॒ाशवि॑ष्ठा। य ाऽपत्ये॑ते॒

अप्र॑तीत्ता॒सहो॑भिः। विष्णू॑ अग॒न्वरु॑णा पू॒र्वहू॑तौ।।27।।
280406
विष्णु॑वरुणावभिशस्ति॒पावा॑म्। दे॒वाय॑जन्तह॒विषा॑ घृ॒तेन॑। अपामी॑वाँ॑

सेधतँ॑ र॒ख्स॑सञ्च। अथा॑धत्त॒य्यँ॑ज॑माना॒यशँ॑य्योः। अ॒ँ॒हो॒मचा॑वृष॒भा

सु॒प्रतू॑र्ती। दे॒वाना॑न्दे॒वत॑म॒ाशचि॑ष्ठा। विष्णू॑वरुणा॒ प्रति॑हर्यतन्नः।

इ॒दन्नरा॒ प्रय॑तमू॒तये॑ह॒विः। म॒हीनु॒द्यावा॑पृथि॒वी इ॒हज्ये॒ष्ठे॑।

रु॒चाभ॑वताँ॑ शु॒चय॑द्भि॒र॒र्कैः ।।28।।
280407
यथ्सी॒व्वँरि॑ष्ठेबृह॒ती वि॑मि॒न्वन्। नृ॒वद्ध्योख्षाप॑प्रथा॒नेभि॒रेवैः॑।

प्रपू॑र्वि॒जेपि॒तरा॒नव्य॑सीभिः। गी॒र्भिः॑ कृणु॒ध्व॒ँ॒

सद॑नेऋ॒तस्य॑। आनो॑द्यावापृथि॒वीदैव्ये॑न। जने॑नयात॒ं

महि॑वा॒व्वँरू॑थम्। स इथ्स्वप॒ाभुव॑नेष्वास। य इ॒मेद्यावा॑पृथि॒वीज॒जान॑।

उ॒र्वीग॑भी॒रे रज॑सीसु॒मेके॑। अ॒व॒ँ॒ शे धीर॒श्शच्या॒ समै॑रत् ।।29।।
280408
भूरि॒न्द्वे अच॑रन्ती॒चर॑न्तम्। प॒द्वन्त॒ङ्गर्भ॑म॒पदी॑दधाते। नित्य॒न्नसू॒नुं

पि॒त्रोरु॒पस्थे॑। तंपि॑पृतँ॑ रोदसी सत्य॒वाच॑म्। इ॒दन्द्या॑वापृथिवी स॒त्यम॑स्तु।

पित॒र्मात॒र्यदि॒होप॑ब्रु॒वेवा॑म्। भू॒तन्दे॒वाना॑मव॒मे अवो॑भिः।

विद्याम॒ेषव्वृँजन॑ञ्जी॒रदा॑नुम्। उ॒र्वीपृथ्वी ब॑हु॒ले दू॒रे अ॑न्ते।

उप॑ब्रुवे॒नम॑सा य॒ज्ञे अ॒स्मिन्। दधा॑ते॒ येसु॒भगे॑ सु॒प्रतू॑र्ती। द्यावा॒

रख्ष॑तंपृथि॒वीन॒ो अभ्वा॑त्। याज॒ाता ओष॑धयोऽति॒विश्वाः॑ परि॒ष्ठाः। या

ओष॑धय॒स्सोम॑राज्ञीरश्वाव॒तीँ॑ सोम॑व॒तीम्। ओष॑धी॒रिति॑ मातर॒ोऽन्यावो॑ अ॒न्याम॑वतु ।।30।।
280400
ह॒विर्नो॑ दाद्धभूव॒रा॒तिं पू॒र्वहू॑ताव॒र्कैरै॑रद॒स्मिन्पञ्च॑च ।।4।।
280501

शुचिन्नु स्तोम श्ञ्नर्थद्वृत्रम्। उभावा मिन्द्राग्नी प्रचर् षणिभ्यः।
आवृत्रहणा गीर्भिर्विप्रः। ब्रह्मणस्पते त्वमस्य यन्ता। सूक्तस्य बोधि
तनयञ्च जिन्व। विश्वन्तद्भद्रय्यँदवन्तिदेवाः। बृहद्वदेम विदथे सुवीराः।
स ईं सत्येभिस्सखिभिश्शुचद्भिः। गोधायसँव्विधनसै रतर्दत्।
ब्रह्मणस्पतिर्वृषभि र्वराहैः ।।31।।
280502
घर्मस्वे देभिर्द्रविणव्व्याँनट्। ब्रह्मणस्पतेरभवद्यथावशम्। सत्योमन्युर्महिकर्मा
करिष्यतः। योगा उदाजथ्सदिवे विचाभजत्। महीवरीतिश्शवसा सरत्पृथक्। इन्धानो अग्निं
व्वनवद्वनुष्यतः। कृतब्रह्मा शूशुवद्रातहव्यइत्। जातेन
जातमतिसृत्प्रसृंसते। यय्यँय्युंजङ्कृणुते ब्रह्मणस्पतिः।
ब्रह्मणस्पते सुयमस्य विश्वहा ।।32।।
280503
रायस्स्याम रथ्यो विवस्वतः। वीरेषुवीराः उपपृङ्ग्धिनस्त्वम्। यदीशानो
ब्रह्मणावेषि मेहवम्। स इज्जनेन सविशासजन्मना। सपुत्रैर्वाजंभरतेधनानृभिः। देवानाय्यँः
पितरमाविवासति। श्रद्धामना हविषा ब्रह्मणस्पतिम्। यास्तेपूषन्नावो
अन्तः। शुक्रन्ते अन्यत्पूषेमा आशाः। प्रपथेपथामजनिष्ट पूषा ।।33।।
280504
प्रपथे दिवः प्रपथेपृथिव्याः। उभे अभिप्रियतमे सधस्थे। आच पराच
चरति प्रजानन्। पूषासुबन्धुर्दिव आपृथिव्याः। इडस्पतिर्मघावा
दस्मवर्चाः। तन्देवासो अददुस्सूर्यायै। कामेनकृतन्तवस स्वञ्चम्।
अजाऽश्वःपशुपावाजबस्त्यः। धियञ्जिन्वो विश्वे भुवने अर्पितः।
अष्ट्रांपूषाशिथिरामुद्वरीवृजत् ।।34।।
280505
सञ्चख्शाणो भुवनादेव ईयते। शुचीवोहव्यामरुतश्शुचीनाम् शुचिंहिनोम्यध्वरः
शुचिभ्यः। ऋतेनसत्यमृतसाप आयन्। शुचिजन्मानश्शुचयःपावकाः।
प्रचित्रमर्कङ्गृणतेतुराय। मारुताय स्वतवसेभरध्वम्। येसहांसि
सहसासहन्ते। रेजते अग्ने पृथिवी मखेभ्यः। अंसेष्वामरुतः खादयोवः ।।35।।
280506
वख्शस्सुरुक्मा उपशिश्रियाणाः। विविद्युतोन वृष्टिभीरुचानाः। अनुस्वधामायुधैर्यच्छमानाः।
यावश्शर्म शशमानायसन्ति। त्रिधातूनिदाशुषेयच्छताधि। अस्मभ्यन्तानिमरुतो
वियन्त। रयिन्नोधत्तवृषणस्सुवीरम्। इमेतुरंमरुतोरामयन्ति।

इमेसहस्सहस आनमन्ति। इमेशं सव्वँनुष्यतेनिपान्ति ।।36।।
280507
गुरुद्वेषो अररुषेदधन्ति। अराइवेदचरमा अहेव। प्रप्रजायन्ते
अकवामहोभिः। पृश्ञेः प्रुत्रा उपमासोरभिष्ठाः। स्वया मत्यामरुतस्सं मिमिख्युः।
अनुतेदायिमह इन्द्रि यार्य। सत्रा तेविश्वमनुवृत्रहत्ये।
अनुख्षत्रमनुसहोयजत्र। इन्द्रदेवेभिरनु तेनृषह्ये। य इन्द्रशुष्मोमघवन्ते अस्ति ।।37।।
280508
शिख्षासखिभ्यः पुरुहूतनृभ्यः। त्वं हिदृढामघवन्विचेताः।
अपावृधिपरिवृतिन्नराधः। इन्द्रोराजाजगतश्चर्
षणीनाम्। अधिख्षमि विषुरूपय्यँदस्ति। ततोददातु
दाशुषेवसूनि। चोदद्राधउपस्तुतश्चिदर्वाक्। तमुष्टुहियोअभि
भूँत्योजाः। वन्वन्नवातःपुरुहूत इन्द्रः। अषाढमुग्रं सहमानमाभिः ।।38।।
280509
गीर्भिवर्धं वृषभञ्चर् षणीनाम्। स्थूरस्य रायोबृहतोयईशे।
तमुष्टवामविदथेष्विन्द्रम्। योवा युनाजयति गोमतीषु। प्रधृष्णु
यानयति वस्यो अच्छ । अतेशुष्मो वृपभ एतुपश्चात्। ओत्तराद धरागापुरस्तात्।
आविश्वतो अभिसमेत्वर्वाङ्। इन्द्रद्युम्नं सुवर्वद्धेह्यस्मे ।।39।।
280500
वराहैर्विश्वहाऽजनिष्टपूषोद्वरीवृजत्खादयोवः पान्त्यस्त्याभिर्नवच।।5।।
280601
अदेवोयातु सवितासुरन्तः। अन्तरिख्षप्रावहमानो अश्वैः। हस्तेदधानोनर्यापुरूणि। विवेशयञ्च
प्रसुवञ्चभूम। अभीवृतङ्कृशनैर्विश्विरूपम्। हिरण्यशम्यय्यँजतो बृहन्तम्। आस्थाद्रथं
सविताचित्रभानुः। कृष्णारजां सितविषीन्दधानः। सघानोदेवस्सविता
सवार्य। आसाविषद्वसुपतिर्वसूनि ।।40।।
280602
विश्रयमाणौ अमतिमुरूचीम्। मर्तभोजनमधरासतेन। विजनाञ्छ्यावाश्शितिपादोअख्यन्।
रथंहिरण्यप्रउगव्वँहन्तः। शश्वद्विशस्सवितुर्दैव्यस्य। उपस्थे
विश्वाभुवनानितस्थुः। विसुपर्णे अन्तरिख्षाण्यख्यत्। गभीर वेपा
असुरस्सुनीथः। क्वेदानीं सूर्यःकश्चि केत। कुतमान्द्याः रश्मिरस्याततान।।41।।
280603
भगन्धियव्वँजयन्तः पुरन्धिम्। नराशं सोग्नास्पतिर्नो अव्यात्।
अयेवामस्य सङ्गथेरयाणाम्। प्रियादेवस्यसवितुस्स्याम। अनोविश्वे

अस्क्रागमन्तुदेवाः। मित्रो अर्यमावरुणस्सजोषाः। भुवन्
यथानोविश्वेवृधासः। करन् थ्सुषाहा विथुरन्नशवः।
शन्नोदेवाविश्वदेवाभवन्तु। शः सरस्वती सहधीभिरस्तु ।।42।।
280604
शर्मभिषाचश्शमुरातिषाचः। शन्नोदिव्याः पार्थिवाश्शन्नो अप्याः।
येसवितुस्सत्यसवस्यविश्वे। मित्रस्य व्रते वरुणस्य देवाः।
तेसौभगँव्वीरवद्गोमदप्नः। दधातनद्रविणञ्चि त्रमस्मे। अग्ने
याहिदूत्यव्वाँरिषेण्यः। देवाः अच्छाब्रह्मकृतागणेन। सरस्वतीं मरुतो
अश्विनापः। यक्षिदेवान्प्रत्न धेयाय विश्वान्।।43।।
280605
द्यौः पितःपृथिविमातरध्रुक्। अग्ने भ्रातर्वसवो मृडतानः। विश्व आदित्या
अदितेसजोषाः। अस्मभ्यः शर्मबहुलँव्वियन्त। विश्वेदेवाश्शृणु तेमः
हवमे। ये आन्तरिख्येय उपद्यविष्ठ। ये अग्निजिह्वा उतवायजत्राः।
आसद्यास्मिन्बर् हिषिमादयध्वम्। आवांमित्रावरुणाहव्यजुष्टिम्। नमसादेवाववसाववृत्याम् ।।44।।
280606
अस्माकं ब्रह्मपृतनासु सह्या अस्माकम्। वृष्टिर्दिव्यासुपारा। युवव्वँस्त्राणि
पीवसावसाथे। युवोरच्छिद्रामन्तवोहसर्गाः। अवातिरतमनृतानिविश्वा।
ऋतेनमित्रावरुणासचेथे। तथ्सुवांमित्रावरुणामहित्वम्। ईर्मातस्थुषीरहभिर्दुदुह्रे। विश्वाः
पिन्वथस्वसरस्यधेनाः। अनुवामेकः पविरावर्वर्ति ।।45।।
280607
यद्वःहिष्ठिन्नातिविदेसुदानू। अच्छिद्रः शर्मभुवनस्यगोपा। ततोनोमित्रावरुणाववीष्टम्। सिषा
सन्तोजीगिवाः सस्स्याम। आनोमित्रावरुणाहव्यदातिम्। घृतैर्गव्यूतिमुख्षतमिडाभिः।
प्रतिवामत्रवरमाजनाय। पृणीतमुद्नोदिव्यस्यचारोः।
प्रभाहवासिसृतञ्जीवसेनः। आनोगव्यूतिमुख्षतङ्घृ तेन।।46।।
280608
अनोजनेश्रवयतय्युँवाना। श्रुतं मेमित्रावरुणाहवेमा।
इमारुद्राय स्थिरधन्वनेगिरः। ख्षिप्रेषवेदे
वायस्वधाम्ने। अषाढायसहमानायमीढुषे। तिग्मायुधायभरताशृणोतन।
त्वादत्तेभीरुद्रशन्तमेभिः। शतः हिमा अशीयभेषु जेभिः।
व्यस्मद्द्वेषोवितरव्यँःहः। व्यमीवाःश्चातयस्वाविषूची ।।47।।
280609

अर् हंन्बिभर् षिमानस्तोके। आतेपितर्मरुताः सुम्नमेतु। मानस्सूर्यस्य
सन्दृशोयुयोथाः। अभिनोवीरो अर्वतिख्षमेत। प्रजायेमहि रुद्रप्रजाभिः। एवाबब्रो वृषभ चेकितान।
यथादेवनहंणीषे नहःसि। हावनश्रूनो रुद्रेहबोधि। बृहद्वदेम
विदथेसुवेराः। परिणोरुद्रस्य हेतिस्स्तुहिश्रुतम्। मीढुष्टमार् हंन्बिभर् षि।
त्वमग्नेरुद्र आवोराजानम्।।48।।
280600
वसूनिततानास्तु विश्वान् ववृत्याव्वँर्वति घृतेन विषूचीश्श्रुतन्द्वेच ।।6।।
280701
सूर्यो देवीमुषसः रोचमानामर्यः। नयोषामभ्येति पश्चात्।
यत्रानरोदेवयन्तो युगानि। वितन्वते प्रतिभद्राय भद्रम्। भद्रा
अश्वाहरितस्सूर्यस्य। चित्रा एदग्वा अनुमाद्यासः। नमस्यन्तो दिव
आपृष्ठमस्थुः । परिद्यावापृथिवीयन्तिसद्यः । तथ्सूर्यस्य
देवत्वन्तन्महित्वम्। मध्याकर्तोर्विततः सञ्जभा ।।49।।
280702
यदेदयुक्तहरितस्सधस्थात्। आद्रात्रीवासस्तनुते सिमस्मै।
तन्मित्रस्यवरुणस्याभिचख्षे। सूर्योरूपङ्कृणुतेद्योरुपस्थे।
अनन्तमन्यद्रुशदस्यपाजः। कृष्णमन्यद्धरितस्सं भरन्ति। अद्यादेवा
उदितासूर्यस्य। निरःहंसः पिपृतान्निरवद्यात्।
तन्नोमित्रोवरुणोमामहन्ताम्। अदितिस्सिन्धुः पृथिवी उतद्यौः ।।50।।
280703
दिवोरुक्म उरुचख्षा उदेति। दूरे अर्थस्तरणिर्भ्राजमानः। नूनञ्जनास्सूर्येणप्रसूताः।
अयन्नर्थानिकृणवन्नपाःसि। शन्नोभवचख्षसाशन्नो अह्ना। शंभानुनाशः
हिमाशंङ्घृणेन। यथाशमस्मैशमसद्दुरोणे। तथ्सूर्यद्रविणन्धेहिचित्रम्।
चित्रन्देवानामुदगादनिकम्। चख्षुर्मित्रस्य वरुणस्याग्नेः ।।51।।
280704
आप्राद्या वापृथिवी अन्तरिख्षम्। सूर्य अत्मा जगतस्तस्थुषश्च।
त्वष्टादधत्तन्नस्तुरीपम्। त्वष्टावीरं पिशङ्गरूपः। दशेमन्त्वष्टुर्जनयन्त
गर्भम्। अतन्द्रासो युवतयोबिभर्त्रम्। तिग्मानीक_ स्वयशसञ्जनेषु।
विरोचमानं परिषीन्नयन्ति। आविष्ट्योवर्धते चारुरासु।
जिह्मानामूर्ध्वस्वयशा उपस्थे ।।52।।
280705

उ॒भेत्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात्। प्र॒तीची॑सि॒ꣳहं प्रति॑योषयेते। मि॒त्रो
जना॒न्प्रसमि॑त्र । अयं॑मि॒त्रोन॑म॒स्य॑स्सु॒शेव॑ः । राजा॑सुक्ष॒त्रो अ॑जनिष्टवे॒धाः।
तस्य॑व॒यꣳ सु॑म॒तौ य॒ज्ञिय॑स्य। अपि॑भ॒द्रेसौ॑मन॒सेस्या॑म।
अ॒न॒मी॒वास॒ इड॑या॒ मद॑न्तः। मि॒तज्म॑वो॒ वरि॑म॒न्ना
पृ॑थि॒व्याः। आ॒दि॒ त्यस्य॑ व्र॒तमु॑प॒ ख्यन्त॑ः ।।53।।
280706
व॒यं मि॒त्रस्य॑ सुम॒तौ स्या॑म। मि॒त्रन्न ईꣳशिम्या॒ गोषु॑ ग॒व्यव॑त्। स्वा॒धियो॑ वि॒दथे॑ अ॒फ्स्वजी॑जनन्।
अरे॑जयता॒ꣳरोद॑सी॒ पाज॑सागि॒रा। प्रति॑ प्रि॒यय्यँ॑ज॒तञ्ज॒नु॒षा॒मव॑ः।
म॒हाꣳ आ॑दि॒त्यो नम॑सोप॒सद्य॑ः। या॒तय॒ज्ज॑नो गृण॒तेसु॒शेव॑ः। तस्मा॑
ए॒तत्पन्य॑तमाय॒जुष्टँ॑म्। अ॒ग्नौ मि॒त्राय॑ह॒विराजु॑होत। आवा॒ꣳ रथो॒ रोद॑सी बद्ब॒धानः।।54।।
280707
हि॒र॒ण्ययो॒वृष॑भिर्या॒त्वश्वैः॑। घृतव॑र्तनिꣳ प॒विभी॑रुचा॒नः।
इ॒षाँव्वो॒ढानृ॒पति॑र्वा॒जिनी॑वान्। सर्प॑प्रथा॒नो अ॒भिपञ्च॒भूम॑। त्रि॒व॒न्धु॒रो
मन॒सायातु॑ यु॒क्तः। विशो॒येन॒ गच्छ॑थो॒ देव॒यन्तीः॑। कुत्रा॑ चि॒द्यामम॑श्विना॒
दधा॑ना। स्वश्वा॑ य॒शसाऽऽया॑तम॒र्वाक्। दस्रा॑नि॒धिं मधु॑मन्तं पिबाथः।
विवा॒ꣳ रथो॑व॒ध्वा॑यादमानः ।।55।।
280708
अन्ता॒न्दि॒वोबा॑ध तेवर्त॒निभ्या॑म्। यु॒वोश्श्रि॒यं॒ परि॒योषा॑वृणीत। सूरो॑ दु॒हि॒ता
परि॑तक्मियायाम्। यद्दे॑व॒यन्त॒ मव॑थ॒श्शची॑भिः। परि॑घ्र॒ꣳ सवा॒मना॑वा॒व्वँयो॑गाम्।
यो॒ह॒स्यवा॑ꣳ रथि॒रा॒वस्त॑ उ॒स्राः। रथो॑यु॒जा॒नꣳ परि॒याति॑व॒र्तिः।
तेन॑न॒श्शँय्योरु॒षसो॒ व्यु॑ष्टौ। न्य॑श्विनावहतय्य॒ज्ञे अ॒स्मिन्। यु॒वं
भु॒ज्युमव॑विद्धꣳ समु॒द्रे ।।56।।
280709
उदू॑हथु॒रर्ण॑सो॒ अस्रि॑धानैः। प॒त॒त्रिभि॑रश्र॒मैर॑व्य॒थिभि॑ः। द॒ꣳसना॑भिरश्विना
पा॒रय॑न्ता। अग्नीषोमा॒ यो अ॒द्यवा॑म्। इ॒दव्वँच॑स्सप॒र्यति॑। तस्मै॑धत्तꣳ
सु॒वीर्यँ॑म्। गवां॑ पोष॒ꣳ स्वश्वि॑यम्। यो अ॒ग्नीषोमा॑ ह॒विषा॑सप॒र्यात्।
दे॒व॒द्रीचा॒ मन॑सा॒यो घृ॒तेन॑ तस्य॑ व्र॒तꣳ र॑ख्षतं पा॒तमꣳह॑सः ।।57।।
280710
वि॒शे जना॑य॒ महि॒ शर्म॑यच्छतम्। अग्नीषोमा॒ य आहु॑तिम्। योवा॒न्दाशा॑द्धविष्कृ॑तिम्।
सप्र॒जया॑ सु॒वीर्यँ॑म्। विश्व॒मायु॒र्व्य॑श्ञवत्। अग्नीषोमा॒ चेति॒ तद्वीर्य॑व्वाँम्।
यदमु॑ष्णीतमव॒सं प॒णिर्गोः। अवा॑तिरत॒ं प्रथ॑यस्य॒ शेष॑ः। अवि॑न्दत॒ज्ज्योति॒रेकं॑ ब॒हुभ्य॑ः। अग्नीषोमावि॒मꣳ

सुमेऽग्नीषोमाहविषः प्रस्थितस्य ।।58।।
280700
जभारद्यौरग्ने रुपस्थ उपख्श्यन्तोबद्वधानोयादमानस्समुद्रेऽꣳहंसः प्रस्थितस्य ।।7।।
280801
अहमस्मि प्रथमजाऋतस्य। पूर्वन्देवेभ्यो अमृतस्यनाभिः।
योमाददातिस इदेवमावाः। अहमन्नमन्ननदन्तमद्मि। पूर्वमग्नेरपि
दहत्यन्नम्। यत्तौ हासाते अहमुत्तरेषु। व्यात्तमस्य
पशवस्सुजम्भम्। पश्यन्तिधीराः प्रचरन्ति
पाकाः। जहाम्यन्यन्न जहाम्यन्यम्। अहमन्नव्वँशमिच्चरामि ।।59।।
280802
समानमर्थं पर्येमिभुञ्जत्। कोमामन्नं मनुष्योदयेत। पराके अन्न न्निहितँल्लोक
एतत्। विश्वैर्देवैः पितृभिर्गुप्तमन्नम्। यद्द्यतेलुप्यते
यत्परोप्यते। शततमीसा तनूर्मेबभूव। महान्तौचरूसकृदुग्धेनपप्रौ।
दिवञ्चपृश्निं पृथिवीञ्च साकम्। तथ्संपिबन्तोनमिनन्ति वेधसः।
नैतद्भूयोभवतिनोकनीयः ।।60।।
280803
अन्नं प्राणमन्नमपानमाहुः। अन्नं मृत्युन्तमुजी वातुमाहुः। अन्नंब्रह्मणो
जरसव्वँदन्ति। अन्नमाहुःप्रजननं प्रजानाम्। मोघमन्नँव्विन्दते अप्रचेताः।
सत्यंब्रवीमिवध इथ्सतस्य। नार्यमणं पुष्यतिनो सखायम्।
केवलाघोभवति केवलादी। अहंमेघस्तनयन्वर् षन्नस्मि। मामदन्त्यहमद्म्यन्यान्।।61।।
280804
अहꣳ सदमृतोभवामि। मदादित्या अधिसर्वे तपन्ति। देवीव्वाँचमजनयन्त यद्वाग्वदन्ती।
अनन्तामन्ता दधिनिर्मितां महीम्। यस्यान्देवा अदधुर्भोजनानि।
एकाख्षरान्द्विपदाꣳषट्पदाञ्च। वाचन्देवा उपजीवन्ति विश्वे। वाचन्देवा
उपजीवन्ति विश्वे। वाचङ्गन्धर्वाः पशवो मनुष्याः। वाचीमाविश्वाभुवनान्यर्पिता।।62।।
280805
सानो हवञ्जुषतामिन्द्रपत्नी। वागख्षरं प्रथमजा ऋतस्य। वेदानां माताऽमृतस्यनाभिः।
सानोजुषाणोपयज्ञमागात्। अवन्तीदेवीसुहवामे अस्तु।यामृषयोमन्त्रकृतो मनीषिणः।
अन्वैच्छन्देवास्तपसा श्रमेण। तान्देवीव्वाँचꣳ हविषायजामहे। सानोदधातु
सुकृतस्यलोके। चत्वारिवाक्परिमितापदानि।।63।।
280806
तानिविदुर्ब्राह्मणाये मनीषिणः। गुहात्रीणि निहिता नेङ्गयन्ति। तुरीयव्वाँचो

म॑नु॒ष्या॑वदन्ति। श्र॒द्धया॒ऽग्निस्समि॑ध्यते। । श्र॒द्धया॑विन्दतेह॒विः।
श्र॒द्धां॑भग॑स्य मूर्धनि॑। वच॒सा वे॑दयामसि। प्रि॒यश्र॑द्धे॒दद॑तः। प्रि॒य
श्र॑द्धे॒दिदा॑सतः। प्रि॒यं॑भ॒ोजेषु॒ यज्व॑सु।।64।।
280807
इ॒दं म॑ उदि॒तङ्कृ॑धि। यथा॑दे॒वा असु॑रेषु। श्र॒द्धामु॒ग्रेषु॑ चक्रि॒रे। ए॒वंभ॒ोजेषु॒ यज्व॑सु।
अ॒स्माक॑मुदि॒तङ्कृ॑धि। श्र॒द्धान्दे॑वा॒यज॑मानाः। वा॒युगो॑पा॒ उपा॑सते। श्र॒द्धाꣳ
ह॑दु॒य्य॑याऽऽकू᳚त्या। श्र॒द्धया॑हूयतेह॒विः। श्र॒द्धांप्रा॒तर् ह॑वामहे।।65।।
280808
श्र॒द्धां म॒ध्यन्दि॑न॒ंपरि॑। श्र॒द्धाꣳसूर्य॑स्य नि॒म्रुचि॑। श्रद्धे॒श्रद्धा॑पये॒हमा᳚। श्र॒द्धान्दे॒वानधि॑वस्ते।
श्र॒द्धाविश्व॑मि॒दञ्जग॑त्। श्र॒द्धाङ्काम॑स्य मा॒तर᳚म्। ह॒विषा॑वर्धयामसि। ब्रह्म॑जज्ञा॒नं
प्र॑थ॒मंपु॒रस्ता᳚त् । विसी॑म॒तस्सु॒रुचो॑ वे॒नआ॑वः। सबु॒ध्निया॑ उप॒मा आ॑स्य वि॒ष्ठाः।।66।।
280809
स॒तश्च॒योनि॒मिस॑तश्च॒ विवः॑। पि॒ताविराजा॑ मृष॒भोर॑यी॒णाम्। अ॒न्तरि॑ख्षँव्वि॒श्वरू॑प॒ आवि॑वेश।
तम॒कैर॒भ्य॑र्च॑न्तिव॒थ्सम्। ब्रह्म॒सन्तं॒ ब्रह्म॑णाव॒र्धय॑न्तः। ब्रह्म॑दे॒वान॑जनयत्।
ब्रह्म॒विश्व॑मि॒दञ्जग॑त्। ब्रह्म॑णः ख्ष॒त्रन्निर्मि॑तम्। ब्रह्म॑ब्राह्म॒ण आ॒त्मना᳚।
अ॒न्तर॑स्मिन्नि॒मे लो॒काः।।67।।
280810
अ॒न्तर्विश्व॑मि॒दञ्जग॑त्। ब्रह्मै॒वभू॒ताना॒ञ्ज्येष्ठ᳚म्। तेन॒को॑ऽर्
हति॒ स्पर्धि॑तुम्। ब्रह्म॑न्दे॒वास्त्रय॑स्त्रिꣳशत्।
ब्रह्म॑न्निन्द्रप्रजाप॒ती। ब्रह्म॑न् ह॒ विश्वा॑भू॒तानि॑। ना॒वीवा॒न्तस्स॒माहि॑ता।
चत॑स्र॒ अशाः॒ प्रच॑रन्त्व॒ग्नय॑ः। इ॒मन्नो॑ य॒ज्ञन्न॑यतु प्रजा॒नन्।
घृ॒तंपिन्व॑न्न॒जरꣳ॑ सु॒ वीर᳚म्।।68।।
280812
ब्रह्म॑ स॒मिद्ध॑व॒त्याहु॑तीनाम्। आगावो॑ अग्मन्नु॒त भ॒द्रम॑क्रन्। सीद॑न्तु गो॒ष्ठे र॒णय॑न्त्व॒स्मे।
प्र॒जाव॑तीः पुरु॒रूपा॑ इ॒हस्युः। इन्द्रा॑य पू॒र्वीरु॒षसो॒ दुहा॑नाः। इन्द्रो॒यज्व॑ने
पृण॒तेच॑ शिख्षति उपेद्द॑दाति॒ नस्वं॑मुषायति। भूयो॑भूयो र॒यमिद॑स्य
व॒र्धयन्॑। अभि॑न्नेखि॒ल्ले निद॑धाति देव॒युम्। नतान॑शन्ति॒ नताअर्व᳚।।69।।
280813
गाव॒ो भग॒ो गाव॒ इन्द्रो॑मे अच्छात्। गाव॒स्सोम॑स्य प्रथ॒मस्य॑ भ॒ख्षः।
इ॒मायागाव॒स्सज॑नास॒ इन्द्र॑ः। इ॒च्छामीद्धृ॒दा मन॑साचि॒दिन्द्र᳚म्।
यू॒यङ्गा॑वो मेदयथाकृ॒शञ्चि॑त्। अ॒श्ली॒लञ्चि॑त्कृणुथा सु॒प्रती॑कम्।

भ॒द्रङ्गृ॒हङ्कृ॑णुथ भद्रवाचः। बृ॒हद्वो॒ वय॑ उच्यते स॒भासु॑। प्र॒जाप॑ती

स्सू॒यव॑सꣳ रि॒शिन्ती᳚ः। शु॒द्धा अ॒पस्सु॑प्रप॒ाणेपिब॑न्तीः। माव॑स्स्ते॒न

ई॑शत॒माऽघशꣳ॑सः। परि॑वोहे॒तीरु॒द्रस्य॑ वृञ्ज्यात्। उप॒ेदमु॑प॒वर्च॑सम्।

आ॒सुगोषूप॑पृच्यताम्। उप॑र् ष॒भस्य॒ रेत॑सि। उपे᳚न्द्र॒ तव॑ वी॒र्ये᳚।।70।।

280800

च॒रा॒मि॒कनी॑यो॒ऽन्यानर्पि॑ता प॒दानि॒ यज्व॑सुहवामहे वि॒ष्ठाल॒ोकास्सु॒वीर॒

मर्व॒ापिब॑न्ती॒ष्षट्च॑।।8।।

280901

तासू᳚र्या चन्द्र॒मसा॑ विश्व॒भृत्त॑मामहत्। तेज॒ोवसु॑मद्राजतो दि॒वि।

सामा᳚त्माना चरतस्सामच॒ारिणा᳚। ययो᳚र्व्रि॒तन्नम॒मे जातु॑दे॒वयो᳚ः।

उ॒भावन्त॒ौपरि॑यात॒ अर्म्या᳚। दि॒वोनर॒श्मीꣳ स्त॑नु॒तोर्व्य॑र्ण॒वे। उ॒भाभु॑व॒न्ती

भुव॑नाक॒विक्र॑तू। सूर्य॒ानच॒न्द्रा च॑रतो ह॒ताम॑ती। पति᳚द्यु॒मद्वि॑श्व॒विदा॑

उ॒भादि॒वः। सूर्या॑ उ॒भा च॒न्द्रम॑सा विचख्ष॒णा।।71।।

280902

वि॒श्ववा॑रावरिव॒ोभावरे᳚ण्या। तानो॑ऽवतं मति॒मन्त॒ा महि॑व्रता। वि॒श्व॒वप॑री

प्र॒तर॑णातर॒न्ता। सु॒व॒र्विदा॑ दृ॒शय॒ भूरि॑र॒श्मी। सूर्य॒ाहि च॒न्द्रा वसु॑त्वे॒षद॑र्

शता। म॒न॒स्विन॒ो भानु॑चर॒तोनु॒सन्दिवा᳚म्। अ॒स्यश्रवो॑ न॒द्य॑स्स॒प्तबि॑भ्रति।

द्याव॒ा ख्षामा॑ पृथि॒वीद॑र् श॒तव्वा᳚पुः। अ॒स्मे सू᳚र्याचन्द्र॒मसा॑ऽभि॒चख्षे᳚।

श्र॒द्धेकमि॑न्द्र चरतो विचर्तु॒रम्।।72।।

280903

पू॒र्व॒ाप॒रञ्च॑रतो म॒ायये॒तौ। शिशू॒क्रीड॑न्त॒ौ परि॑यातो अध्व॒रम्। विश्वा᳚न्य॒न्यो

भुव॑नाऽभि॒ चष्टे᳚। ऋ॒तून॒न्यो वि॒दध॑ज्जायते॒पुन॑ः। हिर॑ण्यवर्ण॒ाश्शुच॑यꣲ पाव॒का

यास॒ाꣳ॒ राजा᳚। यासा᳚न्दे॒वाश्शि॒वेन॑म॒ा चख्षु॑षापश्यत। आपो॑भ॒द्रा

आदित्प॑श्यामि। नास॑दासी॒न्नोसदा॑सीत्त॒दानी᳚म्। नासी॒द्रज॒ो

नोव्यो॑मापु॒रोयत्। किमाव॑रीव॒ः। कुह॒कस्य॒ शर्म॑न्।।73।।

280904

अम्भ॒ꣲ किमा॑सी॒द्गह॑नङ्ग॒भीरम्। नमृ॒त्युर॒मृत॒न्तर्

हि॒न। रात्रि॑या॒ अह्न॑ आसीत्प्रके॒तः। आनी॑दव॒ातꣳ

स्व॒धय॒ा तदेका᳚म्। तस्मा᳚द्धा॒न्यन्नप॒रꣲ किञ्च॒नास॑। तम॑सी॒त्तम॑सा

गू॒ढमग्रे᳚ प्रके॒तम्। स॒लि॒लꣳ सर्व॑माइ॒दम्। तु॒च्छेन॒ाभ्वपि॑हित॒य्यँदासी᳚त्।

तम॑स॒स्तन्म॑हि॒ना जा॑य॒तैका᳚म्। काम॒स्तदग्रे॒सम॑वर्त॒ताधि॑।।74।।

280905
मनसो रेतᳲ प्रथमय्यँदासीत्। सतोबन्धुमसतिनिरविन्दन्। हृदिप्रतीष्या
कवयोमनीषा। तिरश्चीनो विततो
रश्मिरेषाम्। अधस्स्विदासी 3 दुपरिस्विदासी 3 त्। रेतोधा आसन्महिमान
आसन्। स्वधा अवस्तात्प्रयतिᳲपरस्तात्। कोअद्धावेद कइहप्रवोचत्।
कुत आजाता कुतइयँव्विसृष्टिः। अर्वाग्देवा अस्य विसर्जनाय।।75।।
280906
अथाकोवेदयत आबभूव। इयँव्विसृष्टि र्यतआबभूव। यदिवा दधे
यदिवान । यो अस्याध्यक्षᳲ परमेव्योमन्। सोअङ्गवेद यदिवानवेद।
किस्विद्वनङ्क उसवृख्षआसीत्। यतोद्यावापृथिवी निष्टतख्षुः। मनीषिणो
मनसा पृच्छतेदुतत्। यदध्यतिष्ठद्भुवनानिधारयन्। ब्रह्मवनं ब्रह्म
सवृख्ष आसीत्।।76।।
280907
यतोद्यावापृथिवीनिष्टतख्षुः। मनीषिणो मनसा विब्रवीमिवः। ब्रह्माध्यतिष्ठध्भुवनानि धारयन्।
प्रात रग्निं प्रात रिन्द्रꣳ हवामहे। प्रातर्मित्रा वरुणा प्रातरश्विना।
प्रातर्भगं पूषणं ब्रह्मण स्पतिम्। प्रातस्सोममु तरुद्रꣳ हुवेम।
प्रातर्जितं भगमुग्रꣳ हुवेम। वयं पुत्रमदितेर्यो विधार्ता।
आध्रश्चिद्यं मन्यमानस्तुरश्चित्।।77।।
280908
राजा चिद्यं भगं भख्षीत्याह। भगप्रणेत र्भगसत्य राधः। भगेमान्धियमुदव ददन्नः। भगप्रणो
जनय गोभिरश्वैः। भगप्रनृभिर्नृवन्तस्स्याम। उतेदानीं भगवन्तस्स्याम।
उतप्रपित्व उतमध्ये अह्नाम्।उतोदितामघवन् थ्सूर्यस्य।
वयन्देवानाꣳ सुमतौस्याम। भग एवभगवाꣳ अस्तुदेवाः।।78।।
280909तेनवयं भगवन्तस्स्याम। तन्त्वाभग सर्व इज्जोहवीमि।
सनोभगपुरएताभवेह। समध्वरायोषसो नमन्त। दधिक्रावेव शुचयेपदाय।
अर्वाचीनव्वँसुविदं भगन्नः। रथमिवाश्वा वाजिन आवहन्तु।
अश्वावतीर्गोमतीर्नउषासः। वीरवतीस्सदमुच्छन्तु भद्राः। घृतन्दुहाना
विश्वतᳲ प्रपीनाः। यूयंपातस्वस्तिभिस्सदानः।।79।।
280900
विचख्षणा विचर्तुरꣳ शर्मन्नधिविसर्जनाय ब्रह्मवनं ब्रह्मसवृख्ष
आसीत्तुरश्चि द्देवाᳲ प्रपीना एकञ्च।।9।।

280000

पीवो॑न्न॒ान्ते शु॒क्रास॒स्सोमो॑ धे॒नुमिन्द्र॒स्तर॑स्वा॒ञ्छु चि॒मादे॒वो या॑तु॒ सूर्यो॑

दे॒वी म॒हम॑स्मि॒ तासूँर्याचन्द्र॒मस॒ा नव॑।।9।। पीवो॑न्न॒ामग्ने॒त्वं पा॑रयानाधृ॒ष्य श्शु॒चि॒न्नु

वि॒श्रय॑माणो दि॒वो रु॒क्मोऽन्नं॑ प्रा॒णमन्न॒न्ता सूँर्याचन्द्र॒मस॒ानव॑सप्ततिः।।79।।

पीवो॑न्नाय्यूँ॒यं पा॑तस्व॒स्तिभि॒स्सधा॑नः।। हरि॑ः ओम्।। श्रीकृष्णार्पणमस्तु।।

कृष्णयजुर्ब्राह्मणे द्वितीयाष्टके अष्टम प्रपाठकः द्वितीयाष्टकञ्च समाप्तम्।

310000

।।श्रीरस्तु।।

कृष्णयजुर्ब्राह्मणे तृतीयाष्टके प्रथम प्रपाठक प्रारम्भः हरिःओम्।।

310101

अ॒ग्निर्नः॑ पातु॒ कृत्ति॑काः। नक्ष॑त्रन्दे॒व

मि॑न्द्रि॒यम्। इ॒दमा॑साँव्विचक्ष॒णम्। ह॒विरा॒सञ्जु॑होतन।

यस्य॒ भान्ति॑ र॒श्मयो॒ यस्य के॒तवः॑। यस्ये॒मा विश्वा॒ भुव॑नानि॒

सर्वा॑। स कृत्ति॑काभिर॒भिस॒व्वँसा॑नः। अ॒ग्निर्नो॑ दे॒वस्सु॑वि॒ते

द॑धातु। प्र॒जाप॑ते रोहि॒णी वे॑तु॒ पत्नी॑। वि॒श्वरू॑पा बृह॒ती

चि॒त्रभा॑नुः ।।1।।

310102

सा नो॑ य॒ज्ञस्य॑ सुवि॒ते द॑धातु। यथा॒ जीवे॑म

श॒रद॒स्सवी॑राः। रो॒हि॒णी दे॒व्युद॑गात्पु॒रस्ता॑त्। विश्वा॑

रू॒पाणि॑ प्रति॒मोद॑माना। प्र॒जाप॑तिꣳ ह॒विषा॑ व॒र्धय॑न्ती।

प्रि॒या दे॒वाना॒मुप॑यातु य॒ज्ञम्। सोमो॒ राजा॑ मृगशी॒र्॒षेण॒ आग॑न्।

शि॒वन्नक्ष॑त्रं प्रि॒यम॑स्य॒ धाम॑। आ॒प्याय॑मानो बह॒ुधा जने॑षु।

रेतः॑ प्र॒जाय्यँज॑माने दधातु ।।2।।

310103

यत्ते॒ न॑क्षत्रं मृगशी॒र्॒षमस्ति॑। प्रि॒यꣳ रा॑जन्प्रि॒यत॑मं प्रि॒याणा॑म्। तस्मै॑

ते सोम ह॒विषा॑ विधेम। शन्न॑ एधि द्वि॒पदे॒ शञ्चतु॑ष्पदे। आ॒र्द्रया॑

रु॒द्रः॑ प्रथ॑मान एति। श्रेष्ठो॑ दे॒वाना॒ं पति॑रघ्नि॒याना॑म्।

नक्ष॑त्रमस्य ह॒विषा॑ विधेम। मा नः॑ प्र॒जाꣳ रीरि॑ष॒न्मोत वी॒रान्।

हे॒ती रु॒द्रस्य॒ परि॑ णो वृणक्तु। आ॒र्द्रा नक्ष॑त्रञ्जुषताꣳ

ह॒विर्नः॑ ।।3।।

310104

प्र॒मु॒ञ्चमा॑नौ दुरि॒तानि॒ विश्वा॑। अपा॒घशꣳ॑स

न्नुदता॒मरा॑तिम्। पुन॑र्नो दे॒व्यदि॑तिस्स्पृणोतु। पुन॑र्वसू न॒ः

पुन॒रेताँ॑य्य॒ज्ञम्। पुन॑र्नो दे॒वा अ॒भिय॑न्तु॒ सर्वे॑। पुनः॑

पुनर्वो॑ ह॒विषा॑ यजामः। ए॒वा न दे॒व्यदि॑तिरन॒र्वा। विश्व॑स्य भ॒र्त्री

जग॑तः॑ प्रति॒ष्ठा। पुन॑र्वसू ह॒विषा॑ व॒र्धय॑न्ती।

प्रि॒यन्दे॒वाना॒मप्ये॑तु॒ पाथः॑ ।।4।।

310105

बृहस्पति॑ प्रथ॒मञ्जाय॑मानः।

ति॒ष्यन्नख्ष॑त्रम॒भिसं ब॑भूव। श्रेष्ठो॑ दे॒वाना॒ं पृत॑नासु

जि॒ष्णुः। दिशोऽनु॒ सर्वा॒ अभ॑यन्नो अस्तु। ति॒ष्य॑ पु॒रस्ता॑दु॒त

म॑ध्य॒तो न॑ः। बृह॒स्पति॑र्न॒ परि॑ पातु प॒श्चात्।

बाधे॑ता॒न्द्वेषो॒ अभ॑यङ्कृणुताम्। सु॒वीर्य॑स्य॒ पत॑यस्स्याम ।

इ॒दं स॒र्पेभ्यो॑ ह॒विर॑स्तु॒ जुष्ट॑म्। आ॒श्रे॒षा येषा॑मनु॒

यन्ति॒ चेत॑ः ।।5।।

310106

ये अ॒न्तरि॑ख्षं पृथि॒वीङ्ख्षि॒यन्ति॑। ते

न॑स्स॒र्पासो॒ हव॒माग॑मिष्ठाः। ये रो॑च॒ने सूर्य॒स्यापि॑ स॒र्पाः।

ये दिव॑न्दे॒वीमनु॑ स॒ञ्चर॑न्ति। येषा॑माश्रे॒षा अ॑नु॒यन्ति॒ काम॑म्।

तेभ्य॑स्स॒र्पेभ्यो॒ मधु॑मञ्जुहोमि। उप॑हूता पि॒तरो॒ ये म॒घासु॑।

मनो॑जवसस्सु॒कृत॑स्सुकृ॒त्याः। ते नो॒ नख्ष॑त्रे॒ हव॒माग॑मिष्ठाः।

स्व॒धाभि॑र्य॒ज्ञं प्रय॑तञ्जुषन्ताम् ।।6।।

310107

ये अ॑ग्निद॒ग्धा येऽन॑ग्निदग्धाः। ये॑ऽमुँल्लो॒कं पि॒तर॑ः ख्षि॒यन्ति॑। याँश्च॑

वि॒द्म याँ उ॑ च॒ न प्र॑वि॒द्म। म॒घासु॑ य॒ज्ञं सुकृ॑तञ्जुषन्ताम्।

गवा॒ं पति॒ फल्गु॑नीनामसि॒ त्वम्। तद॑र्यमन्वरुण मित्र चारु॑।

तन्त्वा॑ व॒यं स॑नि॒तार॑ं सनी॒नाम्। जी॒वा जीव॑न्त॒मुप॒ सँवि॑शेम।

येने॒मा विश्वा॒ भुव॑नानि॒ सञ्जि॑ता। यस्य॑ दे॒वा अ॑नु स॒य्यँन्ति॒ चेत॑ः ।।7।।

310108

अ॒र्य॒मा राजा॒ऽजर॒स्तुवि॑ष्मान्। फल्गु॑नीनामृष॒भो

रो॑रवीति। श्रेष्ठो॑ दे॒वाना॑ं भगवो भगासि। तत्त्वा॑ विदु॒

फल्गु॑नी॒स्तस्य॑ वित्तात्। अ॒स्मभ्य॑ङ्ख्ष॒त्रम॒जर॑ं सु॒वीर्य॑म्।

गोम॒दश्व॑व॒दुप॒ सन्नु॑दे॒ह। भगो॑ ह दा॒ता भग॒ इत्प्र॑दा॒ता।

भगो॑ दे॒वी फल्गु॑नी॒रावि॑वेश। भग॒स्येत्तं प्र॑स॒वङ्ग॑मेम। यत्र॑

दे॒वैस्स॑ध॒मादं॑ मदेम ।।8।।

310109

अया॑तु दे॒वस्स॑वि॒तोप॑यातु। हि॒र॒ण्यये॑न सु॒वृता॒ रथे॑न । वह॒न् हस्त॑ं सु॒भग॑ं

व्वि॒द्म॒नाप॑सम्। प्र॒यच्छ॑न्त॒ं पपु॑रि॒ं पुण्य॒मच्छ॑। हस्त॒

प्रय॑च्छत्व॒मृत॒त्वँसीयः। दख्षि॑णेन॒ प्रति॑गृभ्णीम एनत्।
दा॒तार॑म॒द्य स॑वि॒ता वि॑देय। यो न॒ो हस्ता॑य प्रसु॒वाति॑ य॒ज्ञम्।
त्वष्टा॒ नख्ष॑त्रम॒भ्ये॑ति चि॒त्राम्। सु॒भꣳस॑सय्युँव॒तिꣳ रोच॑मानाम् ।।9।।
310110
नि॒वे॒शय॑न्न॒मृता॒न्मर्त्या॑ꣳश्च। रू॒पाणि॑
पि॒ꣳ॒शन्भुव॑नानि॒ विश्वा॑। तन्न॒स्त्वष्टा॒ तदु॑ चि॒त्रा विच॑ष्टाम्।
तन्नख्ष॑त्रं भू॒रि॒दा अ॑स्तु॒ मह्य॑म्। तन्न॑ꣳ प्र॒जाँव्वी॒रव॑तीꣳ
सनोतु। गोभि॑र्नो॒ अश्वै॒स्सम॑नक्तु य॒ज्ञम्। वा॒युर्नख्ष॑त्र
म॒भ्ये॑ति॒ निष्ट्या॑म्। ति॒ग्मशृ॑ङ्गो वृष॒भो रोरु॑वाणः।
स॒मी॒रय॒न्भुव॑ना मात॒रिश्वा॑। अप॒ द्वेषा॑ꣳसि नुदता॒मरा॑तीः ।।10।।
310111
तन्नो॑ वा॒युस्तदु॒ निष्ट्या॑ शृणोतु। तन्नख्ष॑त्रं भू॒रि॒दा अ॑स्तु॒
मह्य॑म्। तन्नो॑ दे॒वासो॒ अनु॑जानन्तु॒ काम॑म्। यथा॒ तरे॑म
दु॒रि॒तानि॒ विश्वा॑। दू॒रम॒स्मच्छत्र॑वो यन्तु भी॒ताः। तदि॑न्द्रा॒ग्नी
कृ॑णुता॒न्तद्वि॒शा॑खे। तन्नो॑ दे॒वा अनु॑मदन्तु य॒ज्ञम्। प॒श्चात्
पु॒रस्ता॒दभ॑यन्नो अस्तु। नख्ष॑त्राणा॒मधि॑पत्नी॒ विशा॑खे।
श्रेष्ठा॑विन्द्रा॒ग्नी भुव॑नस्य गो॒पौ ।।11।।
310112
विषू॑च॒श्शत्रू॒नप॒ बाध॑मानौ। अप॒ ख्षुध॑न्नुदता॒मरा॑तिम्। पू॒र्णा प॒श्चादु॒त पू॒र्णा
पु॒रस्ता॑त्। उन्म॑ध्य॒तꣳ पौ॒र्णमा॒सी जि॑गाय। तस्या॒न्दे॒वा अधि॑
स॒व्वँस॑न्तः। उ॒त्त॒मे नाक॑ इ॒ह मा॑दयन्ताम्। पृ॒थ्वी सु॒वर्चा॑
यु॒व॒तिस्स॒जोषा॑ः। पौ॒र्ण॒मा॒स्युद॑गा॒च्छोभ॑माना। आ॒प्या॒यय॑न्ती
दु॒रि॒तानि॒ विश्वा॑। उ॒रुन्दुहा॒य्यँज॑मानाय य॒ज्ञम् ।।12।।
310100
चि॒त्रभा॑नु॒र्यज॑माने दधातु ह॒विर्नꣳ पाथ॒श्चेतो॑ जुषन्ता॒ञ्चेतो॑
मदेम॒ रोच॑माना॒मरा॑तीर्गो॒पौ य॒ज्ञम् ।।1।।
310201
ऋ॒द्ध्यास्म॑ ह॒व्यैर्नम॑सोप॒सद्य॑। मि॒त्रन्दे॒वं मि॑त्र॒धेय॑न्नो
अस्तु। अ॒नू॒रा॒धान् ह॒विषा॑ व॒र्धय॑न्तः। श॒तञ्जीवे॑म
श॒रद॒स्सवी॑राः। चि॒त्रन्नख्ष॑त्र॒मुद॑गात्पु॒रस्ता॑त्।
अ॒नू॒रा॒धास॒ इति॒ यद्वद॑न्ति। तन्मि॒त्र ए॑ति प॒थिभि॑र्देव॒यानै॑ः।

हि॒र॒ण्यये॒र्वित॑तैर॒न्तरि॑ख्षे। इन्द्रो॑ ज्ये॒ष्ठामनु॒

नख्ष॑त्रमेति। यस्मि॑न्वृ॒त्रँव्वृ॒त्र॒तूर्ये॑ त॒तार॑ ।।13।।

310202

तस्मि॑न्व॒यम॒मृत॒न्दुहा॑नाः। ख्षुध॑न्तरेम॒ दुरि॑ति॒न्दुरि॑ष्टिम्।

पु॒र॒न्द॒राय॑ वृष॒भाय॑ धृ॒ष्णवे॑। अषा॑ढाय॒ सह॑मानाय मी॒ढुषे॑।

इन्द्रा॑य ज्ये॒ष्ठा मधु॑म॒द्दुहा॑ना। उ॒रुङ्कृ॑णोतु॒ यज॑मानाय लो॒कम्।

मूलं॑ प्र॒जाँव्वी॒रव॑तीँव्विदेय। परा॑च्येतु॒ निर्ऋ॑तिः पराचा।

गोभि॒र्नख्ष॑त्रं प॒शुभि॒स्सम॑क्तम्। अह॑र्भूया॒द्यज॑मानाय॒

मह्य॑म् ।।14।।

310203

अह॑र्नो अ॒द्य सु॑वि॒ते द॑धातु। मूल॒न्नख्ष॑त्र॒मिति॒

यद्वद॑न्ति। परा॑चीव्वाँ॒चा निर्ऋ॑तिन्नुदामि। शि॒वं प्र॒जायै॑

शि॒वम॑स्तु॒ मह्य॑म्। या दि॒व्या आपः॒ पय॑सा संबभू॒वुः। या

अ॒न्तरि॑ख्ष उ॒त पार्थि॑वी॒र्याः। यासा॑मषा॒ढा अ॑नु॒यन्ति॒ काम॑म्।

ता न॒ आप॒श्श स्यो॒ना भ॑वन्तु। याश्च॒ कूप्या॒ याश्च॑ ना॒द्या॑

स्समु॒द्रिया॑ः। याश्च॑ वैश॒न्तीरु॒त प्रा॑स॒चीर्याः ।।15।।

310204

यासा॑मषा॒ढा मधु॑ भ॒ख्षय॑न्ति॒। ता न॒ आप॒श्श स्यो॒ना भ॑वन्तु।

तन्नो॒ विश्वे॒ उप॑ शृण्वन्तु दे॒वाः। तद॑षा॒ढा अ॒भिसय्य॑न्तु य॒ज्ञम्।

तन्नख्ष॑त्रं प्रथतां प॒शुभ्य॑ः। कृ॒षिर्वृ॒ष्टिर्यज॑मानाय कल्पताम्।

शु॒भ्राः क॒न्या॑ युव॒तय॑स्सु॒पेश॑सः। क॒र्म॒कृत॑स्सु॒कृतो॑

वी॒र्या॑वतीः। विश्वा॑न्दे॒वान् ह॒विषा॑ व॒र्धय॑न्तीः। अ॒षा॒ढाः

काम॒मुप॑ यान्तु य॒ज्ञम् ।।16।।

310205

यस्मि॒न्ब्रह्मा॒ऽभ्यज॑य॒थ् सर्व॑मे॒तत्। अ॒मुञ्च॑ लो॒कमि॒दमू॑च॒ सर्व॑म्। तन्नो॒

नख्ष॑त्रमभि॒जिद्वि॒जित्य॑। श्रियन्द॑धा॒त्वहृ॑णीयमानम्। उ॒भौ लो॒कौ

ब्रह्म॑णा॒ सञ्जि॑ते॒मौ। तन्नो॒ नख्ष॑त्रमभि॒जिद्विच॑ष्टाम्। तस्मि॑न्

व॒यं पृत॑ना॒स्सञ्ज॑येम। तन्नो॑ दे॒वासो॒ अनु॑जानन्तु॒ काम॑म्।

शृ॒ण्वन्ति॑ श्रो॒णाम॒मृत॑स्य गो॒पाम्। पुण्या॑मस्या॒ उप॑शृणोमि॒ वाच॑म् ।।17।।

310206

म॒हीन्दे॒वीँ व्विष्णु॑पत्नीमजू॒र्याम्। प्र॒तीची॑मेनाः

ह॒विषा॑ यजामः। त्रे॒धा विष्णु॑रुरुगा॒यो विच॑क्रमे। म॒हीन्दिवं॑
पृथि॒वीम॒न्तरि॑ख्षम्। तच्छ्रो॒णैति॒ श्रव॑ इ॒च्छमा॑ना। पुण्य॒
श्लोक॒य्यँज॑मानाय कृण्व॒ती। अ॒ष्टौ दे॒वा वस॑वस्सो॒म्यास॑ः। चत॑स्रो
दे॒वीर॒जरा॒श्श्रवि॑ष्ठाः। ते य॒ज्ञं पा॑न्तु॒ रज॑सᳲ पु॒रस्ता॑त्।
स॒व्वँ॒थ्स॒रीण॑म॒मृत॑ स्व॒स्ति ।।18।।
310207
य॒ज्ञन्न॑ᳲ पान्तु॒ वस॑वᳲ
पु॒रस्ता॑त्। द॒ख्षि॒ण॒तो॑ऽभिय॑न्तु॒ श्रवि॑ष्ठाः। पुण्य॒न्नख्ष॑त्र
म॒भिसँवि॑शाम। मा नो॒ अरा॑तिर॒घश॒ꣳ॒साऽगन्न्॑। ख्ष॒त्रस्य॒ राजा॒
वरु॑णोऽधिर॒ाजः। नख्ष॑त्राणाꣳ श॒तभि॑षग्वसि॑ष्ठः। तौ दे॒वेभ्य॑ᳲ
कृणुतो दी॒र्घमायु॑ः। श॒तꣳ स॒हस्रा॑ भेष॒जानि॑ धत्तः। य॒ज्ञन्नो॒
राजा॒ वरु॑ण॒ उप॑यातु। तन्नो॒ विश्वे॑ अ॒भि सय्यँ॑न्तु दे॒वाः ।।19।।
310208
तन्नो॒ नख्ष॑त्रꣳ श॒तभि॑षग्जुषा॒णम्। दी॒र्घमायु॑ᳲ प्रति॑रद्
भेष॒जानि॑। अ॒ज एक॑पा॒दुद॑गात्पु॒रस्ता॑त्। विश्वा॑ भू॒तानि॑ प्रति॒
मोद॑मानः। तस्य॑ दे॒वाᳲ प्र॑स॒वय्यँ॑न्ति॒ सर्वे॑। प्रो॒ष्ठ॒प॒दासो॑
अ॒मृत॑स्य गो॒पाः। वि॒भ्राज॑मानस्समिधा॒न उ॒ग्रः। आऽन्तरि॑ख्षमरुह॒
दग॒न्द्याम्। तꣳ सूर्य॑न्दे॒वम॒जमेक॑पादम्। प्रो॒ष्ठ॒प॒दासो॒
अनु॑यन्ति॒ सर्वे॑ ।।20।।
310209
अहि॑र्बु॒ध्निय॒ᳲ प्रथ॑मान एति।
श्रेष्ठो॑ दे॒वाना॑मु॒त मानु॑षाणाम्। तं ब्रा॑ह्म॒णास्सो॑म॒पा
स्सो॒म्यास॑ः। प्रो॒ष्ठ॒प॒दासो॑ अ॒भि र॑ख्षन्ति॒ सर्वे॑। च॒त्वार॒
एक॑म॒भिकर्म॑ दे॒वाः। प्रो॒ष्ठ॒प॒दास॒ इति॒ यान् वद॑न्ति।
ते बु॒ध्निय॑ं परि॒षद्य॑ स्तु॒वन्त॑ः। अहिꣳ॑ रख्षन्ति॒
नम॑सोप॒सद्य॑। पू॒षा रे॒वत्यन्वे॑ति॒ पन्था॑म्। पु॒ष्टिपती॑ पशु॒पा
वाज॑बस्त्यौ ।।21।।
310210
इ॒मानि॑ ह॒व्या प्रय॑ता जुषा॒णा। सु॒गैर्नो॒ यानै॒
रुप॑यातय्यँ॒ज्ञम्। ख्षु॒द्रान्प॒शून्र॑ख्षतु रे॒वती॑ नः। गावो॑ नो॒
अश्वा॒ꣳ॒ अन्वे॑तु पू॒षा। अन्न॒ꣳ॒ रख्ष॑न्तौ

बहुधा विरूपम्। वाजꣳ सनुताय्यँजमानाय यज्ञम्।
तदश्विनावश्वयुजोपयाताम्। शुभङ्गमिष्ठौ सुयमेभिरश्वैः।
स्वन्नख्षत्रꣳ हविषा यजन्तौ। मध्वा संपृक्तौ यजुषा समक्तौ।।22।।
310211
यौ देवानां भिषजौ हव्यवाहौ। विश्वस्य दूतावमृतस्य
गोपौ। तौ नख्षत्रञ्जुजुषाणोपयाताम्। नमोऽश्विभ्याङ्कृणुमो
ऽश्वयुग्भ्याम्। अप पाप्मानं भरणीर्भरन्तु। तद्यमो राजा
भगवान् विचष्टाम्। लोकस्य राजा महतो महान् हि।सुगन्नः
पन्थामभयङ्कृणोतु। यस्मिन्नक्षत्रे यम एति राजा।
यस्मिन्नेनमभ्यषिञ्चन्त देवाः। तदस्य चित्रꣳ हविषा यजाम।
अप पाप्मानं भरणीर्भरन्तु। निवेशनी यत्ते देवा अदधुः ।।23।।
310200
ततार मह्यं प्रासचीर्या यान्तु यज्ञव्वाँच स्वस्ति देवा
अनुयन्ति सर्वे वाजबस्त्यौ समक्तौ देवास्त्रीणिच ।।2।।
310301
नवोनवो भवति जायमानो यमादित्या अꣳशुमाप्याययन्ति।
ये विरूपे समनसा सव्व्यँयन्ती। समानन्तन्तुं परितातना ते।
विभू प्रभू अनुभू विश्वतो हुवे। ते नो नख्षत्रे हवमा
गमेतम्। वयन्देवी ब्रह्मणा सँव्विदानाः। सुरत्नासो
देववीतिन्दधानाः। अहोरात्रे हविषा वर्धयन्तः।
अति पाप्मानमति मुक्त्या गमेम। प्रत्युवदृश्यायती।।24।।
310302
व्युच्छन्ती दुहिता दिवः। अपो मही वृणुते चख्षुषा। तमो
ज्योतिष्कृणोति सूनरी। उदुस्त्रियास्सचते सूर्यः। सचा
उद्यन्नक्षत्रमर्चिमत्। तवेदुषो व्युषि सूर्यस्य च ।
सं भक्तेन गमेमहि। तन्नो नक्षत्रमर्चिमत्। भानुमत्तेज
उच्चरत्। उपयज्ञमिहागमत् ।।25।।
310303
प्र नख्षत्राय देवाय। इन्द्रायेन्दुꣳ हवामहे। सनस्सविता सुवथ्सनिम्। पुष्टिदाँ
व्वीरवत्तमम्। उदुत्यञ्चित्रम्। अदितिर्न उरुष्यतु महीमू षु
मातरम्। इदँव्विष्णुः प्रतद्विष्णुः। अग्निर्मूर्धा भुवः।

अनु॒नो॒ऽद्यानु॑मति॒रन्विद॑नुमते॒ त्वम्। ह॒व्य॒वाह॒ स्वि॑ष्टम् ।।26।।
310300
आ॒य॒त्य॑गम॒थ्स्वि॑ष्टम् ।।3।।
310401
अ॒ग्निर्वा अ॑कामयत। अ॒न्ना॒दो दे॒वाना॑ꣳ स्या॒मिति॑। स
ए॒तम॒ग्नये॒ कृत्ति॑काभ्यः॒ पु॒रो॒डाश॑म॒ष्टाक॑पाल॒न्निर॑वपत्।
तत॒ो वै सो॑ऽन्ना॒दो दे॒वाना॑मभवत्। अ॒ग्निर्वै दे॒वाना॑मन्ना॒दः। यथा॑ ह॒ वा
अ॒ग्निर्दे॒वाना॑मन्ना॒दः। ए॒वꣳ ह॒ वा ए॒ष म॑नु॒ष्या॑णां भवति। य ए॒तेन॑
ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑। सोऽत्र॑ जुहोति।
अ॒ग्नये॒ स्वाहा॒ कृत्ति॑काभ्य॒स्स्वाहा॑। अ॒म्बायै॒ स्वाहा॑ दु॒लायै॒ स्वाहा॑।
नि॒त॒त्न्यै स्वाहा॒ऽभ्रय॑न्त्यै॒ स्वाहा॑। मे॒घय॑न्त्यै॒
स्वाहा॑ व॒र्॒षय॑न्त्यै॒ स्वाहा॑। चु॒पु॒णीका॑यै॒ स्वाहेति॑ ।।27।।
310402
प्र॒जाप॑तिः॒ प्र॒जा अ॑सृजत। ता अ॑स्मात्सृ॒ष्टाः परा॑चीरायन्। तासा॑ꣳ
रोहि॒णीम॒भ्य॑ध्यायत्। सो॑ऽकामयत। उप॒ मा व॑र्तेत।
समे॑नया गच्छेयेति॑। स ए॒तं प्र॒जाप॑तये
रोहि॒ण्यै च॒रुन्निर॑वपत्।
तत॒ो वै सा तमु॒पाव॑र्तत। समे॑नयागच्छत। उप॑ ह॒ वा
ए॑नं प्रि॒यमाव॑र्तते। सं प्रि॒येण॑ गच्छते। य ए॒तेन॑ ह॒विषा॒ यज॑ते।
य उ॑चैनदे॒वँव्वेद॑ । सोऽत्र॑ जुहोति । प्र॒जाप॑तये॒ स्वाहा॑
रोहि॒ण्यै स्वाहा॑। रोच॑मानायै॒ स्वाहा॑ प्र॒जाभ्य॒स्स्वाहेति॑ ।।28।।
310403
सोमो॒ वा अ॑कामयत। ओष॑धीनाꣳ
रा॒ज्यम॒भिज॑येय॒मिति॑। स ए॒तꣳ सोमा॑य मृगशी॒र्॒षाय॑
श्यामा॒कञ्च॒रुं पय॑सि॒ निर॑वपत्। तत॒ो वै स ओष॑धीनाꣳ
रा॒ज्यम॒भ्य॑जयत्। स॒मा॒नाना॑ꣳ ह॒ वै रा॒ज्यम॒भिज॑यति।
य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑।
सोऽत्र॑ जुहोति। सोमा॑य॒ स्वाहा॑
मृगशी॒र्॒षाय॒ स्वाहा॑। इ॒न्व॒काभ्य॒स्स्वाहौष॑धीभ्य॒स्स्वाहा॑।
रा॒ज्याय॒ स्वाहा॒ऽभिजि॑त्यै॒ स्वाहेति॑ ।।29।।
310404

रु॒द्रो वा अ॑कामयत। प॒शु॒मान्थ्स्या॒मिति॑। स ए॒तꣳ
रु॒द्राया॒र्द्राय॒ै प्रैय्य॑ङ्गवञ्च॒रुं पय॑सि॒ निर॑वपत्।
तत॒ो वै स प॑शु॒मान॑भवत्। प॒शु॒मान् ह॒ वै भ॑वति। य ए॒तेन॑ ह॒विषा॒ यज॑ते।
य उ॑ चैनदे॒वँव्वेद॑। सोऽत्र॑ जुहोति। रु॒द्राय॒ स्वाहा॒ऽर्द्राय॒ै स्वाहा॑।
पिन्व॑मानाय॒ै स्वाहा॑ प॒शुभ्य॒स्स्वाहेति॑ ।।30।।
310405
ऋ॒ख्षा वा इ॒यम॑लो॒मका॑ऽऽसीत्।साऽका॑मयत। ओष॑धीभि॒र्वन॒स्पति॑भि॒ꣳ प्रजा॑ये॒येति॑।
सैतमदि॑त्य॒ै पुन॑र्वसुभ्याञ्च॒रुन्निर॑वपत्। तत॒ो वा इ॒यमोष॑धीभि॒र्वन॒स्पति॑भि॒ꣳ प्राजा॑यत।
प्रजा॑यते ह॒ वै प्र॒जया॑ प॒शुभि॑ः। य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑।
सोऽत्र॑ जुहोति। अदि॑त्य॒ै स्वाहा॒ पुन॑र्वसुभ्याम्। स्वाहा भू॑त्य॒ै स्वाहा॒
प्रजा॑त्य॒ै स्वाहेति॑ ।।31।।
310406
बृ॒ह॒स्पति॒र्वा अ॑कामयत। ब्र॒ह्म॒व॒र्च॒सी स्या॒मिति॑। स ए॒तं
बृ॒ह॒स्पत॑ये ति॒ष्या॑य नैवा॒रञ्च॒रुं पय॑सि॒ निर॑वपत् ।
तत॒ो वै स ब्र॑ह्मवर्च॒स्य॑भवत् । ब्र॒ह्म॒व॒र्च॒सी
ह॒ वै भ॑वति। य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑।
सोऽत्र॑ जुहोति। बृ॒ह॒स्पत॑ये॒ स्वाहा॑ ति॒ष्या॑य॒ स्वाहा॑।
ब्र॒ह्म॒व॒र्च॒साय॒ स्वाहेति॑ ।।32।।
310407
दे॒वा॒सु॒रास्सय्यँ॑त्ता आसन्। ते दे॒वास्स॒र्पेभ्य॑
आश्रे॒षाभ्य॒ आज्ये॑ कर॒म्भन्निर॑वपन्। ताने॒ताभि॑रे॒व
दे॒वता॑भि॒रुपा॑नयन्। ए॒ताभि॑र्ह॒ वै दे॒वता॑भिर्द्विषन्त॒ं
भ्रातृ॑व्य॒मुप॑नयति। य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑। सोऽत्र॑ जुहोति।
स॒र्पेभ्य॒स्स्वाहा॑ऽऽश्रे॒षाभ्य॒स्स्वाहा॑। द॒न्द॒शूके॑भ्य॒स्स्वाहेति॑ ।।33।।
310408
पि॒तर॒ो वा अ॑कामयन्त। पि॒तृ॒लो॒क ऋ॑ध्नु॒या॒मेति॑। त ए॒तं पि॒तृभ्यो॑ म॒घाभ्य॑ः
पु॒रो॒डाश॒ꣳ षट्क॑पाल॒न्निर॑वपन्। तत॒ो वै ते पि॑तृ॒लो॒क आ॑र्ध्नुवन्।
पि॒तृ॒लो॒के ह॒ वा ऋ॑ध्नोति। य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑।
सोऽत्र॑ जुहोति। पि॒तृभ्य॒स्स्वाहा॑ म॒घाभ्य॑ः। स्वाहा॑ऽन॒घाभ्य॒स्स्वाहा॑ग॒दाभ्य॑ः।
स्वाहा॑ऽरुन्ध॒तीभ्य॒स्स्वाहेति॑ ।।34।।
310409

अर्यमा वा अकामयत। पशुमान्थ्स्यामिति। स एतमर्यम्णे फल्गुनीभ्याञ्च
रुन्निरवपत्। ततो वै स पशुमानभवत्। पशुमान् ह वै भवति। य एतेन
हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। अर्यम्णे स्वाहा
फल्गुनीभ्याꣳ स्वाहा। पशुभ्यस्स्वाहेति ।।35।।
310410
भगो वा अकामयत। भगी श्रेष्ठी देवानाꣳ स्यामिति।
स एतं भगाय फल्गुनीभ्याञ्चरुन्निरवपत्। ततो वै
स भगी श्रेष्ठी देवानामभवत्। भगी ह वै
श्रेष्ठी समानानां भवति। य एतेन
हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति।
भगाय स्वाहा फल्गुनीभ्याꣳ स्वाहा।
श्रैष्ठ्याय स्वाहेति ।।36।।
310411
सविता वा अकामयत। श्रन्मे देवा
दधीरन्। सविता स्यामिति। स एतꣳ सवित्रे हस्ताय
परोडाशन्द्वादशकपालन्निरवपदाशूनाव्व्रीहीणाम्।
ततो वै तस्मै श्रद्देवा अदधत। सविताऽभवत्। श्रद्धवा
अस्मै मनुष्या दधते। सविता समानानां भवति। य एतेन हविषा
यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। सवित्रे स्वाहा हस्ताय। स्वाहा ददुते
स्वाहा पृणते। स्वाहा प्रयच्छते स्वाहा प्रतिगृभ्णते स्वाहेति ।।37।।
310412
त्वष्टा वा अकामयत। चित्रं प्रजाँव्विन्देयेति। स एतन्त्वष्ट्रे चित्रायै
पुरोडाशमष्टाकपालन्निरवपत्। ततो वै स चित्रं प्रजामविन्दत।
चित्रꣳ ह वै प्रजाँव्विन्दते। य एतेन हविषा यजते। य उ चैनदेवँव्वेद।
सोऽत्र जुहोति। त्वष्ट्रे स्वाहा चित्रायै स्वाहा।
चैत्राय स्वाहा प्रजायै स्वाहेति ।।38।।
310413
वायुर्वा अकामयत। कामचारमेषु लोकेष्वभिजयेयमिति।
स एतद्वायवे निष्ट्यायै गृष्ट्यै दुग्धं पयो निरवपत्।
ततो वै स कामचारमेषु लोकेष्वभ्यजयत्। कामचारꣳ
ह वा एषु लोकेष्वभिजयति। य एतेन

ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑। सोऽत्र॑ जुहोति। वा॒यवे॒ स्वाहा॒
निष्ट्या॑यै॒ स्वाहा᳚। का॒म॒चारा॑य॒ स्वाहा॒ऽभिजि॑त्यै॒स्वाहेति॑ ।।39।।
310414
इ॒न्द्रा॒ग्नी वा अ॑कामयेताम्। श्रैष्ठ्य॑न्दे॒वाना॑म॒भिज॑ये॒वेति॑।
ता॒वे॒तमि॑न्द्राग्निभ्याँ॒व्विशा॑खाभ्यां पु॒रो॒डाश॒मेका॑दशकपाल॒न्निर॑वपताम्।
तत॒ो वै तौ श्रैष्ठ्य॑न्दे॒वाना॑म॒भ्य॑जयताम्। श्रैष्ठ्य॑ꣳ
ह॒ वै स॑मा॒ना॒ना॑म॒भिज॑यति। य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑।
सोऽत्र॑ जुहोति। इ॒न्द्रा॒ग्निभ्या॒ꣳ स्वाहा॒ विशा॑खाभ्या॒ꣳ स्वाहा᳚।
श्रैष्ठ्या॑य॒ स्वाहा॒ऽभिजि॑त्यै॒ स्वाहेति॑ ।।40।।
310415
अथै॒तत्पौ᳚र्णमा॒स्या आज्य॒न्निर्व॑पति। कामो॒ वै पौ᳚र्णमा॒सी। काम॒ आज्य᳚म्।
कामे॑नै॒व काम॒ꣳ सम॑र्धयति। क्षि॒प्रमे॑न॒ꣳ सकाम॒ उप॑नमति।
येन॒ कामे॑न॒ यज॑ते। सोऽत्र॑ जुहोति। पौ॒र्ण॒मा॒स्यै
स्वाहा॒ कामा॑य॒ स्वाहाऽऽग॑त्यै॒ स्वाहेति॑ ।।41।।
310400
अ॒ग्निः पञ्च॑दश प्र॒जाप॑ति॒ष्षोड॑श॒ सोम॒ एका॑दश रु॒द्रो दश॒र्क्षैका॑दश॒
बृह॒स्पति॒र्दश॑ देवासु॒रा नव॑ पि॒तर॒ एका॑दशार्य॒मा भगो॒ दश॑ दश सवि॒ता
चतु॑र्दश॒ त्वष्टा॑ वा॒युरि॑न्द्राग्नी दश॑ दु॒शाथै॒तत्पौ᳚र्णमा॒स्या अ॒ष्टौ पञ्च॑दश।।4।।
310501
मि॒त्रो वा अ॑कामयत। मि॒त्र॒धेय॑मे॒षु लो॒केष्व॒भिज॑येय॒मिति॑। स ए॒तं
मि॒त्राया॑नू॒रा॒धेभ्य॑श्च॒रुन्निर॑वपत्। तत॒ो वै स मि॑त्र॒धेय॑मे॒षु
लो॒केष्व॒भ्य॑जयत्। मि॒त्र॒धेय॑ꣳ ह॒ वा ए॒षु लो॒केष्व॒भिज॑यति। य ए॒तेन॑
ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑। सोऽत्र॑ जुहोति। मि॒त्राय॒ स्वाहा॑ऽनू॒रा॒धेभ्य॒स्स्वाहा᳚।
मि॒त्र॒धेया॑य॒ स्वाहा॒ऽभिजि॑त्यै॒ स्वाहेति॑।।42।।
310502
इन्द्रो॒ वा अ॑कामयत। ज्यैष्ठ्य॑न्दे॒वाना॑म॒भिज॑येय॒मिति॑। स ए॒तमिन्द्रा॑य
ज्ये॒ष्ठायै॑ पु॒रो॒डाश॒मेका॑दशकपाल॒न्निर॑वपन्म॒हाव्रीही॑णाम्।
तत॒ो वै स ज्यैष्ठ्य॑न्दे॒वाना॑म॒भ्य॑जयत्। ज्यैष्ठ्य॑ꣳ ह॒
वै स॑मा॒ना॒ना॑म॒भिज॑यति। य ए॒तेन॑ ह॒विषा॒ यज॑ते। य उ॑ चैनदे॒वँव्वेद॑।
सोऽत्र॑ जुहोति। इन्द्रा॑य॒ स्वाहा᳚ ज्ये॒ष्ठायै॒ स्वाहा᳚।
ज्यैष्ठ्या॑य॒ स्वाहा॒भिजि॑त्यै॒ स्वाहेति॑ ।।43।।

310503
प्रजापतिर्वा अकामयत। मूलंप्रजाँव्विन्देयेति। स एतं प्रजापतये मूलाय चरुन्निरवपत्। ततो वै स मूलं प्रजामविन्दत। मूलꣳ ह वै प्रजाँव्विन्दते। य एतेन हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। प्रजापतये स्वाहा मूलाय स्वाहा। प्रजायै स्वाहेति ।।44।।
310504
आपो वा अकामयन्त। समुद्रङ्काममभिजयेमेति। ता एतमद्भ्योऽषाढाभ्यश्चरु न्निरवपन्। ततो वै तास्समुद्रङ्काममभ्यजयन्। समुद्रꣳ ह वै काममभिजयति। य एतेन हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। अद्भ्यस्स्वाहाऽषाढाभ्यस्स्वाहा। समुद्राय स्वाहा कामाय स्वाहा। अभिजित्यै स्वाहेति।।45।।
310505
विश्वे वै देवा अकामयन्त। अनपजय्यञ्जयेमेति। त एतँव्विश्वेभ्यो देवेभ्योऽषाढाभ्यश्चरुन्निरवपन्। ततो वै तेऽनपजय्यमजयन्। अनपजय्यꣳ ह वै जयति। य एतेन हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। विश्वेभ्यो देवेभ्यस्स्वाहाऽषाढाभ्यस्स्वाहा। अनपजय्याय स्वाहा जित्यै स्वाहेति ।।46।।
310506
ब्रह्म वा अकामयत। ब्रह्मलोकमभिजयेयमिति। तदेतं ब्रह्मणेऽभिजिते चरुन्निरवपत्। ततो वै तद्ब्रह्मलोकमभ्यजयत्। ब्रह्मलोकꣳ ह वा अभिजयति। य एतेन हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। ब्रह्मणे स्वाहाऽभिजिते स्वाहा। ब्रह्मलोकाय स्वाहाऽभिजित्यै स्वाहेति।।47।।
310507
विष्णुर्वा अकामयत। पुण्य श्लोकꣳ शृण्वीय। न मा पापी कीर्तिरागच्छेदिति। स एतँव्विष्णवे श्रोणायै पुरोडाशन्त्रिकपालन्निरवपत्। ततो वै स पुण्य श्लोकमशृणुत। नैनं पापी कीर्तिरागच्छत्। पुण्यꣳ

ह वै श्लोकꣳ शृणुते। नैनं पापी कीर्तिरागच्छति। य एतेन हविषा यजते। य
उ चैनदेवँव्वेद। सोऽत्र जुहोति। विष्णवे स्वाहा श्रोणायै स्वाहा।
श्लोकाय स्वाहा श्रुताय स्वाहेति।।48।।
310508
वसवो वा अकामयन्त। अग्रन्देवतानां परीयामेति। त एतं
वसुभ्यश्श्रविष्ठाभ्यः पुरोडाशमष्टाकपालन्निरवपन्।
ततो वै तेऽग्रन्देवतानां पर्यायन्। अग्रꣳ ह वै
समानानां पर्येति। य एतेन हविषा यजते। य उ चैनदेवँव्वेद।
सोऽत्र जुहोति। वसुभ्यस्स्वाहा श्रविष्ठाभ्यस्स्वाहा।
अग्राय स्वाहा परीत्यै स्वाहेति।।49।।
310509
इन्द्रो वा अकामयत। दृढोऽशिथिलस्स्यामिति। स एतं
वरुणाय शतभिषजे भेषजेभ्यः पुरोडाशन्दशकपालन्निरवपत्
कृष्णानाँव्व्रीहीणाम्। ततो वै स दृढोऽशिथिलोऽभवत्। दृढो ह वा अशिथिलो भवति।
य एतेन हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। वरुणाय स्वाहा
शतभिषजे स्वाहा। भेषजेभ्यस्स्वाहेति ।।50।।
310510
अजो वा एकपादकामयत। तेजस्वी ब्रह्मवर्चसी स्यामिति।
स एतमजायैकपदे प्रोष्ठपदेभ्यश्चरुन्निरवपत्। ततो वै स तेजस्वी
ब्रह्मवर्चस्यभवत्। तेजस्वी ह वै ब्रह्मवर्चसी भवति। य एतेन
हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। अजायैकपदे स्वाहा
प्रोष्ठपदेभ्यस्स्वाहा। तेजसे स्वाहा ब्रह्मवर्चसाय स्वाहेति।।51।।
310511
अहिर्वै बुध्नियोऽकामयत। इमां प्रतिष्ठाँव्विन्देयेति।
स एतमहये बुध्नियाय प्रोष्ठपदेभ्यः पुरोडाशं भूमिकपालन्निरवत्।
ततो वै स इमां प्रतिष्ठामविन्दत। इमाः ह वै प्रतिष्ठाँव्विन्दते । य एतेन हविषा यजते।
य उ चैनदेवँव्वेद। सोऽत्र जुहोति। अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यस्स्वाहा।
प्रतिष्ठायै स्वाहेति ।।52।।
310512
पूषा वा अकामयत। पशुमान्थ्स्यामिति।
स एतं पूष्णे रेवत्यै चरुन्निरवपत्। ततो वै

स पशुमानभवत्। पशुमान् ह वै भवति। य एतेन हविषा यजते। य उ चैनदेवँव्वेद।
सोऽत्र जुहोति। पूष्णे स्वाहा रेवत्यै स्वाहा। पशुभ्यस्स्वाहेति।।53।।
310513
अश्विनौ वा अकामयेताम्। श्रोत्रस्विनावबधिरौ स्यावेति।
तावेतमश्विभ्यामश्वयुग्भ्यां पुरोडाशन्द्विकपालन्निरवपताम्।
ततो वै तौ श्रोत्रस्विनावबधिरावभवताम्। श्रोत्रस्वी ह वा अबधिरो भवति। य
एतेन हविषा यजते। य उ चैनदेवँव्वेद।
सोऽत्र जुहोति। अश्विभ्याꣳ स्वाहाऽश्वयुग्भ्याꣳ स्वाहा।
श्रोत्राय स्वाहा श्रुत्यै स्वाहेति ।।54।।
310514
यमो वा अकामयत। पितृणाꣳ राज्यमभिजयेयमिति। स एतँय्यमायापभरणीभ्य
श्चरुन्निरपवत्। ततो वै स पितृणाꣳ राज्यमभ्यजयत्।
समानानाꣳ ह वै राज्यमभि जयति। य एतेन हविषा यजते।
य उ चैनदेवँव्वेद। सोऽत्र जुहोति। यमाय स्वाहा
ऽपभरणीभ्यस्स्वाहा। राज्याय स्वाहाभिजित्यै स्वाहेति ।।55।।
310515
अथैतदमावास्याया आज्यन्निर्वपति। कामो वा अमावास्या।
काम आज्यम्। कामेनैव कामꣳ समर्धयति। क्षिप्रमेनꣳ
सकाम उपनमति। येन कामेन यजते। सोऽत्र जुहोति।
अमावास्यायै स्वाहा कामाय स्वाहाऽऽगत्यै स्वाहेति ।।56।।
310500
मित्र इन्द्रः प्रजापतिर्दश दशाप एकादश विश्वे ब्रह्म
दश दश विष्णुस्त्रयोदश वसव इन्द्रोऽजोऽहिर्बे बुध्नियः
पूषाऽश्विनौ यमो दश दशाथैतदमावास्याया अष्टौ पञ्चदश ।।5।।
310601
चन्द्रमा वा अकामयत। अहोरात्रानर्धमासान्मासानृतून्
थ्संव्वँथ्सरमाप्त्वा। चन्द्रमसस्सायुज्यꣳ सलोकतामाप्नुयामिति। स
एतञ्चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालन्निरवपत्। ततो वै
सोऽहोरात्रानर्धमासान्मासानृतून् थ्संव्वँथ्सरमाप्त्वा। चन्द्रमसस्सायुज्यꣳ
सलोकतामाप्नोत्। अहोरात्रान् ह वा अर्धमासान्मासानृतून्
थ्संव्वँथ्सरमाप्त्वा। चन्द्रमसस्सायुज्यꣳ सलोकतामाप्नोति। य एतेन

हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति। चन्द्रमसे स्वाहा प्रतीदृश्यायै स्वाहा।
अहोरात्रेभ्यस्स्वाहाऽर्धमासेभ्यस्स्वाहा। मासेभ्यस्स्वाहर्तुभ्यस्स्वाहा। सव्वँथ्सराय
स्वाहेति।।57।।
310602
अहोरात्रे वा अकामयेताम्। अत्यहोरात्रे मुच्येवहि। न नावहोरात्रे
आप्नुयातामिति। ते एतमहोरात्राभ्याञ्चरुन्निरवपताम्।
द्वयानाँव्व्रीहीणाम्। शुक्लानाञ्च कृष्णानाञ्च।
सवात्योर्दुग्धे। श्वेतायै च कृष्णायै च। ततो वै ते अत्यहोरात्रे
अमुच्येते। नैने अहोरात्रे आप्नुताम्। अति ह वा अहोरात्रे मुच्यते।
नैनमहोरात्रे आप्नुतः। य एतेन हविषा यजते। य उ चैनदेवँव्वेद।
सोऽत्र जुहोति। अह्ने स्वाहा रात्रियै स्वाहा। अतिमुक्त्यै स्वाहेति ।।58।।
310603
उषा वा अकामयत। प्रियाऽऽदित्यस्य सुभगा स्यामिति। सैतमुषसे
चरुन्निरवपत्। ततो वै सा प्रियाऽऽदित्यस्य सुभगाऽभवत्। प्रियो ह वै
समानानाꣳ सुभगो भवति। य एतेन हविषा यजते। य उ चैनदेवँव्वेद।
सोऽत्र जुहोति। उषसे स्वाहा व्युष्ट्यै स्वाहा। व्यूषुष्यै
स्वाहा व्युच्छन्त्यै स्वाहा। व्युष्टायै स्वाहेति ।।59।।
310604
अथैतस्मै नक्षत्राय चरुनिर्वपति । यथा त्वन्देवानामसि।
एवमहं मनुष्याणां भूयासमिति। यथा ह वा
एतद्देवानाम्। एवꣳ ह वा एष मनुष्याणां भवति। य एतेन
हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति।
नक्षत्राय स्वाहोदेष्यते स्वाहा। उद्यते स्वाहोदिताय स्वाहा। हरसे स्वाहा
भरसे स्वाहा। भ्राजसे स्वाहा तेजसे स्वाहा। तपसे स्वाहा
ब्रह्मवर्चसाय स्वाहेति ।।60।।
310605
सूर्यो वा अकामयत। नक्षत्राणां प्रतिष्ठा स्यामिति।
स एतꣳ सूर्याय नक्षत्रेभ्यश्चरुन्निरवपत्। ततो वै स
नक्षत्राणां प्रतिष्ठाऽभवत्। प्रतिष्ठा ह वै समानानां भवति।
य एतेन हविषा यजते। य उ चैनदेवँव्वेद। सोऽत्र जुहोति।
सूर्याय स्वाहा नक्षत्रेभ्यस्स्वाहा। प्रतिष्ठायै स्वाहेति ।।61।।

310606

अथैतमदित्यै चरुन्निर्वपति। इयव्वाँ अदितिः। अस्यामेव

प्रतितिष्ठति। सोऽत्र जुहोति। अदित्यै स्वाहा प्रतिष्ठायै स्वाहेति ।।62।।

310607

अथैतँव्विष्णवे चरुन्निर्वपति। यज्ञो वै विष्णुः।

यज्ञ एवान्ततः प्रतितिष्ठति। सोऽत्र जुहोति। विष्णवे स्वाहा

यज्ञाय स्वाहा। प्रतिष्ठायै स्वाहेति ।।63।।

310600

चन्द्रमाः पञ्चदशाहोरात्रे सप्तदशोषा एकादशाथैतस्मै

नक्षत्राय त्रयोदश सूर्यो दशाथैतमदित्यै

पञ्चाथैतँव्विष्णवे षट्थ्सप्त ।।6।।

310000

सविताऽऽशूनाँव्व्रीहीणामिन्द्रो महाव्रीहीणामिन्द्रः

कृष्णानाँव्व्रीहीणामहोरात्रे द्वयानाँव्रीहीणाम्।

पितरष्षट्कपालं सविता द्वादशकपालमिन्द्राग्नी एकादशकपाल

मिन्द्र एकादशकपालमिन्द्रो दशकपालँव्विष्णुस्त्रिकपालमहि

र्भूमिकपालमश्विनौ द्विकपालञ्चन्द्रमाः पञ्चदशकपालमग्नि

स्त्वष्टा वसवोऽष्टाकपालमन्यत्र चरुम्।

रुद्रोऽर्यमा पूषा पशुमान्थ्स्याः सोमो रुद्रो

बृहस्पतिः पयसि वायुः पयस्सोमो वायुरिन्द्राग्नी मित्र

इन्द्र आपो ब्रह्म यमोऽभिजित्यै त्वष्टा प्रजापतिः

प्रजायै पौर्णमास्या अमावास्याया अगत्यै विश्वे जित्या

अश्विनौ श्रुत्यै।

ब्रह्म तदेतँव्विष्णुस्स एतव्वाँयुस्स एतदापस्ताः।

पितरो विश्वे वसवोऽकामयन्त मेति त एतन्निरवपन्।

आपोऽकामयन्त मेति ता एतन्निरवपन् ।

इन्द्राग्नी अश्विनावकामयेताँव्वेति तावेतन्निरवपताम्।

अहोरात्रे वा अकामयेतामिति ते एतन्निरवपताम्।

अन्यत्राकामयतेति स एतन्निरवपत्।

इन्द्राग्नी श्रैष्ठ्यमिन्द्रो ज्यैष्ठ्यमिन्द्रो दृढः।

अहिस्सूर्योऽदित्यै विष्णवे प्रतिष्ठायै।

सोमो॑ य॒मस्स॑म॒ानाना॑॑म्।
अ॒ग्निर्नो॑॑ रीरिषद॒न्यत्र॑ रीरिषः ।।
अ॒ग्निर्न॑॑ ऋ॒ध्यास्म॒ नवो॑नव॒ो ऽग्निर्मि॒त्रश्च॒न्द्रम॒ाष्षट् ।।6।।
अ॒ग्निर्न॒स्तन्नो॑ व॒ायुर॑हिर्बु॒ध्निय॑ ऋ॒रख्षा वा
इ॒यमथै॒तत्पौ॑॑र्णम॒ास्या अ॒जो वा एक॑प॒ाथ्सूर्य॒स्त्रिष॑ष्टिः ।।63।।
अ॒ग्निर्न॑॑ऽ पातु प्रति॒ष्ठायै॒ स्वाहेति॑।।
हरि॑ःओम्।। श्रीकृष्णार्पणमस्तु ।।
कृष्णयजुर्ब्राह्मणे-तृतीयाष्टके प्रथमप्रपाठकस्समाप्तः

320000

द्वितीयप्रपाठक प्रारम्भः हरिः ओम्।।

320101

तृ॒तीय॑स्यामि॒तो दि॒वि सोम॑ आसीत्। तङ्गा॑य॒त्र्याऽह॑रत्।

तस्य॑प॒र्णम॑च्छिद्यत। तत्प॒र्णो॑ऽभवत्। तत्प॒र्णस्य॑

प॒र्ण॒त्वम्। ब्रह्म॒ वै प॒र्णः। यत्प॑र्णशा॒खया॑ व॒थ्सान॑पाक॒रोति॑।

ब्रह्म॑णै॒वैना॑नपाक॑रोति। गा॒य॒त्रो वै प॒र्णः। गा॒य॒त्राः प॒शव॑ः ।।1।।

320102

तस्मा॒त्त्रीणि॑त्रीणि प॒र्णस्य॑ पला॒शानि॑।

त्रि॒पदा॑ गाय॒त्री। यत्प॑र्णशा॒खया॒ गाः प्रा॒र्पय॑ति।

स्वयै॒वैना॑ दे॒वत॑या॒ प्रार्प॑यति। यङ्का॒मये॑ताप॒शुस्स्या॒दिति॑।

अ॒प॒र्णान्तस्मै॒ शुष्का॑ग्रामाह॑रेत्। अ॒प॒शु॒रे॒व भ॑वति। यङ्का॒मये॑त

पशु॒मान् थ्स्या॒दिति॑। ब॒हु॒प॒र्णान्तस्मै॑ बहुशा॒खामाह॑रेत्।

प॒शु॒मन्त॑मे॒वैन॑ङ्करोति ।।2।

320103

यत्प्राची॑मा॒ हरे॑त्। दे॒व॒लो॒कम॒भि ज॑येत्।

यदुदी॑चीं मनुष्यलो॒कम्। प्राची॒मुदी॑ची॒माह॑रति।

उ॒भयो॑र्लो॒ऽकयो॑र॒भिजि॑त्यै। इ॒षेत्वो॒र्जेत्वे त्या॑ह।

इष॑मे॒वोर्ज॒य्यँज॑माने दधाति। वा॒यव॒स्स्थेत्या॑ह। वा॒युर्वा

अ॒न्तरि॑क्ष॒स्याध्य॑क्षाः। अ॒न्त॒रि॒क्ष॒दे॒व॒त्याः॑ खलु॒ वै प॒शव॑ः।।3।।

320104

वा॒यव॑ ए॒वैना॒न्परि॑ददाति। प्र वा ए॑नाने॒तदा॑क॑रोति। यदाह॑।

वा॒यव॒स्स्थेत्यु॑पा॒यव॒स्स्थेत्या॑ह। यज॑माना॒यै॒व प॒शूनुप॑ह्वयते।

दे॒वोव॑स्सवि॒ता प्रार्प॑य॒त्वित्या॑ह॒ प्रसू॑त्यै।

श्रेष्ठ॑तमाय॒ कर्म॑ण॒ इत्या॑ह। य॒ज्ञो हि श्रेष्ठ॑तम॒ङ्कर्म॑। तस्मा॑दे॒वमा॑ह।

आप्या॑यध्वमघ्निया देवभा॒गमित्या॑ह ।।4।।

320105

व॒थ्सेभ्य॑श्च॒ वा ए॒ताः पु॒रा म॑नु॒ष्येभ्य॒श्चाप्या॑यन्त।

दे॒वेभ्य॑ ए॒वैना॒ इन्द्रा॒याप्या॑ययति। ऊर्ज॑स्वतीः

पय॑स्व॒तीरित्या॑ह। ऊर्ज॒ँ हि पय॑स्स॒म्भर॑न्ति। प्र॒जाव॑तीरनमी॒वा

अ॑य॒क्ष्मा इत्या॑ह॒ प्रजा॑त्यै। मा व॑स्स्ते॒न ईश॑त॒ माऽघश॑ँस॒ इत्या॑ह॒ गुप्त्यै॑।

रुद्रस्य हेतिःपरि वो वृणक्त्वित्याह। रुद्रादेवैनास्त्रायते। ध्रुवा
अस्मिन्गोपतौ स्यात बह्वीरित्याह। ध्रुवा एवास्मिन्बह्वीःकरोति।।5।।
320106
यजमानस्य पशून्पाहीत्याह। पशूनाङ्गोपीथाय। तन्माथ्सायं
पशव उपसमावर्तन्ते। अनधस्सादयति। गर्भाणान्धृत्या
अप्रपादाय। तस्माद्गर्भाःप्रजानामप्रपादुकाः।
उपरीव निदधाति। उपरीव हि
सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै ।।6।।
320100
पशवःकरोति पशवो देवभागमित्याह करोति नव च ।।1।।
320201
देवस्यत्वासवितुःप्रसव इत्यश्वपर् शुमादत्ते
प्रसूत्यै।
अश्विनोर्बाहुभ्यामित्याह। अश्विनौहि देवानामध्वर्यू आसाम्।
पूष्णोहस्ताभ्यामित्याह यत्यै। योवा ओषधीःपर्व
शोवेद। नैनास्सहिनस्ति। प्रजापतिर्वा ओषधीःपर्वशोवेद। सऐनानहिनस्ति।
अश्वपर्श्वाबर् हिरच्छैति। प्राजापत्योवा अश्वस्सयोनित्वाय ।।7।।
320202
ओषधीनामहिꣳसायै। यज्ञस्यघेषदसीत्याह। यजमान एवरयन्दधाति।
प्रत्युष्टꣳ कख्षःप्रत्युष्टा
अरातय इत्याह। रख्षसामपहत्यै। प्रेयमगाद्धिषणा
बर् हिरच्छेत्याह। विद्यावै धिषणा। विद्ययैवैनदच्छैति।
मनुनाकृतास्वधयावितष्टेत्याह। मानवीहिपर् शुस्स्वधाकृता ।।8।।
320203
त आवहन्ति कवयःपुरस्तादित्याह। शुश्रुवाꣳ सोवैकवयः। य ज्ञःपुरस्तात्।
मुखत एव यज्ञमारभते। अथोयदेतदुक्त्वायतः कुतश्चा हरति।
त्तत्प्राच्याएव दिशोभवति। देवेभ्योजुष्टमिह बर् हिरासद इत्याह।
बरहिषस्समृत्थ्यै। कर्मणोऽनपराधाय। देवानां परिषूतमसीत्याह।।9।।
320204
यद्वा इदङ्किञ्च। तद्देवानां परिषूतम्। अथो यथावस्यसे
प्रतिप्रोच्याहेदङ्करिष्यामीति। एवमेव

तदध्वर्युर्देवेभ्यः प्रतिप्रोच्यबर्
हिर्दीति। आत्मनोऽहिंसायै। यावतस्सतम्बान्परि दिशेत्।
यत्तेषामुच्छिंष्यात्। अतितद्यज्ञस्य रेचयेत्। एक
स्तम्बंपरिदिशेत्। तं सर्वन्दायात् ।।10।।
320205
यज्ञस्यानतिरेकाय। वर् षवृद्धमसीत्याह। वर्
षवृद्धावा ओषधयः। देवबर् हिरित्याह। देवेभ्य
एवैनत्करोति। मात्वाऽन्वङ्मातिर्यगित्याहा हिंसायै। पर्वते
राध्यासमित्याहध्यै। आच्छेत्तातेमारिषमित्याह। नास्यात्मनोमीयते।
यएवँव्वेद ।।11।।
320206
देवबर् हिश्शतवल् शँव्विरोहेत्याह। प्रजावैबर् हिः।
प्रजानां प्रजननाय। सहस्रवल् शाविवयं रुहेमेत्याह।
आशिषमेवैतामाशास्ते। पृथिव्यास्संपृचः पाहीत्याह प्रतिष्ठित्यै।
अयुङ्गायु ङ्गान्मुष्टीलुँनोति। मिथुनत्वाय प्रजात्यै। सुसंभृता
त्वासंभरामीत्याह। ब्रह्मणैवैनथ्संभरति ।।12।।
320207
आदित्यैरास्नाऽसीत्याहा। इयव्वाँ अदितिः। अस्याएवैन द्रास्नाङ्करोति। इन्द्राण्यै
सन्नहनमित्याह। इन्द्राणीवा अग्रेदेवतानां समनह्यत। साऽऽर्ध्नोत्।
ऋद्ध्यैसन्नह्यति। प्रजावैबर् हिः। प्रजानामपरावापाय। तस्माथ्स्नावसन्तताः प्रजाजायन्ते ।।13।।
320208
पूषातेग्रन्थिङ्ग्र थ्नात्वित्याह। पुष्टिमेवयजमानेदधाति। सते
मास्थादित्याहाहिंसायै। पश्चात्प्राञ्च मुपगूहति। पश्चाद्वैप्राचीनं
रेतोधीयते। पश्चादेवास्मै प्राचीनं रोतोदधाति। इन्द्रस्यत्वा
बाहुभ्यामुद्यच्छ इत्याह। इन्द्रियमेव यजमानेदधाति।
बृहस्पतेर्मूर्ध्नाहरामीत्याह। ब्रह्मवैदेवानां ब्रहस्पतिः।।।14।।
320209
ब्रह्मणैवैनद्धरति। उर्वन्तरिख्षमन्विहीत्याहगत्यै।
देवङ्गममसीत्याह। देवानेवैनद्गमयति। अनधस्सादयति।
गर्भाणान्धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः।
उपरीवनिदधाति। उपरीवहि सुवर्गो लोकः। सुवर्गस्यलोकस्य समष्ट्यै।।15।।

320200
स॒यो॒नि॒त्वाय॑स्व॒धाकृ॑ता॒ऽसीत्या॑ह दाया॒द्वे दे॑भरति जायन्ते॒ बृ॒ह॒स्वति॒ स्समृ॑ष्ट्यै ।।2।।
320301
पू॒र्वे॒द्युरि॒ ध्माब॒र् हिं॑क॑रोति। य॒ज्ञमे॒वारभ्य॑ गृ॒हीत्वोप॑वसति।
प्र॒जाप॑तिर्य॒ज्ञ म॑सृजत। तस्यो॒खे अ॑स्रं॒ सेताम्। य॒ज्ञोवैप्र॒जाप॑तिः।
यथ्सा॑न्नाय्यो॒खेभव॑तः। य॒ज्ञस्यै॒वतदु॒ खेउप॑दधा॒त्य प्र॑स्रं॒साय।
शु॒न्धं॑ध्व॒न्दैव्या॑य॒कर्म॑णे देवय॒ज्याया॒ इत्या॑ह। दे॒व॒य॒ज्याया॑
ए॒वैना॑निशुन्धति। मा॒त॒रिश्व॑नो घ॒र्मो॑सीत्या॑ह ।।16।।
320302
अ॒न्तरि॑ख्षँ॒व्वै मा॑त॒रिश्व॑नो घ॒र्मः। ए॒षांल्लो॒कानाँ॒व्विधृ॑त्यै। द्यौरसि॑
पृथि॒व्य॑सीत्या॑ह। दि॒वश्च॒ ह्ये॑ता पृ॑थि॒व्याश्च॒ सुभृ॑ता। यदु॒खा। तस्मा॑दे॒वमा॑ह।
वि॒श्वधा॑या असिपर॒मेण॒धाम्नेत्या॑ह। वृष्टि॒र्वै वि॒श्वधा॑याः।
वृष्टि॑मे॒वाव॑रुन्धे। दृꣳह॑स्व॒माह्वारित्या॑ह॒धृत्यै॑ ।।17।।
320303
वसू॑नां प॒वित्र॑म॒सीत्या॑ह। प्रा॒णावैवस॑वः। तेषा॒व्वाँ ए॒तद्भा॑ग॒धेय॑म्।
यत्प॒वित्र॑म्। तेभ्य॑ ए॒वैन॑त्करोति। श॒तधा॑रꣳ स॒हस्र॑धार॒मित्या॑ह।
प्रा॒णेष्वे॒वायु॑र्दधाति सर्व॒त्वाय॑। त्रि॒वृत्प॑लाश श॒खाया॑न्दर्भ॒मयं॑ भवति।
त्रि॒वृदै॒प्राणः । त्रि॒वृत॑मे॒व प्रा॒णं म॑ध्य॒तो यज॑मानेदधाति ।।18।।
320304
सौ॑म्यꣳ पु॒र्णस्स॑यो नि॒त्वाय॑। सा॒ख्षात्प॒वित्र॑न्द॒र्भाः।
प्रा॒ख्सा॒यमधि॒निद॑धाति। त त्प्रा॑णापा॒नयो॑ रू॒पम्। ति॒र्यक्प्रा॒तः। तद्दर्
श॑स्यरू॒पम्। दा॒र्श्य ह्ये॑तदह॑ः। अन्नँ॑व्वैच॒न्द्रमा॑ः। अन्नं॑ प्रा॒णाः।
उ॒भय॑मे॒वो पै॑त्यजा॑मित्वाय ।।19।।
320305
तस्मा॑दु॒यꣳ स॒र्वत॑ꣳ पवते। हु॒तस्स्तो॒कोहु॒तोद्र॒प्स
इत्या॑ह॒ प्रति॑ष्ठित्यै। ह॒विषोस्क॑न्दाय। नहिहु॒तꣳ
स्वाहा॑कृत॒ꣳ स्कन्द॑ति। दि॒विना को॒नामा॒ग्निः। तस्य॑ वि॒प्रुषो॑ भाग॒धेय॑म्। अ॒ग्नये॑
बृ॒हते नाका॒येत्या॑ह। नाक॑मे॒वाग्निं भा॑ग॒धेये॑न॒समर्॑धयति। स्वाहा॒ द्यावा॑
पृथि॒वी भ्या॒मित्या॑ह। द्यावा॑ पृथि॒व्योरे॒ वैन॒त्प्रति॑ष्ठापयति।।20।।
320306
प॒वित्र॑व॒त्याऩ॑यति। अ॒पाञ्चैष॑धीनाञ्च॒रस॒ꣳ सꣳ
सृ॑जति। अथो॒ ओष॑धीष्वे॒व प॒शून्प्रति॑ष्ठापयति।

अन्वारभ्य वाचंय्यँच्छति। यज्ञस्य धृत्यै।
धारयन्नास्ते। धारयन्त इवहिदुहन्ति। कामंधुख्ष
इत्याहातृतीयस्यै। त्रयइमेलोकाः। इमानेवलोका न्
यजमानोदुहे ।।21।।
320307
अमूमितिनामगृह्णाति। भद्रमवासाङ्कर्मा विष्कंरोति। साविश्वा युस्सा
विश्विव्यंचास्साविश्वकर्मेत्याह। इयँव्वैविश्वायुः।
अन्तरिंख्षँव्विश्वव्यचाः। असौ विश्वकर्मा। इमानेवैताभिर्लोकान्
यथापूर्वन्दुहे। अथो यथाँप्रदात्रे पुण्यमाशास्तै। एवमेवैना
एतदुपस्तौति। तस्मात्प्रा दादित्युन्नीय वन्दमाना उपस्तुवन्त
पशून्दुहन्ति ।।22।।
320308
बहुदुग्धीन्द्रायदेवेभ्यो हविरिति वाचँव्विसृंजते।
यथादेवतमेव प्रसौति। दैव्यस्यच मानुषस्यच व्यावृत्यै। त्रिराह।
त्रिषत्याहिदेवाः। अवाचय्यँमोऽनन्वारभ्योत्तराः।
अपरिमितमेवावरुन्धे। नदारुपात्रेणदुह्यात्। अग्निवद्वै दारुपात्रम्।
यद्दारुपात्रेण दुह्यत्।।23।।
320309
यातयाँम्ना हविषायजेत। अथोखल्वाहुः। पुरोडाशमुखानिवैहवीꣳषि। नेतईतः पुरोडाशꣳ
हविषोयामोऽस्तीति। काममेव दारुपात्रेण दुह्यात्। शुद्रएवनदुह्यात्।
असतोवा एष संभूतः। यच्छूद्रः। अहाविरेवतदित्याहुः। यच्छुद्रो दोग्धीति ।।24।।
320310
अग्निहोत्रमेव नदुह्यच्छूद्र। तद्धिनोत्पुनन्ति। यदाखलुवै पवित्रमत्येति। अथतद्धविरिति।
सुपृच्यध्वमृतावरीरीत्याह। अपाञ्चै वौषधीनाञ्चरसꣳ सꣳ सृजति। तस्मादपाञ्चषदीनाञ्च
रसमुपजीवामः। मन्द्राधनस्य सातय इत्याह। पुष्टिमेव यजमाने
दधाति। सोमेनत्वातनच्मीन्द्राय दधीत्याह ।।25।।
320311
सोम मेवैनन्त्करोति। योवै सोमं भखयित्वा। सव्वँथ्सरꣳसोमन्नपिबति।
पुनर्भखसोंस्य सोमपिथो भवति। सोमखलुवैसाँन्नाय्यम्। य एवँव्विद्वान्
थ्साँन्नाय्यं पिबति। अपुनर्भख्योस्य सामपीथोभवति। न
मृन्मयेनापिदध्यात्। यन्मृन्मयोनापिदध्यात्। पितृदेवत्यं स्यात्।।26।।

320312

अ॒य॒ष्पा॒त्रेण॑वा दारुपा॒त्रेण॒वाऽपि॑दधाति। तद्धिसदे॑वम्।

उ॒द॒न्वद्भ॑वति। अपो॒वै र॑ख्खो॒घ्नीः। रख्ख॑सा॒मप॑हत्यै। अद॑स्तमसि॒ विष्ण॑नेत्वे॒त्या॑ह।

य॒ज्ञोवैविष्णुः। य॒ज्ञायै॒वैन॒दद॑स्तङ्करोति। विष्णो॑ह॒व्यꣳ र॑ख्ख॒स्वेत्या॑ह॒गुप्त्यै॑।

अन॑धस्सादयति। गर्भा॑णा॒न्धृत्या॒ अप्र॑पादाय। तस्मा॒द्गर्भा॑ꣳप्र॒जाना॒म प्र॑पादुकाः ।

उ॒परी॑व॒निद॑धाति। उ॒परी॑व॒हि सु॑व॒र्गोल॒ोकः। सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै ।।27।।

320300

अ॒सीत्या॑ह॒धृत्यै॒ यज॑मानेदधा॒त्यजा॑मित्वाय स्थापयति दुहेदुहन्ति

दु॒ह्याद्दोग्धीति॒दधीत्या॑ह स्याथ्सा दयति॒ पञ्च॑च ।।3।।

320401

कर्म॑ णेवान्दे॒वेभ्य॑श्शकेय॒मित्या॑ह॒शक्त्यै॑। य॒ज्ञस्य॒वैसन्त॑ति॒मनु॑

प्र॒जाꣳप॒शवो॒ यज॑मानस्य॒ सन्ता॑यन्ते। य॒ज्ञस्य॒ विच्छि॑त्ति॒मनु॒प्र॒जाꣳप॒शवो॒

यज॑मानस्य॒ विच्छि॑द्यन्ते। य॒ज्ञस्य॒ सन्त॑ तिरसि य॒ज्ञस्य॑त्वा॒ स न्त॑त्यैस्तृणामि॒

सन्त॑त्यै त्वाय॒ज्ञस्येत्याह॑व॒नीया॒थ्सन्त॑नोति। यज॑मानस्य

प्र॒जायै॑पशूनाꣳ सन्त॑त्यै। अ॒पꣳप्रण॑यति। श्र॒द्धावाअप॑ः।

श्र॒द्धामे॒वारभ्य॑प्र॒णीय॒ प्रच॑रति। अ॒पꣳप्रण॑यति। य॒ज्ञोवाआप॑ः।।28।।

320402

य॒ज्ञमे॒वार भ्य॑ प्र॒णीय॒ प्रच॑रति। अ॒पꣳप्रण॑यति।

वज्रो॒वाआप॑ः। वज्र॑मे॒व भ्रातृ॑व्येभ्यꣳप्र॒ हृत्य॑प्र॒णीय॒

प्रच॑रति। अ॒पꣳप्रण॑यति आपो॒वैर॑ख्खो॒ख्नीः।रख्ख॑सा॒मप॑हत्यै। अ॒पꣳप्रण॑यति।

आपो॒वैदे॒वानां॑ प्रि॒यन्धाम॑। दे॒वाना॑मे॒व प्रि॒यन्धाम॑ प्र॒णीय॒ प्रच॑रति ।।29।।

320403

अ॒पꣳ प्रण॑यति। आपो॒वै सर्वा॑दे॒वता॑ः। दे॒वता॑ए॒वारभ्य॑प्र॒णीय॒

प्रच॑रति। वेषा॑य॒त्वेत्या॑ह। वेषा॑य॒ह्येन॑दादु॒त्ते।

प्रत्यु॑ष्ट॒ꣳरख्ष॒ꣳप्रत्यु॑ष्टा अरा॑तय॒इत्या॑ह।

रख्ख॑सा॒मप॑हत्यै। धूर॒सीत्या॑ह। ए॒षवैधु॒र्यो॑ऽग्निः।

तय्यँ॑दनु॒पस्पृ॒श्याती॒यात् ।।30।।

320404

अ॒ध्व॒र्युञ्च॒ यज॑मानञ्च॒ प्रद॑हेत्। उ॒प॒स्पृश्यात्ये॑ति। अ॒ध्व॒र्योश्च॒ यज॑मानस्य॒

चाप्र॑दाहाय। धूर्व॒तँय्यो॑ऽस्मान्धूर्वति॒ तन्धू॑र्व॒यव्वँ॒यन्धूर्वा॑म॒ इत्या॑ह। द्वौवाव पुरु॑षौ।

यञ्चै॒वधूर्व॑ति। यश्चै॒न॒न्धूर्व॑ति। तावु॒भौशु॒चाऽर्प॑यति।

त्वन्दे॒वाना॑मसि॒सस्नि॑तमं॒ पप्रि॑तम॒ञ्जुष्ट॑तमं॒

वह्नि॑मन्देव॒हूत॑म॒मित्या॑ह। य॒था॒य॒जु॒रे॒वैतत् ।।31।।

320405

अह्रु॑तमसि हवि॒र्धान॒ मित्या॒हाना॑र्त्यै। दृꣳह॑स्व॒ माह्वा॒रित्या॑ह॒धृत्यै॑। मि॒त्रस्य॑त्वा॒

चख्षु॑षा॒ प्रेख्ष॒इत्या॑ह मित्र॒त्वाय॑। माभेर्मासँव्वि॑क्था॒मात्वा॑हिꣳसिष॒

मित्या॒हाहिꣳ॑ सायै। यद्वैकिञ्च॒वाता॒नाभि॒वाति॑। तथ्सर्वँ॑व्वँरुणदेव॒त्य॑म्।

उ॒रुवाता॒येत्या॑ह। अवा॑रुणमे॒ वैन॑त्करोति। दे॒वस्य॑त्वासवि॒तुः प्र॑स॒व

इत्या॑ह॒प्रसू॑त्यै। अ॒श्विनो॑ र्बा॒हुभ्या॒मित्या॑ह।।32।।

320406

अ॒श्विनौ॒हि दे॒वाना॑मध्व॒र्यू अस्ता॑म्।

पू॒ष्णोहस्ता॑भ्या॒मित्या॑ह॒यत्यै॑।अ॒ग्नये॒जुष्ट॒न्निर्व

॒पामीत्या॑ह। अ॒ग्नय॑ ए॒वैना॒ञ्जुष्ट॒न्निर्व॑पति।

त्रिर्य॑जु॑षा। त्रय॑इ॒मेल॒ोकाः।

ए॒षाँल्लोका॒ना॒माप्त्यै॑।तू॒ष्णीञ्च॑तु॒र्थम्।अप॑रिमितमे

॒वाव॑रुन्धे। स ए॒वम॒वानु॑ पूर्वꣳ ह॒वीꣳषि॒ निर्व॑पति।।33।।

320407

इ॒दन्दे॒वाना॑मि॒दमु॑ नस्स॒हेत्या॑ह॒व्यावृ॑त्यै। स्फा॒त्यैत्वा॒नारा॑त्या॒

इत्या॑ह॒ गुप्त्यै॑। तम॑सीव॒वा ए॒षो॑ऽन्तश्च॑रति। यः प॑री॒णहि॑। सुव॑र॒भि

विख्येषँ॑व्वैश्वान॒रञ्ज्योति॒रित्या॑ह। सुव॑रे॒वाभिविप॑श्यति वैश्वान॒रञ्ज्योति॑ः। द्यावा॑पृथि॒वी

ह॒विषि॑ गृह॒ीत उद॑वेपेतम्। दृꣳह॑न्ता॒न्दुर्या॒ द्यावा॑पृथि॒व्योरित्या॑ह।

गृ॒हाणा॒न्द्यावा॑पृथि॒व्योर्धृत्यै॑। उ॒र्व॑न्तरि॑ख्ष॒मन्वि॒हीत्या॑ह॒ गत्यै॑।

अदि॑त्यास्त्वोपस्थे॑सादय॒ामीत्या॑ह। इ॒यव्वाँ॑ अदि॑तिः। अ॒स्या ए॒वैन॑ दु॒पस्थे॑

सादयति। अग्ने॑ह॒व्यꣳ र॑ख्ष॒स्वेत्या॑ह॒ गुप्त्यै॑।।34।।

320400

य॒ज्ञो वाआपो॒धाम॑प्र॒णीय॒ प्रच॑रत्यती॒या दे॒तद्वा॒हुभ्या॒मित्या॑ह ह॒वीꣳषि॒

निर्व॑पति॒गत्यै॑च॒त्वारि॑च।।4।।

320501

इन्द्रो॑ वृ॒त्रम॑हन्। सो॑पः। अ॒भ्य॑म्रियत। तासा॒य्यँन्मेध्य॑य्यँ॒ज्ञियꣳ॒

सदे॑व॒मासी॑त्। तदपोद॑क्रा मत्। तेद॒र्भा अ॑भवन्। यद्द॒र्भैर॒प

उत्पु॑नाति। याए॒व मेध्या॑ य॒ज्ञि या॒स्सदे॑वा॒ आपः। ताभि॑रे॒वैना॒

उत्पु॑नाति। द्वाभ्या॒मुत्पु॑नाति।।35।।

320502

द्विपाद्यज॑मान॒ᳲ प्रति॑ष्ठित्यै। दे॒वोव॑स्सवि॒तोत्पु॑ना॒त्वित्या॑ह।

स॒वि॒तृप्र॑सूतए॒वैना॒ उत्पु॑नाति। अच्छि॑द्रेण प॒वित्रे॒णेत्या॑ह। अ॒सौवा

आ॑दि॒त्योच्छि॑द्रंप॒वित्र॑म्। तेनै॒वैना॒

उत्पु॑नाति। वसो॒स्सूर्य॑स्यर॒श्मि भि॒रित्या॑ह। प्रा॒णावा आप॑ः।

प्रा॒णावस॑वः। प्रा॒णार॒श्मय॑ः।।36।।

320503

प्रा॒णै रे॒व प्रा॒णा न्थ्सं पृ॑णक्ति। सा॒वि॒त्रि॒यर्चा॑। स॒वि॒तृप्र॑सूतं मे॒ कर्मा॑स॒दिति॑।

स॒वि॒तृप्र॑सूतमे॒वास्य॒ कर्म॑भवति। पु॒च्छोगा॑यत्रि॒यात्रि॒ष्षमृद्धत्वाय॑।

आपो॑देवीरग्रेपुवो अग्रेगुव॒ इत्या॑ह। रू॒पमे॒वसा॑मे॒तन्म॑हि॒माने॑व्याच॑ष्टे।

अग्र॑इ॒मं य॒ज्ञंन॑य॒ ताग्रे॑ य॒ज्ञप॑ति॒मित्या॑ह। अग्र॑ए॒वय॒ज्ञंन॑यन्ति।

अग्रे॑य॒ज्ञप॑तिम्।।37।।

320504

यु॒ष्मानिन्द्रो॑ऽवृणीत वृ॒त्रतू॑र्ये यू॒यमिन्द्र॑मवृणीध्वं वृ॒त्रतू॑र्य॒

इत्या॑ह। वृ॒त्रꣳ ह॑हनि॒ष्यन्निन्द्र॒ आपो॑वव्रे। आपो॒हेन्द्र॑ं वव्रिरे।

सं॒ज्ञामे॒वासा॑मे॒तथ्सामा॑न॒ं व्याच॑ष्टे। प्रोक्षि॑ता॒स्थ्सेत्या॑ह।

तेनाप॒ᳲप्रोक्षि॑ताः। अ॒ग्नये॑वो॒जुष्टं॒ प्रोक्ष्या॑म्य॒ग्नीषोमा॑भ्या॒मित्या॑ह।

य॒था॒दे॒वतमे॒वैना॒न्प्रोक्ष॑ति। त्रिᳲप्रोक्ष॑ति। त्र्या॑वृ॒द्धिय॒ज्ञः।।38।।

320505

अथो॒रक्ष॑सा॒मप॑हत्यै। शुन्ध॑ध्व॒ं दैव्या॑य॒कर्म॑णे देवय॒ज्याया॒इत्या॑ह।

दे॒व॒य॒ज्याया॑ ए॒वैना॑नि शुन्धति। त्रिᳲप्रोक्ष॑ति। त्र्या॑वृ॒द्धिय॒ज्ञः।

अथो॑मेध्य॒त्वाय॑। अव॑धूत॒ꣳ रक्षोऽव॑धूता॒ आरा॑तय॒ इत्या॑ह। रख्ष॑सा॒मप॑हत्यै।

आदि॑त्या॒स्त्वग॒सीत्या॑ह। इ॒यव्वाँ अदि॑तिः।।39।।

320506

अ॒स्याए॒वैन॒त्त्वच॑ङ्करोति। प्रति॑त्वापृथि॒वी वे॒त्त्वित्या॑ह॒

प्रति॑ष्ठित्यै। पु॒रस्ता॑त्प्रती॒चीन॑ग्रीव॒मुत्त॑रल॒ोमोप॑स्तृणाति

मेध्य॒त्वाय॑। तस्मा॑त्पु॒रस्ता॑त्प्र॒त्यञ्च॒ᳲ प॒शवो॒ मेध॒मुप॑

तिष्ठन्ते। तस्मा॑त्प्र॒जामृ॒गं ग्राहु॑काः। य॒ज्ञोदे॒वेभ्यो॒ निला॑यत। कृ॒ष्णो॑रू॒पं

कृ॒त्वा। यत्कृ॑ष्णाजि॒ने ह॒विर॑ध्यव॒हन्ति॑। य॒ज्ञादे॒व तद्य॒ज्ञं प्रयु॑ङ्क्ते।

ह॒विषोऽस्क॑न्दाय।।40।।

320507

अ॒धि॒षव॑णमसि वान्स्प॒त्यमित्या॑ह। अ॒धि॒षव॑णमे॒वैनं॑त्करोति।
प्रति॒त्वाऽदि॑त्या॒स्त्वग्वे॒त्त्वित्या॑ह सय॒त्वाय॑। अ॒ग्नेस्त॒नू॒रसीत्या॑ह।
अ॒ग्नेर्वाए॒षात॒नूः। यदोष॑धयः। वा॒चोवि॒सर्जं॑न॒मित्या॑ह। य॒दाहिप्र॒जा
ओष॑धीनाम॒श्नन्ति॑। अथ॒वाचं॒ विसृ॒जन्ते। दे॒ववी॑तयेत्वा गृह्णामीत्या॑ह।।41।।
320508
दे॒वता॑भिरे॒वैन॒थ्सम॑र्थयति। अद्रि॑रसि वानस्प॒त्य इत्या॑ह।
ग्रावा॑णमे॒वैनं॑त्करोति। स इ॒दं दे॒वेभ्यो॑ ह॒व्यꣳ सु॒शमि॑शमि॒ष्वेत्या॑ह॒
शान्त्यै॑। हविष्कृ॒देहीत्या॑ह। यए॒वदे॒वानाꣳ॑ ह॒वि॒ष्कृतः॑। तान्ह्व॑यति।
त्रिर्ह्व॑यति। त्रिष॑त्या॒हिदे॒वाः । इष॒मावदोर्ज॒माव॒देत्या॑ह।।42।।
320509
इष॑मे॒वोर्जं॒ यज॑मानेदधाति। द्यु॒मद्व॑दतव॒यꣳ संघा॑तं
जे॒ष्मेत्या॑ह॒ भ्रातृ॑व्याभीभूत्यै। मनो॑श्र॒ ह्वादे॑वस्य॒ यज॑मानस्य
सु॒र॒घ्नी वाक्। य॒ज्ञायु॒धेषु॒ प्रवि॑ष्टाऽऽसीत्। तेसु॑रा॒ याव॑न्तो
यज्ञायु॒धाना॑मु॒द्वद॑तामु॒पाशृ॑ण्वन्। ते परा॑भवन्। तस्मा॒थ्स्वाना॒ं
मध्ये॑ऽव॒साय॑ यजेत। याव॑न्तोस्य॒ भ्रातृ॑व्यायज्ञायु॒धाना॑मु॒द्वद॑ता
मुपशृ॒ण्वन्ति॑। तेपरा॑भवन्ति। उ॒च्चैस्स॒माह॑न्त॒वा आ॑ह॒ विजि॑त्यै ।।43।।
320510
नृ॒ङ्क्ष ए॑षामिन्द्रि॒ यँव्वी॒र्य॑म्। श्रेष्ठ॑ एषांभवति।
व॒र्ष॒वृद्ध॑मसि॒ प्रति॑ त्वा व॒र्ष॒वृ॑द्धँव्वे॒त्त्वित्या॑ह। व॒र्ष॒वृ॑द्धावा
ओष॑धयः। न॒र्ष॒वृद्धा॑इषीका॒स्सम॑ृद्ध्यै। य॒ज्ञिꣳ रख्ष॒ꣳस्यनु॒प्रावि॑शन् ।
तान्य॒स्म्रापशु॒भ्यो॑ नि॒रवा॑दयन्त । तु॒षै॒रोष॑धीभ्यः ।
परा॑पूतꣳ॒ रख्ष॒ꣳपरा॑पूता॒ अरा॑तय॒ इत्य॑ह । रख्षा॑सा॒मप॑हत्यै ।।44।।
320511
रख्ष॑सां भा॒गो॑सीत्या॑ह। तुषै॑रे॒व रख्षाꣳ॑सि नी॒रव॑दयते। अ॒प उप॑स्पृति मेध्य॒त्वाय॑। वा॒युर्वो॑
विनि॑न॒क्त्वित्या॑ह। प॒वित्रँ॑व्वैवा॒युः। पु॒नात्ये॒वैनान्।
अ॒न्तरि॑ख्षादिव॒वा ए॒तेप्रस्क॑न्दन्ति। येशूर्पा॑त्। दे॒वो व॑स्सवि॒ता हिर॑ण्यपाणि॒ꣳ
प्रति॑गृह्णात्वित्या॑ह॒प्रति॑ष्ठित्यै। ह॒विषोऽस्क॑न्दाय। त्रिष्फ॒लीक॑र्त॒ वाआ॑ह।
त्र्या॑वृ॒द्धिय॒ज्ञः। अथो॑मेध्य॒त्वाय॑ ।।45।।
320500
द्वाभ्या॒मुत्पु॑नाति र॒श्मयो॑ नय॒न्त्यग्रे॑ य॒ज्ञप॑तिय्यँ॒ज्ञोऽदि॑ति॒रस्क॑न्दाय
गृह्णामीत्या॑ह व॒देत्या॑ह॒ विजि॑त्याअप॑हत्या अस्क॑न्दाय॒त्रीणि॑च ।।5।।

320601
अवधूतꣳरक्षोऽवधूता अरातय इत्याह। रक्षसामपहत्यै।
अदित्यास्त्वगसीत्याह। इयव्वाँ अदितिः। अस्याएवैनत्त्वचङ्करोति।
प्रतित्वापृथिवी वेत्त्वित्याह प्रतिष्ठित्यै। पुरस्ताँत्प्रतीचीन ग्रीवमुत्तर लोमोपस्तृणाति
मेध्यत्वाय। तस्माँत्पुरस्ताँत्प्रत्यञ्चꣳपशवो मेधमुप
तिष्ठन्ते। तस्माँत्प्रजामृगं ग्राहुकाः। यज्ञोदेवेभ्यो निलायत ।।46।।
320602
कृष्णोरूपंकृत्वा। यत्कृष्णाजिने हविरधिपिनष्टि। यज्ञादेवतद्यज्ञं प्रयुङ्क्ते।
हविषोऽस्कन्दाय। द्यावापृथिवी सहास्ताँम्। तेशम्यामात्रमेक
महव्यैताꣳशम्यामात्रमेकमहः। दिवस्स्कम्भनिरसि
प्रतित्वाऽदित्वस्त्वग्वेत्त्वित्याह । द्ववापृथिव्योर्वीत्यै ।
धिषणाऽसिपर्वत्या प्रतित्वादिवस्स्कम्भनिर्वेत्त्वित्याह।
द्यावापृथिव्योर्विधृत्यै। ।।47।।
320603
धिषणाऽसिपार्वतेयी प्रतित्वापर्वतिर्वेत्त्वित्याह। द्यावावृथिव्योर्धृत्यै।
देवस्यत्वा सवितुꣳ प्रसव इत्याह प्रसूँत्यै। अश्विनोँर्बाहुभ्यामित्याह।
अश्विनौहिदेवानामध्वर्यूआस्ताँम्। पूष्णोहस्ताँभ्यामित्याह यत्त्यै।
अधिवपामीत्याह। यथादेवतमेवैनानधिवपति।
धान्यमसिधिनुहिदेवानित्याह। एतस्ययजुषोवीर्येण ।।48।।
320604
यावदेकादेवताकामयते यावदेकाँ। तावदाहुतिꣳप्रथते। नहितदस्ति। यत्तावदेवस्यात्।
यावज्जुहोति। प्राणायत्वाऽपानायत्वेत्याह। प्राणानेवयजमाने दधाति। दीर्घामनु
प्रसितिमायुषेधा मित्याह। आयुरे वास्मिन्दधाति। अन्तरिक्षादिववा एतानि
प्रस्कन्दन्ति। यानिदृषदः। देवो वस्सविता हिरण्यपाणिꣳ
प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै। हविषोऽस्कन्दाय।
असंवपन्तीपिꣳषाणूनिकुरुतादित्याहमेध्यत्वाय ।।49।।
320600
निलायत विधृत्यैवीर्येण स्कन्दन्ति चत्वारि च ।।6।।
320701
धृष्टिरसि ब्रह्मयच्छेत्याहधृत्यै। अपाँग्रेऽग्निमामादंजहिनिष्क्रव्यादꣳ
सेधादेवयजं वहेत्याह। यएवामात्क्रव्यात्। तमपहत्य। मेध्येऽग्नौ

क॒पा॒लमुप॑दधाति। निर्द॑ग्ध॒ꣳ॒ रक्षो॒निर्द॑ग्धा॒ अरा॑तय॒ इत्या॑ह। रक्षा॑ स्ये॒व
निर्द॑हति। अ॒ग्नि॒वत्युप॑दधाति। अ॒स्मिन्ने॒वलो॒केज्योति॑र्धत्ते।
अङ्गा॑र॒मधि॑वर्तयति।।50।।
320702
अ॒न्तरि॑क्ष ए॒वज्योति॑र्धत्ते। आ॒दि॒त्यमे॒वामुष्मि॑ल्लोँके
ज्योति॑र्डधत्ते। ज्योति॑ष्मन्तोस्मा इ॒मेलो॒का भ॑वन्ति। यए॒वंवेद॑। ध्रु॒वम॑सि
पृथि॒वीं दृ॒ꣳ॒हेत्या॑ह। पृ॒थि॒वीमे॒वैतेन॑ दृꣳहति। ध॒र्त्रम॑स्य॒न्तरि॑क्षंदृ॒ꣳ॒हेत्या॑ह।
अ॒न्तरि॑क्षमे॒वै तेन॑ दृꣳहति। ध॒रुण॑मसि॒दिवं॑ दृ॒ꣳ॒हेत्या॑ह। दिव॑मे॒वै तेन॑ दृꣳहेत्याह। ।।51।।
320703
धर्मा॑सि॒दिशो॑दृ॒ꣳ॒हेत्या॑ह। दिश॑ए॒वैतेन॑ गृꣳहति।
इ॒माने॒वैतैर्लो॒कान्दृꣳ॑हति। दृꣳह॑न्तेऽन्माइ॒मेलो॒काः॒
प्र॒जया॑प॒शुभिः॑। य ए॒वंवेद॑। त्रीण्यग्रे॑ क॒पाला॒न्युप॑दधाति।
त्रय॑इ॒मेलो॒काः। ए॒षांलो॒काना॒ माप्त्यैँ॑। एक॒मग्रे॑क॒पाल॒मुप॑दधाति। एकं॒वा
अग्रे॑क॒पालं॒पुरु॑षस्यसं॒भव॑ति।।52।।
320704
अथ॒द्वे। अध॒त्रीणि॑। अथ॑च॒त्वारि॑। अथा॒ष्टौ। तस्मा॑दुष्टाक॑वालं॒
पुरु॑षस्य॒शिरः॑। यदे॒वं क॒पाला॑न्युप॒दधा॑ति। य॒ज्ञोवैप्र॒जाप॑तिः।
य॒ज्ञमे॒वप्र॒जाप॑ति॒ꣳ॒ सस्क॑रोति। आ॒त्मान॑मे॒वतथ्सꣳस्क॑रोति।
तꣳसस्कृ॑तमा॒त्मान॑म् ।।53।।
320705
अ॒मुष्मि॑ल्लोँकेऽनु॒परै॑ति। यद॒ष्टावु॒प॒दधा॑ति।
गा॒य॒त्रि॒या तथ्संमि॑तम्। यन्नव॑। त्रि॒वृ॒ता॒तत्। यद्दश॑। वि॒राजा॒तत्।
यदेका॑दश। त्रि॒ष्टुभा॒तत्। यद्द्वाद॑श ।।54।।
320706
जग॑त्या॒तत्। छन्द॑स्संमितानि॒स उ॑प॒दध॑त्क॒पाला॑नि। इ॒माँल्लोकान॑नुपू॒र्वन्दिशो॒
विधृ॑त्यै दृꣳहति। अथायुः॒ प्रा॒णान्प्र॒जांप॒शून् यज॑मानेदधाति। स॒जा॒ताना॑स्मा
अ॒भितो॑ बहु॒लान्क॑रोति। चित॒स्थ्सेत्या॑ह। य॒था॒य॒जुरे॒वैतत्।
भृगू॑णा॒मङ्गि॑रसा॒न्तप॑सा तप्यथ्व॒त्या॑ह। दे॒वता॑नामे॒वैना॑नि॒ तप॑सा
तपति। तानि॒ तत॒स्सस्थि॑ते। यानि॑घ॒र्मेक॒पाला॑न्युपचि॒न्वन्ति॑वे॒धस॒ इति॒
चतु॑ष्वदय॒र्चावि॑मूञ्चति। चतु॑ष्वादः॒प॒शवः॑। प॒शुष्वे॒वोपरि॑ष्ट्रात्प्रति॑तिष्ठति ।।55।।
320700

वर्तयति दिवमेवैतेन दृꣳहति सम्भवति तꣳ स स्कृतमात्मानन्द्वादश
सस्थिते त्रीणिच ।।7।।
320801
देवस्यत्वा सवितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह।
अश्विनौहिदेवानामध्वर्यू आस्ताम्। पूष्णोहस्ताभ्यामित्याह यत्यै।
सँव्विपामीत्याह। यथादेवतमेवैनानि सँव्वपति। समापो
अद्भिरग्मतसमोषधयो रसेनेत्याह। आपोवा
ओषधीर्जिन्वन्ति । ओषधयोपोजिन्वन्ति ।
अन्यावा एतासा मन्याजिन्वन्ति ।।56।।
320802
तस्मा देवमाह। सꣳ रेवतीर्जगतीभीर्मधु मतीर्मधु
मतीभिस्सृज्यध्वमित्याह। आपोवैरेवतीः। पशवो जगतीः।
ओषधयो मधुमतीः। आपओषधीःपशून्।तानेवास्मा
एकधासꣳसृज्य। मधुमतःकरोति।
अद्भ्यःपरिप्रजातास्थ्ससमद्भिःपृच्यध्वमिति
पर्याप्लावयति। यथासु वृष्टइमामनुविसृत्य ।।57।।
320803
आपओषधीर्महयन्ति। तादृगेवतत्। जनयत्यैत्वा संयौमीत्याह। प्रजाएवै
तेनदाधार। अग्नयेत्वाऽग्नीषोमाभ्यामित्याह व्यावृत्यै।
मखस्यशिरोसीत्याह। यज्ञोवैमखः। तस्यैतच्छिरः। यत्पुरोडाशः।
तस्मादेवमाह ।।58।।
320804
घर्मोसिविश्वायु रित्याह। विश्वमेवायुर्यजमाने दधाति।
उरुप्रथस्वोरुते यज्ञपतिः प्रथतामित्याह।
यजमानमेवप्रजयापशुभिःप्रथयति।
त्वचंगृङ्णीष्येत्याह।
सर्वमेवैनꣳ सतनुंकरोति। अथाप आनीय परिमार्ष्टि।
माꣳसएवतत्त्वचंदधाति। तस्मात्त्वचामाꣳ
संछन्नम्। घर्मोवाएषोशान्तः।।।59।।
320805
अर्धमासेऽर्धमासे प्रवृज्यते। यत्पुरोडाशः। सईश्वरोयजमानꣳ

शु॒चाप्र॒दह॑ः। पर्य॑ग्निकरोति। प॒शु॒मे॒वैन॑मकः। शान्त्य॒ाअप्र॑दाहाय।
त्रि॒ꣳपर्य॑ग्नि करोति। त्र्या॑वृ॒द्धियज्ञः। अथो॒रक्ष॑सा॒मप॑हत्यै।
अ॒न्तरि॑त॒ꣳरक्षो॒ऽन्तरि॑ता॒ अरा॑तय॒ इत्या॑ह ।।60।।
320806
रक्ष॑सामन्तर्॒ हि॑त्यै। पु॒रो॒डाशं॒वा अधि॑श्रित॒ꣳ रक्षाꣳ॑स्यजिघाꣳसन्।
दि॒विनाको॒नामा॒ग्नीर॑क्षो॒हा। सए॒वास्मा॒द्रक्षाꣳ॒स्यपा॑हन्। दे॒वस्त्वा॑सवि॒ता
श्र॑पय॒त्वित्या॑ह। स॒वि॒तृप्र॑सूत ए॒वैन॑ श्रपयति। वर्॒ षि॑ष्ठे॒ अधि॒नाक॒ इत्या॑ह।
रक्ष॑सा॒मप॑हत्यै। अ॒ग्निस्तेत॒नुवं॒ माऽति॑धा॒गित्या॒हान॑तिदाहाय।
अग्ने॑ह॒व्यꣳ र॑क्ष॒स्वेत्या॑हगुप्त्यै॑ ।।61।।
320807
अवि॑दहन्तश्रपय॒तेति॒वाचं॒ विसृ॑जते। य॒ज्ञमे॒व
ह॒वीꣳष्य॑भिव्या॒हत्य॒प्रत॑नुते। पु॒रो॒रुच॒मवि॑दाहाय॒ श्रुत्यै॑करोति।
म॒स्तिष्क॒ोवै पु॑रो॒डाश॑ः। त य्यँन्नाभि॑वा॒सये॑॑त्। आवि॑र्म॒स्तिष्क॑स्स्यात्।
अ॒भिवा॑सयति। तस्मा॒द्गुहा॑म॒स्तिष्क॑ः। भस्म॑ना॒ऽभि
वा॑सयति। तस्मा॑न्मा॒ꣳ सेनास्थि॑छ॒न्नम्।।62।।
320808
वे॒देना॒भिवा॑सयति। तस्मा॒त्केशै॒श्शिर॑श्छ॒न्नम्।
अखा॑लतिभावुकोभवति। यए॒वंव्वेद॑। प॒शोर्वै प्र॑ति॒मा पु॑रो॒डाश॑ः।
सनाय॒जुष्क॑ मभि॒वास्य॑ः। वृथै॑वस्यात्। ई॒श्व॒रा यज॑मानस्य प॒शव॒ꣳ
प्रमे॑तोः। संब्रह्म॑णापृच्य॒स्वेत्या॑ह। प्रा॒णावै ब्रह्म॑ ।।63।।
320809
प्रा॒णाꣳप॒शव॑ः। प्रा॒णैरे॒व प॒शून्थ्सं॑पृ॑णक्ति। नप्र॒मायु॑काभवन्ति।
यज॑माना॒वै पु॑रो॒डाश॑ः। प्र॒जाप॒शव॒ꣳ पुरी॑शम्। यदे॒वम॑भिघा॒रय॑ति।
यज॑मानमे॒व प्र॒जया॑ प॒शुभि॒स्सम॑र्धयति।
दे॒वावैह॒विभृ॒र्भृ॒ऽब्रु॑वन्। कस्मि॑न्नि॒दं
म्र॑क्ष्यामह॒ इति॑। सो॑ऽग्निर॑ब्रवीत्।64।।
320810
मयि॑त॒नूस्सनिध॑ध्वम्। अ॒हंव॒स्तं ज॑नयिष्यामि।
यस्मि॑न्म्रक्ष्यध्व॒ इति॑। तेदे॒वा अ॒ग्नौत॒नूस्संन्य॑दधत। तस्मा॑दाहुः।
अ॒ग्निस्सर्वा॑ दे॒वता॒इति॑। सोङ्गा॑रे॒णापः। अ॒भ्य॑पातयत्।
तत॑एक॒ते॑ऽजायत। स द्वि॒तीय॑ म॒भ्य॑पातयत् ।।65।।

320811

ततो॑द्वि॒तो॑ जायत। स तृ॒तीय॑म॒भ्य॑पातयत्। तत॑स्त्रि॒तो॑ऽजायत।

यद॒द्भ्योऽजा॑यन्त। तद॒प्या॒नामा॑प्य॒त्वम्। यद॒ात्मभ्योऽजा॑यन्त।

तद॒ात्म्याना॑मात्म्य॒त्वम्। तेदे॒वा आ॒प्येष्व॑मृजत। आ॒प्या अ॑मृजत॒सूर्या॑भ्युदिते।

सूर्या॑भ्युदित॒ स्सूर्या॑भिनिम्रुक्ते ।।66।।

320812

सुर्या॑भिनिम्रुक्त॑कुन॒खिनि॑। कु॒न॒खीश्य॒ावद॑ति। श्य॒ावद॑न्नग्रदिधि॒षो। अ॒ग्र॒दि॒धि॒षु॑परिवि॒त्ते।

प॒रि॒वि॒त्तोवी॑र॒हणि॑। वी॒र॒हाब्र॑ह्म॒हणि॑। तद्ब्र॑ह्म॒हणं॒ नात्य॑च्यवत।

अ॒न्त॒र्वे॒दिनिन॑य॒त्यव॑रुध्यै। उल्मु॑के न॒ाभि गृ॑ह्णाति शृत॒त्वाय॑। शृ॒तका॑मा

इव॒हिदे॒वाः ।।67।। अ

320800

्न्याजि॑न्वन्त्यनु वि॒सृत्यै॒वम॒ाहाशा॑न्त आह॒गुप्त्यै॑छि॒न्नं

ब्रह्मा॑ब्रवीद्वि॒तीय॑म॒भ्य॑पातय॒थ्सूर्या॑भिनिम्रुक्ते दे॒वाः ।।8।।

320901

दे॒वस्य॑त्वास वि॒तु॑प्र॑स॒व इति॒स्फ्यमाद॑त्ते॒ प्रसू॑त्यै।

अ॒श्विनो॑र्ब॒ाहुभ्य॒ामित्या॑ह। अ॒श्विण॒ौहिदे॒वा॑नामध्व॒र्यू आस्ता॑म्।

पू॒ष्णोहस्ता॑भ्य॒ामित्या॑ह॒यत्यै॑। आद॑द॒ इन्द्र॑स्य ब॒ाहुर॑सि॒ दक्षि॑ण॒ इत्या॑ह।

इ॒न्द्रियमे॒व यज॑मानेदधाति। स॒हस्र॑भृष्टिश्श॒तते॑ज॒ा इत्या॑ह।

रू॒पमे॒वास्यै॒तन्म॑हि॒ मानं॒ व्याच॑ष्टे। व॒ायुर॑सि ति॒ग्मते॑ज॒ा इत्या॑ह।

तेज॒ोवै॒वा॒युः ।।68।।

320902

तेज॑ए॒वास्मि॑न्दधाति। वि॒षाद्वै॒नामा॑सुर आ॑सीत्। सो॑ऽबिभेत्। य॒ज्ञेन॑मादे॒वा अ॒भिभ॑विष्य॒न्तीति॑।

सपृ॑थि॒वीम॒भ्य॑वमीत्। सामे॒ध्याऽभ॑वत्। अथ॒ोयदिन्द्रो॑ वृ॒त्रमहन्॑।

तस्य॒लोहि॑तं पृथि॒वीमनु॒व्य॑धावत्। सामे॒ध्याऽभ॑वत्। पृथि॑विदेव यज॒नीत्या॑ह ।।69।।

320903

मेध्या॑मे॒वैनां॑ देव॒यज॑नीं करोति। ओष॑ध्यास्ते॒मूलं॒ माहिँ॑सि षमित्या॑ह।

ओष॑धीन॒ामहिँ॑ सायै। व्र॒जंग॑च्छगो॒स्थान॒मित्या॑ह। छन्दाँ॑सि॒ वैव्र॒जोगो॒स्थान॑ः। छन्दा॑

स्ये॒वास्मै॑ व्र॒जंगो॒स्थानं॑ करोति। वर्ष॑तु ते॒द्यौरित्या॑ह। वृष्टि॒र्वै द्यौः।

वृष्टि॑मे॒वाव॑रुन्धे। ब॒धानदे॑व सवित॑ पर॒मस्यां॑ पर॒ावतीत्या॑ह ।।70।।

320904

द्वौवावपुरु॑षौ। यंचै॒वद्वेष्टि॑। यश्चै॒नं॒ द्वेष्टि॑। ताव॒ुभौ ब॑ध्नाति

पर॒मस्यां॑ पर॒ावति॑श॒तेन॒पाशै॑ः। यो॑स्मान्द्वेष्टि॒

यंच॑व॒यंद्वि॒ष्मस्तम॒तोमाम॒ौगित्य॒ाहानि॑र्मुक्त्यै।

अ॒ररु॒र्वै नामा॑सु॒र आ॑सीत्। सपृ॑थि॒व्यामुप॑म्लुप्तोशयत्। तंदे॒वा

अप॑हत॒ोऽररु॑ᳲ पृथि॒व्या इति॑ पृथि॒व्या अपा᳚घ्नन्। भ्रातृ॑व्य॒ोवा अ॒ररु॑ः।

अप॑हत॒ोऽररु॑ᳲ पृथि॒व्या इत॒ि यदाह॑ ।।71।।

320905

भ्रातृ॑व्यमे॒व पृ॑थि॒व्या अप॑हन्ति। ते॑ऽमन्यन्त। दिव॒व्वँ

अ॒यमि॒तᳲप॑तिस्य॒तीति॑। तम॒ररु॑स्त॒े दिव॒ं माऽस्क॒ानिति॑दि॒वᳲपर्य॑बाधन्त।

भ्रातृ॑व्य॒ोवा अ॒ररु॑ः। अ॒ररु॑स्त॒ेदिव॒ं मास्क॒ानित॒ि यदाह॑। भ्रातृ॑व्यमे॒व

दि॒वᳲ परि॑बाधते। स्त॒म्भ॒य॒जुर् हा॑रति। पृ॒थि॒व्या ए॒वभ्रातृ॑व्य॒मप॑हन्ति।

द्वि॒तीयꣳ॑ हरति ।।72।।

320906

अ॒न्तरि॑क्षाद॒ेवै न॒मप॑हन्ति। तृ॒तीयꣳ॑ हारति। दि॒व ए॒वैन॒मप॑हन्ति। तू॒ष्णीं च॑तु॒र्थꣳ ह॑रति।

आप॑रिमिताद॒ेवैन॒मप॑हन्ति। असु॑राण॒ा व्वाँ इ॒यमग्र॑ आसीत्। याव॒दासी॑नᳲ

पर॒ापश्य॑ति। ताव॑द्दे॒वाना᳚म्। तेदे॒वा अ॑ब्रुवन्। अस्त्ये॒वन॒ोस्यामपीति॑ ।।73।।

320907

क्यं॑नोदास्य॒थेति॑। याव॑थ्स्व॒यं प॑रिगृह्णीथेति॑। तेवस॑व॒स्त्वेति॑ दक्षिण॒तᳲ

पर्य॑गृङ्णन्। रु॒द्रास्त्वेति॑प॒श्चात्। आ॒दि॒त्वास्त्वे त्यु॑त्तर॒तः।

ते᳚ऽग्निन॒ाप्राञ्चो॑जयन्। पसु॑भिर्दक्षि॒णा। रु॒द्रैᳲप्र॒त्यञ्च॑ः। आ॒दि॒त्यैरु॑दञ्चः।

यस्यै॒वंवि॒दुष॒ो वेदिं॑परिगृ॒ह्णन्ति॑।।74।।

320908

भव॑त्य॒ात्मना᳚। परा᳚ऽस्य॒भ्रातृ॑ व्योभवति। दे॒वस्य॑ सवि॒तुस्स॒व

इत्या॑ह॒ प्रसू᳚त्यै। कर्म॑कृण्वन्ति वे॒धस॒ इत्या॑ह।

इ॒षि॒तꣳहिकर्म॑क्रि॒यते᳚। पृ॒थि॒व्यै

मेध्यं॑चामे॒ध्यंच॒ व्यु॑दक्रामताम्। प्र॒ाचीन॑मु॒दीचीन॒ं

मेध्य᳚म्। प्र॒त॒ीचीन॑ं दक्षि॒णाऽमे॒ध्यम्। प्राच॒ीमुदी॑चीं प्रव॒णां क॑रोति।

मेध्या॑मे॒वैना᳚ देव॒यज॑नीं करोति ।।75।।

320909

प्राञ्चौ॑वेद्य॒ꣳसावुन्न॑यति। आ॒ह॒व॒नीय॑स्य॒ परि॑गृहीत्यै। प्र॒तीच॒ीश्रोणी᳚। गार्ह॑पत्यस्य॒

परि॑गृहीत्यै। अथो॑मिथुन॒ त्वाय॑। उद्ध॑न्ति। यदे॒वास्या॑ अमे॒ध्यम्। तदप॑हन्ति।

उद्ध॑न्ति। तस्म॒ादोष॑धय॒ᳲपरा॑भवन्ति।।76।।

320910

मूलंछिनत्ति। भ्रातृव्यस्यैव मूलंछिनत्ति। मूलव्वाँ अतितिष्ठद्रक्षाꣳस्यनूत्पिपते।
यद्धस्तेनछिन्द्यात्। कुनखिनीँꣳप्रजास्स्युः। स्फ्येनछिनत्ति।
वज्रोवैस्फ्यः। वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति। पितृदेवत्याऽतिखाता।
इयंतींखनति ।।77।।
320911
प्रजापतिना यज्ञमुखेन संमिताम्। वेदिंदेवेभ्योनिलायत।
तांचतुरङ्गु लेऽन्वविन्दन्। तस्माँच्चतुरङ्गुलं खेयाँ।
चतुरङ्गुलं खनति। चतुरङ्गुलेह्योषधयꣳ प्रतितिष्ठन्ति।
आप्रतिष्ठायै खनति। यजमानमेव
प्रतिष्ठां गमयति। दक्षिणतो वर् षीयसीं करोति
देवयजनस्यैवरूपमकः।।78।।
320912
पुरीषवतीं करोति। प्रजावै पशवꣳपुरीषम्। प्रजयैवैनं पशुभिꣳ पुरीषवन्तं
करोति। उत्तरं परिग्राहं परिगृह्णाति। एतावतीवै पृथिवी।
यावतीवेदिः। तस्या एतावतएव भ्रातृव्यंनिर्भज्य। आत्मन उत्तरं
परिग्राहं परिगृह्णाति। ऋतिमस्यृत सदनमस्यृत श्रीरसीत्याह।
यधायजुरेवैतत्।।79।।
320913
क्रूरमिपवा एतत्करोति। यद्वेदिंकरोति। धा असिस्वधाअसीति
योयुप्यतेशास्त्यैँ। उर्वीचासि वस्वीचासीत्याह। उर्वीमेवैनाँ वस्विंकरोति।
पुराक्रूरस्य विसृपोविरप्शिन्नित्याह मेध्यत्वाय। उदादाय पृथिवीं
जीरदानु यामैरयञ्चन्द्रमसि स्वधाभिरित्याह। यदेवास्या अमेध्यम्।
तदपहत्य। मेध्याँ देवयजनींकृत्वा ।।80।।
320914
यददश्चन्द्रमसिमेध्यँम्। तदस्यामेरयति। तांधीरासोअनुदृश्ययजन्तइत्याहानुख्यात्यै।
प्रोक्षणीरासादय। इध्माबर्हिरुपसादय। स्रुवंच स्रुचश्च संमृड्ढि।
पत्नीꣳसंनह्य। आज्येनोदेहित्याहानुगपूर्वतायै। प्रोक्षणी रासादयति।
आपोवै रक्षोघ्नीः ।।81।।
320915
रक्षसामपहत्यै। स्फ्यस्य वर्त्मँन्थ्सादयति। यज्ञस्य
संतत्यै। उवाचहासितोदेवलः। एतावतीर्वा अमुष्मिंल्लोँक आपाआसन्।

यावतीᳵप्रोक्षणीरिति। तस्माद्बह्वीरासाद्याᳵ। स्फ्यमुदस्यन् । यं द्विष्यात्तं
ध्यायेत्। शुचैवैनमर्पयति ।।82।।
320900
वैवायुराह परावतीत्याहार्हद्वितीयꣳ हरतीति परिगृह्णन्ति
देवयजनीं करोति भवन्ति खनत्यकरेतत्कृत्वारक्षोघ्नी रर्पयति।।9।।
321001
वज्रोवैस्फ्यः। यदन्वञ्चं धारयेत्। वज्रेऽध्वर्युः क्षण्वीत। पुरस्तात्तिर्यञ्चं
धारयति। वज्रोवैस्स्यः। वज्रेणैव यज्ञस्य दक्षिणते रक्षाꣳस्यपहन्ति।
अग्निभ्यांप्राचश्च प्रतीचश्च। स्फ्येनोदीचश्चाधराचश्च।
स्फ्येन वाएषवज्रेणास्यै पाप्मानंभ्रातृव्यामपहत्य। उत्करेऽधिप्रवृश्चति।।83।।
321002
यथोपधायवृश्चन्त्येवम्। हस्तावववनेनिक्ते। आत्मानमेवपवयते।
स्फ्यं प्रक्षालयतिमेध्यत्वाय। अथोपाप्मनएव भ्रातृव्यस्य
न्यङ्गंछिनत्ति। इध्माबर् हिरुपसादयति युक्त्यै। यज्ञस्य मिथुनत्वाय।
अथोपुरोरुचमेवैतां दधाति। उत्तरस्य कर्मणोऽनुख्यात्यै।
नपुरस्तात्प्र त्यगुपसादयेत्।।84।।
321003
यत्पुरस्तात्प्रत्यगुपसादयेत्। अन्तत्राहुति पथादिध्मं प्रतिपादयेत्। प्रजावै बर्
हिः। अपराध्नु याद्बर् हिषा प्रजानां प्रजननम्। पश्चात्प्रागुपसादयति।
आहुतिपथे नेध्मं प्रतिपादयती। संप्रत्यैवबर् हिषा प्रजानां प्र
जननमुपैति। दक्षिणमिध्मम्। उत्तरं बर् हिः। आत्मावाइध्मः। प्रजाबर्हिः। प्रजाह्यात्मन
उत्तरतरातीर्थे। ततोमिधमुपनीय। यथादेवतमेवैन त्प्रतिष्ठायति।
प्रतितिष्ठप्रजयापशुभिर्यजमानः।।85।।
321000
वृश्चतिसादयेदिध्मᳵपञ्चच ।।10।।
320000
तृतीयस्यां देवस्याश्वपर् शँ यो वै पूर्वेद्युᳵकर्मणेवामिन्द्रोवृत्रमहन्थ्सोपोऽ
वधूतन्धृष्टिर्देवस्येत्याहस व्वँसामिदेवस्यस्फ्यमाददेवज्रोवै
स्फ्योदश ।।10।।
तृतीयस्यां यज्ञस्यानति रेकायपवित्रवत्यध्वर्युंचाधिषवणमस्यन्तरिक्ष
एव रक्षसामन्तर् हित्यै द्वौवाव पुरुषौ यददश्चन्द्रमसि मेध्यं

पञ्चाशीतिः ।।85।। तृतीयस्या यँजमानः। हरिः ओम्।। श्रीकृष्णार्पणमस्तु। कृष्णयजुर्ब्राह्मणे तृतीयाष्टके द्वितीयप्रपाठकस्समाप्तः

330000
तैत्तिरीयब्राह्मणे तृतीयाष्टके तृतीय प्रपाठक प्रारम्भः ।। हरिः ओम् ।।
330101
प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीत्याह मेध्यत्वाय । स्रुचस्संमार्ष्टि ।
स्रुवमग्रे । पुमाꣳसमेवाभ्यस्सश्यति मिथुनत्वाय । अथ जुहूम् । अथोपभृतम् । अथ ध्रुवाम् । असौ वै जुहूः ।।1।।
330102
अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । इमे वै लोकास्स्रुचः । वृष्टिस्संमार्जनानि । वृष्टिर्वा इमाँल्लोकाननुपूर्वं कल्पयति । ते ततः
क्लृप्तास्समेधन्ते । समेधन्तेऽस्मा इमे लोकाः प्रजया पशुभिः । य एवव्वेँद । यदि कामयेत वर्षुकः पर्जन्यस्स्यादिति । अग्रतस्संमृज्यात् ।।2।।
330103
वृष्टिमेव नियच्छति । अवाचीनाग्रा हि वृष्टिः । यदि कामयेतावर्षुकस्स्यादिति । मूलतस्संमृज्यात् । वृष्टिमेवोद्यच्छति । तदु
वा आहुः । अग्रत एवोपरिष्टाथ्संमृज्यात् । मूलतोऽधस्तात् । तदनुपूर्वं कल्पते । वर्षुको भवतीति ।।3।।
330104
प्राचीमभ्याकारम् । अग्नेरन्तरतः । एवमिव ह्यन्नमद्यते । अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजीवन्ति । ऊर्ज
एवान्नाद्यस्यावरुद्ध्यै । अधस्तात्प्रतीचीम् । दण्डमुत्तमतः । मूलेन मूलं प्रतिष्ठित्यै । तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि । प्रत्यञ्च्यधस्तात् ।।4।।
330105
स्रुग्घ्येषा । प्राणो वै स्रुवः । जुहूर्दक्षिणो हस्तः । उपभृथ्सव्यः । आत्मा ध्रुवा । अन्नꣳ संमार्जनानि । मुखतो वै प्राणोऽपानो
भूत्वा । आत्मानमन्नं प्रविश्य । बाह्यतस्तनुवꣳ शुभयति । तस्माथ्स्रुवमेवाग्रे संमार्ष्टि । मुखतो हि प्राणोऽपानो भूत्वा । आत्मानमन्नमाविशति ।
तौ प्राणापानौ । अव्यर्धुकः प्राणापानाभ्यां भवति । य एवं वेद ।।5।।
330100
जुहूर्मृज्याद्भवतीति प्रत्यञ्च्यधस्तान्मार्ष्टि पञ्च च ।।1।।
330201
दिवश्शिल्पमवततम् । पृथिव्याः ककुभि श्रितम् । तेन वयꣳ सहस्रवल्शेन ।

स॒पत्नं॑ नाशयामसि॒ स्वाहेति॑ स्रुख्सं॒मार्जना॑न्य॒ग्नौ
प्रह॑रति । आपो॒ वै द॒र्भाः । रू॒पमे॒वैषा॑मे॒तन्म॑हि॒मानं॒ व्याच॑ष्टे । अ॒नु॒ष्टु॒भ॒र्चा
। आनु॑ष्टुभ॒ः प्र॒जाप॑तिः । प्रा॒जा॒प॒त्यो वे॒दः । वे॒दस्याग्रं॑ स्रुख्सं॒मार्जना॑नि ।।6।।
330202
स्वेने॒वैना॑नि॒ छन्द॑सा । स्वया॑ दे॒वत॑या॒ सम॑र्धयति । अथो॒ ऋग्वाव योषा॑ । द॒र्भो
वृषा॑ । तन्मि॑थु॒नम् । मि॒थु॒नमे॒वास्य॒ तद्य॒ज्ञे
क॑रोति प्र॒जन॑नाय । प्रजा॑यते प्र॒जया॑ प॒शुभि॒र्यज॑मानः । तान्येके॒ वृथै॒वापा॑स्यन्ति । तत्तथा॒
न का॒र्य॑म् । आर॑ब्धस्य य॒ज्ञिय॑स्य॒ कर्म॑ण॒स्सवि॑द॒ोहः ।।7।।
330203
यद्ये॑नानि प॒शवो॑ऽभि॒ तिष्ठे॑युः । न तत्प॒शुभ्य॒ः कम् । अ॒द्भिर्मा॑र्जयि॒त्वोत्क॒रे
न्य॑स्येत् । यद्वै य॒ज्ञिय॑स्य॒ कर्म॑णो॒ऽन्यत्रा॑हु॑तीभ्य
स्सं॒तिष्ठ॑ते । उ॒त्क॒रो वाव तस्य॑ प्रति॒ष्ठा । ए॒ताः हि तस्मै॑ प्रति॒ष्ठां दे॒वास्स॒मभ॑रन्
। यद॒द्भिर्मा॒र्जय॑ति । तेन॑ शा॒न्तम् । यदु॑त्क॒रे न्य॒स्यति॑ ।
प्र॒ति॒ष्ठामे॒वैना॑नि॒ तद्ग॑मयति ।।8।।
330204
प्रति॑तिष्ठति प्र॒जया॑ प॒शुभि॒र्यज॑मानः । अथो॑ स्त॒म्बस्य॒ वा ए॒तद्रू॒पम् । यथ्स्रु॑ख्सं॒मार्जना॑नि
। स्त॒म्ब॒शो वा ओष॑धयः । तासा॑
जरत्क॒क्षे प॒शवो॒ न र॑मन्ते । अप्रि॑यो॒ ह्ये॑षां जरत्क॒क्षः । याव॑दप्रियो ह॒ वै ज॑रत्क॒क्ष॒ः
प॑शू॒नाम् । ताव॑दप्रिय॒ः पशू॒नां भ॑वति । यस्यै॒तान्य॒न्यत्रा॒ग्ने
र्दध॑ति । न॒व॒दाव्या॑सु॒ वा ओष॑धीषु प॒शवो॑ रमन्ते ।।9।।
330205
न॒व॒दा॒वो ह्ये॑षां प्रि॒यः । याव॑त्प्रियो ह॒ वै न॑वदा॒व॒ः प॑शू॒नाम् । ताव॑त्प्रिय॒ः
पशू॒नां भ॑वति । यस्यै॒तान्य॒ग्नौ प्र॒हर॑न्ति ।
तस्मा॑दे॒तान्य॒ग्नावे॒व प्रह॑रेत् । य॒त॒रस्मि॑न्थ्सं॒मृज्यात् । प॒शू॒नां धृत्यै॑ । यो भू॒ताना॒मधि॑पतिः
। रु॒द्रस्त॑न्तिच॒रो वृषा॑ । प॒शू॒न॒स्माक॒ं मा हिं॑सीः ।
ए॒तद॑स्तु हु॒तं तव॒ स्वाहेत्य॑ग्निसं॒मार्ज॑न्य॒ग्नौ प्रह॑रति । ए॒षा वा ए॒तेषां॒ योनि॑ः ।
ए॒षा प्र॑ति॒ष्ठा । स्वामे॒वैना॑नि॒ योनि॑म् । स्वां प्र॑ति॒ष्ठां ग॑मयति ।
प्रति॑तिष्ठति प्र॒जया॑ प॒शुभि॒र्यज॑मानः ।।10।।
330200
वे॒दस्याग्रं॑ स्रुख्सं॒मार्जना॑नि विद॒ोहो ग॑मयति प॒शवो॑ रमन्ते हिं॑सी॒ष्षट् च॑ ।।2।।
330301

अयज्ञो वा एषः । योऽपत्नीकः । न प्रजाः प्रजायेरन् । पत्न्यन्वास्ते । यज्ञमेवाकः
। प्रजानां प्रजननाय । यत्तिष्ठन्ती
सन्नह्येत । प्रियं ज्ञातिꣳ रुन्ध्यात् । आसीना सन्नह्यते । आसीना ह्येषा वीर्यङ्करोति ।।11।।
330302
यत्पश्चात्प्राच्यन्वासीत । अनया समदन्दधीत । देवानां पत्निया समदन्दधीत
। देशाद्दक्षिणत उदीच्यन्वास्ते । आत्मनो
गोपीथाय । आशासाना सौमनसमित्याह । मेध्यामेवैनाङ्केवलीङ्कृत्वा । आशिषा समर्धयति
। अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कमित्याह ।
एतद्वै पत्नियै व्रतोपनयनम् ।।12।।
330303
तेनैवैनां व्रतमुपनयति । तस्मादाहुः । यश्चैवव्वेद यश्च न । योक्त्रमेव युते
। यमन्वास्ते । तस्यामुष्मिल्लोके भवतीति
योक्त्रेण । यद्योक्त्रम् । स योगः । यदास्ते । स ख्षेमः ।।13।।
330304
योगख्षेमस्य क्लृप्त्यै । युक्तङ्क्रियाता आशीः कामे युज्याता इति । आशिषस्समृद्ध्यै
। ग्रन्थिङ्ग्रथ्नाति । आशिष
एवास्यां परिगृह्णाति । पुमान् वै ग्रन्थिः । स्त्री पत्नी । तन्मिथुनम् । मिथुनमेवास्य
तद्यज्ञे करोति प्रजननाय । प्र जायते प्रजया पशुभिर्यजमानः ।।14।।
330305
अथो अर्धो वा एष आत्मनः । यत्पत्नी । यज्ञस्य धृत्या अशिथिलंभावाय । सुप्रजसस्त्वा
वयꣳ सुपत्नीरुप सेदिमेत्याह ।
यज्ञमेव तन्मिथुनीकरोति । ऊनेऽतिरिक्तन्धीयाता इति प्रजात्यै । महीनां पयोऽस्योषधीनाꣳ
रस इत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे । तस्य
तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इत्याह । आशिषमेवैतामाशास्ते ।।15।।
330300
करोति व्रतोपनयनं क्षेमो यजमानश्शास्ते ।।3।।
330401
घृतं च वै मधु च प्रजापतिरासीत् । यतो मध्वासीत् । ततः प्रजा असृजत । तस्मान्मधुषि
प्रजननमिवास्ति । तस्मान्मधुषा
न प्रचरन्ति । यातयाम हि । आज्येन प्रचरन्ति । यज्ञो वा आज्यम् । यज्ञेनैव यज्ञं
प्रचरन्त्ययातयामत्वाय । पत्न्यवेक्षते ।।16।।
330402

मि॒थु॒न॒त्वाय॒ प्रजा᳚त्यै । यद्वै पत्नी॑ य॒ज्ञस्य॑ क॒रोति॑ । मि॒थु॒नं तत् । अथो॒
पत्नि॑या ए॒वैष य॒ज्ञस्या॑न्वार॒म्भोऽन॑वच्छित्त्यै । अ॒मे॒ध्यं
वा ए॒तत्क॑रोति । यत्पत्न्य॒वेक्ष॑ते । गार्ह॑प॒त्येऽधि॑श्रयति मेध्य॒त्वाय॑ । आ॒ह॒व॒नीय॑म॒भ्युद्र॑वति
। य॒ज्ञस्य॒ सन्त॑त्यै । तेजो॑सि॒ तेजोऽनु॒ प्रेहीत्या॑ह ।।17।।
330403
तेजो॒ वा अ॒ग्निः । तेज॒ आज्य᳚म् । तेज॑सै॒व तेज॒स्सम॑र्धयति । अ॒ग्निस्ते॒ तेजो॒ मा विनै॒दित्या॒हाहिꣳ॑सायै
। स्फ्यस्य॒
वर्त्म᳚न्थ्सादयति । य॒ज्ञस्य॒ सन्त॑त्यै । अ॒ग्नेर्जि॒ह्वाऽसि॑ सु॒भूर्दे॒वाना॒मित्या॑ह । य॒थाय॒जुरे॒वैतत्
। धाम्ने॑धाम्ने दे॒वेभ्यो॒ यजु॑षेयजुषे भ॒वेत्या॑ह ।
आ॒शिष॑मे॒वैतामाशा᳚स्ते ।।18।।
330404
तद्वा अत॑ᳶ प॒वित्रा᳚भ्यामे॒वोत्पु॑नाति । यज॑मानो॒ वा आज्य᳚म् । प्रा॒णा॒पा॒नौ प॒वित्रे᳚ । यज॑मान ए॒व
प्रा॑णापा॒नौ द॑धाति ।
पु॒न॒रा॒हार᳚म् । ए॒वमि॑व॒ हि प्रा॑णापा॒नौ सं॒चर॑तः । शु॒क्रम॑सि॒ ज्योति॑रसि॒ तेजो॒सीत्या॑ह
। रू॒पमे॒वास्यै॒तन्म॑हि॒मानं॒ व्याच॑ष्टे । त्रिर्यजु॑षा । त्रय॑ इ॒मे लो॒काः ।।19।।
330405
ए॒षां लो॒काना॒माप्त्यै᳚ । त्रिः । त्र्या॑वृद्धि य॒ज्ञः । अथो॑ मेध्य॒त्वाय॑ । अथाज्य॑वतीभ्याम॒पः
। रू॒पमे॒वासा॑मे॒तद्व॒र्णं॑ दधाति । अपि॒
वा उ॒ताहुः॑ । यथा॑ ह॒ वै योषा॑ सु॒वर्ण॒ꣳ॒ हिर॑ण्यं पेश॒लं बिभ्र॑ती रू॒पाण्यास्ते᳚ । ए॒वमे॒ता
ए॒तर्हीति॑ । आपो॒ वै सर्वा॑ दे॒वताः᳚ ।।20।।
330406
ए॒षा हि विश्वे॑षां दे॒वानां᳚ त॒नूः । यदाज्य᳚म् । तत्रो॒भयो᳚र्मीमा॒ꣳ॒सा । जा॒मि स्यात्
। यद्यजु॒षाऽऽज्यं॒ यजु॑षा॒ऽप उ॑त्पुनी॒यात् ।
छन्द॑सा॒ऽप उत्पु॑ना॒त्यजा॑मित्वाय । अथो॑ मिथु॒नत्वाय॑ । सा॒वि॒त्रि॒यर्चा॑ । स॒वि॒तृप्र॑सूतं
मे॒ कर्मा॑स॒दिति॑ । स॒वि॒तृप्र॑सूतमे॒वास्य॒ कर्म॑ भवति । प॒च्छो
गा॑यत्रि॒या त्रि॒ष्षमृद्ध॒त्वाय॑ । अ॒द्भिरे॒वौष॑धी॒स्संन॑यति । ओष॑धीभिᳶ प॒शून् । प॒शु॒भि॒र्यज॑मानम्
। शु॒क्रं त्वा॑ शु॒क्राया॒ं ज्योति॑स्त्वा॒ ज्योति॑ष्य॒र्चिस्त्वा॒
ऽर्चिषीत्या॑ह सर्व॒त्वाय॑ । पर्या᳚प्त्या॒ अन॑न्तरायाय ।।21।।
330400
ई॒क्ष॒त॒ आ॒ह॒ शा॒स्ते॒ लो॒का दे॒वता॑ भवति॒ षट् च॑ ।।4।।
330501

दे॒वा॒सु॒रास्सय्यँ॑त्ता आसन्न् । स ए॒तमिन्द्र॒ आज्य॑स्यावका॒शम॑पश्यत् । तेनावै᳚क्षत
। ततो॑ दे॒वा अभ॑वन्न् । पराऽसु॑राः । य ए॒वं
वि॒द्वानाज्य॑म॒वेक्ष॑ते । भव॑त्या॒त्मना᳚ । परा᳚ऽस्य॒ भ्रातृ॑व्यो भवति । ब्र॒ह्म॒वा॒दिनो॑
वदन्ति । यदाज्ये॑ना॒न्यानि॑ ह॒वीꣳष्य॑भि घा॒रय॑ति ।।22।।
330502
अथ॒ केनाज्य॒मिति॑ । स॒त्येनेति॑ ब्रूयात् । चख्षु॒र्वै स॒त्यम् । स॒त्येनै॒वैन॑द॒भि घा॑रयति
। ई॒श्व॒रो वा ए॒षो᳚ऽन्धो भवि॑तोः ।
यश्चख्षु॒षाऽऽज्य॑म॒वेख्ष॑ते । नि॒मील्यावे᳚ख्षेत । दा॒धारा॒त्मञ्चख्षुः॑ । अ॒भ्याज्य॑ङ्घारयति । आज्य॑ङ्गृह्णाति
।।23।।
330503
छन्दाꣳ॑सि॒ वा आज्य᳚म् । छन्दाꣳ॑स्ये॒व प्री॑णाति । च॒तुर्जु॒ह्वाङ्गृ॑ह्णाति । चतु॑ष्पादᳶ
प॒शवः॑ । प॒शूने॒वाव॑रुन्धे । अ॒ष्टावु॑प॒भृति॑ ।
अ॒ष्टाख्ष॑रा गाय॒त्री । गा॒य॒त्रᳶ प्रा॒णः । प्रा॒णमे॒व प॒शुषु॑ दधाति । च॒तुर्ध्रु॒वाया᳚म् ।।24।।
330504
चतु॑ष्पादᳶ प॒शवः॑ । प॒शुष्वे॒वोपरि॑ष्टा॒त्प्रति॑तिष्ठति । य॒ज॒मा॒न॒दे॒व॒त्या॑
वै जु॒हूः । भ्रा॒तृ॒व्य॒दे॒व॒त्यो॑प॒भृत् । च॒तुर्जु॒ह्वाङ्गृ॒ह्णन्भूयो॑
गृह्णीयात् । अ॒ष्टावु॑प॒भृति॑ गृ॒ह्णन्कनी॑यः । यज॑माना॒यै॒व भ्रातृ॑व्य॒मुप॑स्तिङ्करोति । गौर्वै᳚
स्रुचः॑ । च॒तुर्जु॒ह्वाङ्गृ॑ह्णाति । तस्मा॒च्चतु॑ष्पदी ।।25।।
330505
अ॒ष्टावु॑प॒भृति॑ । तस्मा॑द॒ष्टाश॑फा । च॒तुर्ध्रु॒वाया᳚म् । तस्मा॒च्चतु॑स्स्तना । गामे॒व
तथ्सस्क॑रोति । सास्मै॒ सस्कृ॒तेष॒मूर्ज॑न्दुहे ।
यज्जु॒ह्वाङ्गृ॒ह्णाति॑ । प्र॒या॒जेभ्य॒स्तत् । यदु॑प॒भृति॑ । प्र॒या॒जा॒नू॒या॒जेभ्य॒स्तत्
। सर्व॑स्मै॒ वा ए॒तद्य॒ज्ञाय॑ गृह्यते । य॒द्ध्रु॒वाया॒माज्य᳚म् ।।26।।
330500
अ॒भि॒घा॒रय॑ति गृह्णाति ध्रु॒वाया॒ञ्चतु॑ष्पदी प्रयाजानू॒या॒जेभ्य॒स्तद्द्वे च॑ ।।5।।
330601
आपो॑ देवीरग्रेपुवो अग्रेगुव॒ इत्या॑ह । रू॒पमे॒वासा॑मे॒तन्म॑हि॒मान॒व्व्याँ॑चष्टे । अग्र॑
इ॒मय्यँ॒ज्ञन्न॑य॒ताग्रे॑ य॒ज्ञप॑ति॒मित्या॑ह । अग्र॑ ए॒व
य॒ज्ञन्न॑यन्ति । अग्रे॑ य॒ज्ञप॑तिम् । यु॒ष्मानिन्द्रो॑ऽवृणीत वृत्र॒तूर्ये᳚ यू॒यमिन्द्र॑मवृणीध्वव्वृँ॑त्र॒तूर्य॒
इत्या॑ह । वृ॒त्रꣳ ह॑ हनि॒ष्यन्निन्द्र॒ आपो॑ वव्रे । आपो॒
हेन्द्र॑व्वँव्रिरे । सं॒ज्ञामे॒वासा॑मे॒तथ्सामा॑न॒व्व्याँ॑चष्टे । प्रोख्षि॑ता॒स्स्थेत्या॑ह ।।27।।
330602

तेनाप॒ प्रोक्षि॑ताः । अ॒ग्निर्दे॒वेभ्यो॒ निला॑यत । कृष्णो॑ रू॒पङ्कृ॒त्वा । स व॒न॒स्पती॒न्प्रावि॑शत्
। कृष्णो॑ऽस्याखरे॒ष्ठो॑ऽग्नये॑ त्वा॒
स्वाहेत्या॑ह । अ॒ग्नय॑ ए॒वैन॒ञ्जुष्ट॑ङ्करोति । अथो॑ अ॒ग्नेरे॒व मेध॒मव॑रुन्धे । वेदि॑रसि ब॒र्॒हिषे॑
त्वा॒ स्वाहेत्या॑ह । प्र॒जा वै ब॒र्॒हिः । पृ॒थि॒वी वेदिः॑ ।।28।।
330603
प्र॒जा ए॒व पृ॑थि॒व्यां प्रति॑ष्ठापयति । ब॒र्॒हिर॑सि स्रु॒ग्भ्यस्त्वा॒ स्वाहेत्या॑ह
। प्र॒जा वै ब॒र्॒हिः । यज॑मान॒स्स्रुचः॑ । यज॑मानमे॒व
प्र॒जासु॒ प्रति॑ष्ठापयति । दि॒वेत्वा॒ऽन्तरि॑क्षाय त्वा पृथि॒व्यै त्वेति॑ ब॒र्॒हिरा॒साद्य॒
प्रोक्ष॑ति । ए॒भ्य ए॒वैन॑ल्लो॒केभ्य॒ प्रोक्ष॑ति । अथ॒ तत॑स्स॒ह स्रु॒चा
पु॒रस्ता॑त्प्र॒त्यञ्च॑ङ्ग्र॒न्थिं प्रत्यु॑क्षति । प्र॒जा वै ब॒र्॒हिः । यथा॒ सूत्यै॑ का॒ल आप॑ पु॒रस्ता॒द्यन्ति॑ ।।29।।
330604
ता॒दृगे॒व तत् । स्व॒धा पि॒तृभ्य॒ इत्या॑ह । स्व॒धा॒का॒रो हि पि॑तॄ॒णाम् । ऊर्भ॑व बर्॒हि॒षद्भ्य॒
इति॒ दक्षि॑णायै॒ श्रोणे॒रोत्त॑रस्यै॒ निन॑यति॒
सन्त॑त्यै । मासा॒ वै पि॒तरो॑ बर्॒हि॒षदः॑ । मासा॑ने॒व प्री॑णाति । मासा॒ वा ओष॑धीर्व॒र्धय॑न्ति
। मासाः॑ पचन्ति॒ सम॑द्ध्यै । अन॑तिस्कन्दन्॒ ह प॒र्जन्यो॑
वर्॒षति । यत्रै॒तदे॒वङ्क्रि॒यते॑ ।।30।।
330605
ऊ॒र्जा पृ॑थि॒वीङ्ग॑च्छ॒तेत्या॑ह । पृ॒थि॒व्यामे॒वोर्ज॑न्दधाति । तस्मा॑त्पृथि॒व्या ऊ॒र्जा
भु॑ञ्जते । ग्र॒न्थिँव्विस्र॑ꣳसयति । प्रज॑नयत्ये॒व तत् ।
ऊ॒र्ध्वं प्राञ्च॒मुद्गू॑ढं प्र॒त्यञ्च॒माय॑च्छति । तस्मा॑त्प्रा॒चीन॒ꣳ रेतो॑ धीयते । प्र॒तीचीः॑
प्र॒जा जा॑यन्ते । विष्णो॒स्स्तूपो॒ऽसीत्या॑ह। य॒ज्ञो वै विष्णुः॑ ।।31।।
330606 य॒ज्ञस्य॒ धृत्यै॑ । पु॒रस्ता॑त्प्रस्त॒रङ्गृ॑ह्णाति । मुख्य॑मे॒वैन॑ङ्करोति । इय॑न्तङ्गृह्णाति
। प्र॒जाप॑तिना यज्ञमु॒खेन॒ संमि॑तम् । इय॑न्तङ्गृह्णाति ।
य॒ज्ञप॒रुषा॒ संमि॑तम् । इय॑न्तङ्गृह्णाति । ए॒ताव॒द्वै पुरु॑षे वी॒र्य॑म् । वी॒र्य॑संमितम् ।।32।।
330607
अप॑रिमितङ्गृह्णाति । अप॑रिमित॒स्याव॑रुद्ध्यै । तस्मि॑न्प॒वित्रे॒ अपि॑सृजति । यज॑मानो॒
वै प्र॑स्त॒रः । प्रा॒णा॒पा॒नौ प॒वित्रे॑ । यज॑मान
ए॒व प्रा॑णापा॒नौ द॑धाति । ऊर्णा॑म्रदसन्त्वा स्तृणा॒मीत्या॑ह । य॒था॒य॒जुरे॒वैतत् । स्वा॒सस्थन्दे॒वेभ्य॒
इत्या॑ह । दे॒वेभ्य॑ ए॒वैन॑थ्स्वास॒स्थङ्क॑रोति ।।33।।
330608 ब॒र्॒हिस्स्तृ॑णाति । प्र॒जा वै ब॒र्॒हिः । पृ॒थि॒वी वेदिः॑ । प्र॒जा ए॒व पृ॑थि॒व्यां
प्रति॑ष्ठापयति । अन॑तिदृश्ञ्स्तृणाति । प्र॒जयै॒वैनं॑

प॒शुभि॒रनॆतिदृश्ञङ्करोति । धा॒रय॑न्प्रस्त॒रं परि॒धीन्परि॑दधाति । यज॑माना॒ो वै प्र॑स्त॒रः
। यज॑मान ए॒व तथ्स्व॒यं परि॒धीन्परि॑दधाति । ग॒न्ध॒र्वोऽसि
वि॒श्वाव॑सु॒रित्या॑ह ।।34।।
330609
विश्व॑मे॒वायु॒र्यज॑माने दधाति । इन्द्र॑स्य बा॒हुर॑सि॒ दक्षि॑ण॒ इत्या॑ह । इ॒न्द्रि॒यमे॒व
यज॑माने दधाति । मि॒त्रावरु॑णौ त्वोत्तर॒तः
परि॑धत्ता॒मित्या॑ह । प्रा॒णा॒पा॒नौ मि॒त्रावरु॑णौ । प्रा॒णा॒पा॒नावे॒वास्मि॒न्दधाति । सूर्य॑स्त्वा
पु॒रस्ता॑त् पा॒त्वित्या॑ह । रक्ष॑सा॒मप॑हत्यै । कस्या॑श्चिद॒भिश॑स्त्या॒
इत्या॑ह । अप॑रिमिताद॒वैन॑ पाति ।।35।।
330610
वी॒तिहो॑त्रन्त्वा कव॒ इत्या॑ह । अ॒ग्निमे॒व हो॒त्रेण॒ सम॑र्धयति । द्यु॒मन्त॒ꣳ समि॑धीम॒हीत्या॑ह
समि॑द्ध्यै । अग्ने॑ बृहन्त॑मध्व॒र इत्या॑ह
वृद्ध्यै॑ । वि॒शो य॒न्त्रे स्थ॒ इत्या॑ह । वि॒शाय्यँत्यै॑ । उ॒दी॒चीना॑ग्रे॒ निद॑धाति॒ प्रति॑ष्ठित्यै
। वसू॑नाꣳ रु॒द्राणा॑मादि॒त्याना॒ꣳ सद॑सि सी॒देत्या॑ ह। दे॒वता॑नामे॒व
सद॑ने प्रस्त॒रꣳ सा॑दयति । जु॒हूर॑सि घृ॒ताची॒ नाम्नेत्या॑ह ।।36।।
330611
अ॒सौ वै जु॒हूः । अ॒न्तरि॑क्षमु॒प॒भृत् । पृ॒थि॒वी ध्रु॒वा । तासा॑मे॒तदे॒व प्रि॒यन्नाम॑
। यद्घृ॒ताचीति॑ । यद्घृ॒ताचीत्याह॑ । प्रि॒येणै॒वैना॒
नाम्ना॑ सादयति । ए॒ता अ॑सदन्थ्सुकृ॒तस्य॑ लो॒क इत्या॑ह । स॒त्यव्वै॑ सु॑कृ॒तस्य॑ लो॒कः । स॒त्य
ए॒वैना॑स्सुकृ॒तस्य॑ लो॒के सा॑दयति । ता वि॑ष्णो पा॒हीत्या॑ह ।
य॒ज्ञो वै विष्णुः॑ । य॒ज्ञस्य॒ धृत्यै॑ । पा॒हि य॒ज्ञं पा॒हि य॒ज्ञप॑तिं पा॒हि माय्यँ॑ज्ञ॒निय॒मित्या॑ह
। य॒ज्ञाय॒ यज॑माना॒या॒त्मने॑ । तेभ्य॑ ए॒वाशिष॒माशा॒स्तेऽना॑र्त्यै ।।37।।
330600
स्थेत्या॑ह पृथि॒वी वेदि॒र्यन्ति॑ क्रियत॒े वीणु॑र्वी॒र्य॑संमितङ्करोत्याह पाति॒ नाम्नेत्या॑ह लो॒के सा॑दयति॒ षट् च॑
।।6।।
330701
अ॒ग्निना॒ वै होत्रा॑ । दे॒वा अस॒ुरान॒भ्य॑भवन्न् । अ॒ग्नये॑ समि॒ध्यमा॑ना॒याऽनु॑ब्रूहीत्या॑ह
भ्रातृ॑व्याभिभूत्यै । एक॑विꣳशतिमिध्मदा॒रूणि॑
भवन्ति । ए॒क॒वि॒ꣳशो वै पुरु॑षः । पुरु॑षस्याप्त्यै॑ । पञ्च॑दशेध्मदा॒रूण्य॒भ्याद॑धाति ।
पञ्च॑दश॒ वा अ॑र्धमा॒सस्य॒ रात्र॑यः । अ॒र्ध॒मा॒स॒शस्स॑व्वँथ्स॒र आ॑प्यते ।
त्रीन्प॑रि॒धीन्परि॑ दधाति ।।38।।

330702
ऊ॒र्ध्वे स॒मिधा॒वाद॑धाति । अ॒नू॒या॒जेभ्य॒स्स॒मिध॒मति॑ शिनष्टि । षट्थ्सं प॑द्यन्ते ।
षड्वा ऋ॒तव॑ः । ऋ॒तूने॒व प्री॑णाति । वे॒देनोप॑
वाजयति । प्रा॒जा॒प॒त्यो वै वे॒दः । प्रा॒जा॒प॒त्य॑ प्रा॒णः । यज॑मान आहव॒नीय॑ः । यज॑मान ए॒व
प्रा॒णान्द॑धाति ।।39।।
330703
त्रिरुप॑वाजयति । त्रयो॒ वै प्रा॒णाः । प्रा॒णाने॒वास्मि॒न्दधाति । वे॒देनो॑प॒यत्य॑ स्रु॒वेण॑
प्राजाप॒त्यमा॑घा॒रमाघा॑रयति । य॒ज्ञो वै
प्र॒जाप॑तिः । य॒ज्ञमे॒व प्र॒जाप॑तिं मुख॒त आर॑भते । अथो॑ प्र॒जाप॑ति॒स्सर्वा॑ दे॒वता॑ः ।
सर्वा॑ ए॒व दे॒वता॑ प्रीणाति । अ॒ग्निर्म॑ग्नी॒त्रिस्त्रि॒स्संमृ॒ड्ढीत्या॑ह ।
त्र्या॑वृ॒द्धि य॒ज्ञः ।।40।।
330704
अथो॒ रक्ष॑सा॒मप॑हत्यै । प॒रि॒धीन्थ्संमा॑र्ष्टि । पु॒नात्ये॒वैनान् । त्रिस्त्रि॒स्संमा॑र्ष्टि
। त्र्या॑वृ॒द्धि य॒ज्ञः । अथो॑ मेध्य॒त्वाय॑ । अथो॑ ए॒ते वै
दे॑वा॒श्वाः । दे॒वा॒श्वाने॒व तथ्संमा॑र्ष्टि । सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै । आसी॑नो॒ऽन्यमा॑घा॒रमाघा॑रयति
।।41।।
330705
तिष्ठ॑न्न॒न्यम् । यथाऽनो॑ वा॒ रथ॑व्वाँ यु॒ञ्ज्यात् । ए॒वमे॒व तद॑ध्व॒र्युर्य॒ज्ञय्युँ॑नक्ति
। सु॒व॒र्गस्य॑ लो॒कस्या॒भ्यूँ॑ढ्यै । वह॑न्त्येनङ्ग्रा॒म्या॑
प॒शव॑ः । य ए॒वव्वेँद॑ । भुव॑नमसि॒ वि प्र॑थ॒स्वेत्या॑ह । य॒ज्ञो वै भुव॑नम् । य॒ज्ञ ए॒व यज॑मानं
प्र॒जया॑ प॒शुभि॑ प्रथयति । अग्ने॒ यष्ट॑रि॒दन्न॒म् इत्या॑ह ।।42।।
330706
अ॒ग्निर्वै दे॒वाना॒य्यँष्टा॑ । य ए॒व दे॒वाना॒य्यँष्टा॑ । तस्मा॑ ए॒व नम॑स्करोति । जुह्वेह्य॒ग्निस्त्वा॑
ह्वयति देवय॒ज्याया॒ उप॑भृदेहि॑ दे॒वस्त्वा॑
सवि॒ता ह्व॑यति देवय॒ज्याया॒ इत्या॑ह । आ॒ग्ने॒यी वै जु॒हूः । सा॒वि॒त्र्यु॑प॒भृत् । ताभ्या॑मे॒वैने॒
प्रसू॑त॒ आद॑त्ते । अग्ना॑विष्णू॒ मा वा॒मव॑क्रमिष॒मित्या॑ह । अ॒ग्नि
पु॒रस्ता॑त् । विष्णु॑र्य॒ज्ञ प॒श्चात् ।।43।।
330707
ताभ्या॑मे॒व प्र॑ति॒प्रोच्या॒त्याक्रा॑मति । विजि॑हाथा॒ं मा मा॒ सन्ता॑प्त॒मित्या॒हाहिं॑सायै
। लो॒कं मे॑ लोककृतौ कृणु॒त॒मित्या॑ह ।
आ॒शिष॑मे॒वैतामा शा॑स्ते । विष्णो॒स्स्थान॑म॒सीत्या॑ह । य॒ज्ञो वै विष्णु॑ः । ए॒तत्खलु॒ वै

देवानामपराजितमायतनम्
। यद्यज्ञः । देवानामेवापराजित
आयतने तिष्ठति । इत इन्द्रो अकृणोद्वीर्याणीत्याह ।।44।।
330708
इन्द्रियमेव यजमाने दधाति । समारभ्योर्ध्वो अध्वरो दिविस्पृशमित्याह
वृद्ध्यै । आघारमाघार्यमाणमनुसमारभ्य ।
एतस्मिन्काले देवास्सुवर्गंल्लोकमायन् । साक्षादेव यजमानस्सुवर्गंल्लोकमेति
। अथो समृद्धेनैव यज्ञेन यजमानस्सुवर्गंल्लोकमेति । अह्रुतो यज्ञो
यज्ञपतेरित्याहानार्त्यै । इन्द्रावान्थ्स्वाहेत्याह । इन्द्रियमेव यजमाने दधाति । बृहद्भा इत्याह ।।45।।
330709
सुवर्गो वै लोको बृहद्भाः । सुवर्गस्य लोकस्य समष्ट्यै । यजमानदेवत्या
वै जुहूः । भ्रातृव्यदेवत्योपभृत् । प्राण आघारः ।
यथ्संस्पर्शयेत् । भ्रातृव्येऽस्य प्राणन्दध्यात् । असंस्पर्शयन्नत्याक्रामति ।
यजमान एव प्राणन्दधाति । पाहि माँऽग्ने दुश्चरितादामा सुचरिते
भजेत्याह ।।46।।
330710
अग्निर्वाव पवित्रम् । वृजिनमनृतन्दुश्चरितम् । ऋजुकर्मः सत्यः सुचरितम्
। अग्निरेवैनंव्वृँजिनादनृताद्दुश्चरितात्पाति ।
ऋजुकर्मे सत्ये सुचरिते भजति । तस्मादेवमाशास्ते । आत्मनो गोपीथाय । शिरो वा एतद्यज्ञस्य
। यदाघारः । आत्मा ध्रुवा ।।47।।
330711
आघारमाघार्य ध्रुवाः समनक्ति । आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति । द्विस्समनक्ति
। द्वौ हि प्राणापानौ । तदाहुः । त्रिरेव
समञ्ज्यात् । त्रिधातु हि शिर इति । शिर इवैतद्यज्ञस्य । अथो त्रयो वै प्राणाः ।
प्राणानेवास्मिन्दधाति । मखस्य शिरोसि सञ्ज्योतिषा
ज्योतिरङ्क्तामित्याह । ज्योतिरेवास्मा उपरिष्टाद्दधाति । सुवर्गस्य लोकस्यानुख्यात्यै ।।48।।
330700
परिदधाति प्राणन्दधाति हि यज्ञो घारयति नम इत्याह पश्चाद्वीर्याणीत्याह भा इत्याह
भजेत्याह ध्रुवैवास्मिन्दधाति त्रीणि च ।।7।।
330801
धिष्णिया वा एते न्युप्यन्ते । यद्ब्रह्मा । यद्धोता । यदध्वर्युः । यदग्नीत् ।

यद्यज॑मानः । तान् यद॑न्तरे॒यात् । यज॑मानस्य
प्रा॒णान्थ्सङ्क॑र्॒षेत् । प्र॒मायु॑कस्स्यात् । पु॒रो॒डाश॑मप॒गृह्य॒ सञ्च॑रत्यध्व॒र्युः ।।49।।
330802
यज॑मानायै॒व तल्लो॒कः शिꣳ॑षति । नास्य॑ प्रा॒णान्थ्सङ्क॑र्॒षति । न प्र॒मायु॑को भवति । पु॒रस्ता॑त्
प्र॒त्यङ्ङा॒सीन॑ः । इडा॑या॒
इडा॒माद॑धाति । हस्त्या॒ꣳ॒ होत्रे॑ । प॒शवो॒ वा इडा॑ । प॒शव॒ः पुरु॑षः । प॒शुष्वे॒व प॒शून्
प्रति॑ष्ठापयति । इडा॑यै॒ वा ए॒षा प्रजा॑तिः ।।50।।
330803
तां प्रजा॑ति॒य्यँज॑मा॒नोऽनु॒ प्र जा॑यते । द्विर॒ङ्गुला॑वनक्ति॒ पर्व॑णोः । द्वि॒पाद्यज॑मान॒ः
प्रति॑ष्ठित्यै । स॒कृदु॒प॑स्तृणाति । द्विराद॑धाति ।
स॒कृद॒भिघा॑रयति । च॒तुस्सं॒प॑द्यते । च॒त्वारि॒ वै प॒शो॒ः प्र॑ति॒ष्ठाना॑नि । यावा॑ने॒व प॒शुः । तमुप॑ह्वयते
।।51।।
330804
मुख॑मिव॒ प्रत्युप॑ह्वयेत । सं॒मु॒खाने॒व प॒शूनुप॑ह्वयते । प॒शवो॒ वा इडा॑ । तस्मा॒थ्साऽन्वा॒रभ्या॑
। अ॒ध्व॒र्युणा॑ च॒ यज॑मानेन च ।
उप॑हूत॒ः पशु॒मान॑सा॒नीत्या॑ह । उप॒ ह्येन॑ौ॒ ह्वय॑ते॒ होता॑ । इडा॑यै दे॒वता॑नामुपह॒वे ।
उप॑हूत॒ः पशु॒मान्भ॑वति । य ए॒वंव्वेद॑ ।।52।।
330805
याव्वैँ हस्त्या॒मिडा॑मा॒दधा॑ति । वा॒चस्सा भा॑ग॒धेय॑म् । यामु॑प॒ह्वय॑ते । प्रा॒णाना॒ꣳ॒
सा । वाचं॑ञ्चै॒व प्रा॒णाꣳश्चाव॑रुन्धे । अथ॒ वा
ए॒तर्ह्युप॑हूताया॒मिडा॑याम् । पु॒रो॒डाश॑स्यै॒व ब॑र्॒हि॒षदो॑ मीमा॒ꣳ॒सा । यज॑मानन्दे॒वा
अ॑ब्रुवन् । ह॒विर्नो॑ निर्व॒पेति॑ । नाहम॑भा॒गो निर्व॑फ्स्यामीत्य॑ब्रवीत् ।।53।।
330806
न मया॑ऽभा॒गयाऽनु॑वख्ष्य॒थेति॒ वाग॑ब्रवीत् । नाहम॑भा॒गा पु॑रोनुवा॒क्या॑ भविष्यामीति॑ पुरोनुवा॒क्या॑ ।
नाहम॑भा॒गा या॒ज्या॑
भविष्या॒मीति॑ या॒ज्या॑ । न मया॑ऽभा॒गेन॒ वष॑ड्करिष्य॒थेति॑ वषट्का॒रः । यद्य॑जमानभा॒गन्नि॒धाय॑
पु॒रो॒डाश॑ं बर्॒हि॒षद॑ङ्करोति॑ । ताने॒व तद्भा॒गिन॒ः करोति ।
च॒तु॒र्धा क॑रोति । चत॑स्रो॒ दिश॑ः । दि॒ख्ष्वे॑व प्रति॑तिष्ठति । ब॒र्॒हि॒षद॑ङ्करोति ।।54।।
330807
यज॑मानो॒ वै पु॑रो॒डाश॑ः । प्र॒जा ब॒र्॒हिः । यज॑मानमे॒व प्र॒जासु॒ प्रति॑ष्ठापयति
। तस्मा॑दु॒स्थाऽन्या॒ः प्र॒जा॒ः प्र॑ति॒तिष्ठ॑न्ति । मा॒ꣳ॒सेना॒न्याः । अथो॒ खल्वा॑हुः ।

दक्षि॑णा॒ वा ए॒ता ह॑विर्य॒ज्ञस्या॑न्तर्वे॒द्यव॑रुध्यन्ते ।

यत्पु॑रो॒डाशं॑ बर्॒हि॒षद॑ङ्क॒रोतीति॑ । च॒तु॒र्धा क॑रोति । च॒त्वारो॒ ह्ये॑ते ह॑विर्य॒ज्ञस्य॒र्त्विज॑ः ।।55।।

330808

ब्र॒ह्मा होता॑ऽध्व॒र्युर॒ग्नीत् । तम॒भिमृ॑शेत् । इ॒दं ब्र॒ह्मण॑ः । इ॒दꣳ होतु॑ः ।

इ॒दम॑ ध्व॒र्योः । इ॒दम॒ग्नीध॒ इति॑ । यथै॒वादस्सौ॒म्ये॑ऽध्व॒रे ।

आ॒देश॑मृ॒त्विग्भ्यो॒ दक्षि॑णा नी॒यन्ते॑ । ता॒दृग॒ेव तत् । अ॒ग्नीधे॑ प्रथ॒मायाद॑धाति ।।56।।

330809

अ॒ग्निमु॑ख॒ा ह्यृद्धि॑ः । अ॒ग्निमु॑खामे॒वर्द्धिय्यँ॑जमान ऋध्नोति । स॒कृदु॑प॒स्तीर्य॒

द्विरा॒दध॑त् । उ॒प॒स्तीर्य॒ द्विर॒भिघा॑रयति । षट्थ्संप॑द्यन्ते ।

षड्वा ऋ॒तव॑ः । ऋ॒तूने॒व प्री॑णाति । वे॒देन॑ ब्र॒ह्मणे॑ ब्रह्मभ॒ागं परि॑हरति । प्रा॒जा॒प॒त्यो

वै वे॒दः । प्रा॒जा॒प॒त्यो ब्र॒ह्मा ।।57।।

330810

स॒वि॒ता य॒ज्ञस्य॒ प्रसू॑त्यै । अथ॒ काम॑म॒न्येन॑ । तत॒ो होत्रे॑ । मध्य॒व्वाँ ए॒तद्य॒ज्ञस्य॑

। यद्धोता॑ । म॒ध्य॒त ए॒व य॒ज्ञं प्री॑णाति ।

अथा॑ध्व॒र्यवे॑ । प्र॒ति॒ष्ठा वा ए॒षा य॒ज्ञस्य॑ । यद॑ध्व॒र्युः । तस्मा॑द्धविर्य॒ज्ञस्यै॒ताम॒ेवावृ॒तम॒नु ।।58।।

330811

अ॒न्या दक्षि॑णा नीयन्ते । य॒ज्ञस्य॒ प्रति॑ष्ठित्यै । अ॒ग्निम॑ग्नीध्स॒कृथ्स॑कृ॒थ्संमृ॒ड्ढीत्या॑ह

। परा॑ङिव॒ ह्ये॑तर्हि॑ य॒ज्ञः । इ॒षि॒ता दैव्या॒

होता॑र॒ इत्या॑ह । इ॒षि॒तꣳ हि कर्म॑ क्रि॒यते॑। भ॒द्रवाच्या॑य॒ प्रेषि॑त॒ो मानु॑षस्सूक्तव॒ाकाय॑

सू॒क्ता ब्रू॒हीत्या॑ह । आ॒शिष॑मे॒वैतामाशा॑स्ते । स्व॒गा दैव्या॒ होतृ॑भ्य॒

इत्या॑ह । य॒ज्ञमे॒व तथ्स्व॒गा क॑रोति । स्व॒स्तिर्मा॑नु॒षेभ्य॒ इत्या॑ह । आ॒शिष॑मे॒वैतामा शा॑स्ते

। श॒य्योर्ब्रू॒हीत्या॑ह । श॒य्युँमे॒व बा॑र्॒हस्प॒त्यं भा॑ग॒धेये॑न॒

सम॑र्धयति ।।59।।

330800

च॒र॒त्य॒ध्व॒र्युꣳ प्रजा॑तिर्ह्वयत॒े वेदा॑ब्रवीद्बर्॒हि॒षद॑ङ्क॒रोत्यृ॒त्विजो॑ दधाति ब्र॒ह्माऽनु॑करोति च॒त्वारि॑ च ।।8।।

330901

अथ॒ स्रुचा॑वनुष्टु॒ग्भ्या॒व्वाँज॑वतीभ्या॒व्व्यूँ॑हति । प्र॒ति॒ष्ठा वा अ॑नु॒ष्टुक् ।

अन्न॒व्वाँज॒ः प्रति॑ष्ठित्यै । अ॒न्नाद्य॒स्याव॑रुद्ध्यै ।

प्राची॑ञ्जु॒हूमू॑हति । जा॒ताने॒व भ्रातृ॑व्या॒न्प्रणु॑दते । प्र॒तीची॑मुप॒भृत॑म् । ज॒नि॒ष्यमा॑णाने॒व

प्रति॑नुदते । सविषू॑च ए॒वापो॒ह्य॑ स॒पत्ना॒न् यज॑मानः ।

अ॒स्मिल्लो॒ँके प्रति॑तिष्ठति ।।60।।

330902

द्वाभ्याम् । द्विप्रतिष्ठो हि । वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वेत्याह
। यथायजुरेवैतत् । स्रुख्षु प्रस्तरमनक्ति । इमे वै
लोकास्स्रुचः । यजमानः प्रस्तरः । यजमानमेव तेजसाऽनक्ति । त्रेधाऽनक्ति । त्रय इमे लोकाः
।।61।।
330903
एभ्य एवैनंल्लोकेभ्योऽनक्ति । अभिपूर्वमनक्ति । अभिपूर्वमेव यजमानन्तेजसाऽनक्ति
। अक्तꣳ रिहाणा इत्याह । तेजो वा
आज्यम् । यजमानः प्रस्तरः । यजमानमेव तेजसाऽनक्ति । वियन्तु वय इत्याह । वय एवैनङ्कृत्वा
। सुवर्गंल्लोकङ्गमयति ।।62।।
330904
प्रजाय्योनिं मा निर्मृख्षमित्याह । प्रजायै गोपीथाय । आप्यायन्तामाप ओषधय
इत्याह । आप एवौषधीरा प्यायायति ।
मरुतां पृषतयस्स्थेत्याह । मरुतो वै वृष्ट्या ईशते । वृष्टिमेवावरुन्धे । दिवङ्गच्छ
ततो नो वृष्टिमेरयेत्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे ।।63।।
330905
यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्यायुर्मीयते । आयुष्पा अग्नेऽस्यायुर्मे
पाहीत्याह । आयुरेवात्मन्धत्ते । यावद्वा
अध्वर्युः प्रस्तरं प्रहरति । तावदस्य चख्षुर्मीयते । चख्षुष्पा अग्नेऽसि चख्षुर्मे
पाहीत्याह । चख्षुरेवात्मन्धत्ते । ध्रुवाऽसीत्याह प्रतिष्ठित्यै । यं
परिधिं पर्यधत्था इत्याह ।।64।।
330906
यथायजुरेवैतत् । अग्ने देव पणिभिर्वीयमाण इत्याह । अग्नय एवैनञ्जुष्टङ्करोति
। तन्त एतमनु जोषं भरामीत्याह ।
सजातानेवास्मा अनुकान्करोति । नेदेष त्वदपचेदयाता इत्याहानुख्यात्यै । यज्ञस्य
पाथ उप समितमित्याह । भूमानमेवोपैति । परिधीन्प्रहरति ।
यज्ञस्य समिष्ट्यै ।।65।।
330907
स्रुचौ सं प्रस्रावयति । यदेव तत्र क्रूरम् । तत्तेन शमयति । जुह्वामुपभृतम्
। यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् ।
यजमानायैव भ्रातृव्यमुपस्तिङ्करोति । सस्रावभागास्स्थेत्याह । वसवो वै रुद्रा
आदित्यास्सस्रावभागाः । तेषान्तद्भागधेयम् ।।66।।

330908
तानेव तेन प्रीणाति । वैश्वदेव्यर्चा । एते हि विश्वे देवाः । त्रिष्टुग्भवति
। इन्द्रियव्वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति ।
अग्नेर्वामपन्नगृहस्य सदसि सादयामीत्याह । इयव्वाँ अग्निरपन्नगृहः । अस्या एवैने
सदने सादयति । सुम्नाय सुम्निनी सुम्ने मा धत्तमित्याह ।।67।।
330909
प्रजा वै पशवस्सुम्नम् । प्रजामेव पशूनात्मन्धत्ते । धुरि धुर्यौ पातमित्याह
। जायापत्योर्गोपीथाय । अग्नेऽदब्धायोऽशीततनो
इत्याह । यथायजुरेवैतत् । पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि
दुरद्मन्यै पाहि दुश्चरितादित्याह । आशिषमेवैतामाशास्ते ।
अविषन्नः पितुङ्कृणु सुषदा योनि स्वाहेतीध्मसव्वँश्चनान्यन्वाहार्यपचनेऽभ्याधाय
फलीकरणहोमञ्जुहोति । अतिरिक्तानि वा इध्मसव्वँश्चनानि ।।68।।
330910
अतिरिक्ताः फलीकरणाः । अतिरिक्तमाज्योच्छेषणम् । अतिरिक्त एवातिरिक्तन्दधाति । अथो
अतिरिक्तेनैवातिरिक्तमाप्त्वाऽ
वरुन्धे । वेदिर्देवेभ्यो निलायत । ताव्वेदेनान्वविन्दन् । वेदेन वेदिव्विविदुः
पृथिवीम् । सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तः ।
ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिꣳ संमार्ष्ट्यनुवित्त्यै ।।69।।
330911
अथो यद्वेदश्च वेदिश्च भवतः । मिथुनत्वाय प्रजात्यै । प्रजापतेर्वा एतानि
श्मश्रूणि । यद्वेदः । पत्निया उपस्थ आस्यति ।
मिथुनमेव करोति । विन्दते प्रजाम् । वेदꣳ होताऽऽहवनीयात्स्तृणन्नेति । यज्ञमेव
तत्सन्तनोत्योत्तरस्मादर्धमासात् । तꣳ सन्ततमुत्तरेऽर्धमास
आलभते ।।70।।
330912
तङ्कालेकाल आगते यजते । ब्रह्मवादिनो वदन्ति । स त्वा अध्वर्युस्स्यात् । यो
यतो यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयतीति ।
वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते । देवा गातुविदो गातुव्वित्त्वा गातुमितेत्याह
। यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति । प्रतितिष्ठति प्रजया
पशुभिर्यजमानः ।।71।।
331000

ति॒ष्ठ॒तीमे ल॒ोका ग॑मयति॒ द्यौर्वृष्टिं॑मे॒वाव॑रुन्धे प॒र्यर्ध॑त्था॒ इत्या॑ह॒ समि॑ष्ट्यै
भाग॒धेय॑न्धत्त॒मित्या॑ह॒ वा इ॑ध्मस॒व्वृँश्चं॑न॒ान्यन॑ुवित्त्यै लभत॒े यज॑मानः ।।9।।
331001
यो वा अय॑थादेवतय्यँ॒ज्ञमु॑प॒चरति॑ । आ द॒ेवता॑भ्यो वृश्च्यते । पापी॑यान्भवति । यो य॑थादेव॒तम् । न
द॒ेवता॑भ्य॒ आव॑ृश्च्यते ।
वसी॑यान्भवति । व॒ार॒ुणो वै पाश॑ः । इ॒मव्विँ॑ष्या॑मि॒ वर॑ुणस्य॒ पाश॒मित्या॑ह । व॒र॒ुण॒पा॒शाद॒ेवैनां॑
मुञ्चति । स॒वि॒तृप्र॑सूतो यथादेव॒तम् ।।72।।
331002
न द॒ेवता॑भ्य॒ आव॑ृश्च्यते । वसी॑यान्भवति । धा॒तुश्च॒ योनौ॑ सुकृ॒तस्य॑ ल॒ोक इत्या॑ह
। अ॒ग्निर्वै॑ ध॒ाता । पुण्य॒ङ्कर्म॑ सुकृ॒तस्य॑ ल॒ोकः ।
अ॒ग्निर॒ेवैना॑न्ध॒ाता । पुण्य॒े कर्म॑णि सुकृ॒तस्य॑ ल॒ोके द॑धाति । स्य॒ोनं मे॑ स॒ह पत्या॑
कर॒ोमीत्या॑ह । आ॒त्मन॑श्च॒ यज॑मानस्य॒ चाना॑र्त्यै स॒न्त्वाय॑ । समायु॑ष॒ा
सं प्र॒जयेत्या॑ह ।।73।।
331003
आ॒शिष॑मे॒वैतामाशा॑स्ते पूर्णप॒ात्रे । अ॒न्त॒तो॑ऽनुष्टुभा॑ । चतु॑ष्प॒द्वा ए॒तच्छन्द॒ः
प्रति॑ष्ठितं॒ पत्नि॑यै पूर्णप॒ात्रे भ॑वति । अ॒स्मिल्ँ॒लोके
प्रति॑तिष्ठानीति॑ । अ॒स्मिन्न॒ेव ल॒ोके प्रति॑तिष्ठति । अथ॒ो वाग्वा अ॑नु॒ष्टुक् । वाङ्मि॑थ॒ुनम्
। आप॒ो रेत॑ः प्र॒जन॑नम् । ए॒तस्म॒ाद्वै मि॑थ॒ुनाद्विद्योत॑मान
स्स्त॒नय॑न्वर्षति । रेत॑स्सि॒ञ्चन्न् ।।74।।
331004
प्र॒जाः प्र॑ज॒नयन्न् । यद्वै य॒ज्ञस्य॒ ब्रह्म॑णा युज्यते॑ । ब्रह्म॑ण॒ा वै तस्य॑
विम॒ोकः । अ॒द्भिस्शान्ति॑ः । विमु॑क्तव्वाँ ए॒तर्ह॒ि योक्त्रं॒
ब्रह्म॑णा । आ॒दायै॑न॒त्पत्नी॑ स॒हाप॒ उप॑गृह्णीत॒े शान्त्यै॑ । अ॒ञ्जलौ पू॑र्णप॒ात्रमान॑यति
। रेत॑ ए॒वास्यां॑ प्र॒जान्द॑धाति । प्र॒जय॒ा हि म॑नु॒ष्य॑ः पूर्णः । मुख॒व्विँमृ॑ष्टे ।
अ॒व॒भृथस्यै॒व रूपङ्कृ॒त्वोत्ति॑ष्ठति ।।75।।
स॒वि॒तृप्र॑सूतो यथादेव॒तं प्र॒जयेत्या॑ह सि॒ञ्चन्मृ॑ष्ट॒ एक॑ञ्च ।।10।।
331101
प॒रि॒वे॒षो वा ए॒ष वन॒स्पती॑नाम् । यद॑ुपवे॒षः । य ए॒वव्वेँद॑ । वि॒न्दते॑ परिवे॒ष्टार॑म्
। तमु॑त्क॒ुरे । यन्द॒ेवा म॑नु॒ष्ये॑षु ।
उ॒प॒वे॒षमधा॑रयन्न् । ये अ॒स्मदप॑ चेतसः । ताऩ॒स्मभ्य॑मि॒हा कु॑रु । उप॑वे॒षोप॑विड्ढि नः ।।76।।
331102

प्र॒जां पु॒ष्टि॒मथो॒ धन᳚म् । द्वि॒पदो॑ न॒श्चतु॑ष्पदः । ध्रु॒वानन॑पगान्कु॒र्विति॑ पु॒रस्ता᳚त्प्र॒त्यञ्च॒मुप॑
गूहति । तस्मा᳚त्पु॒रस्ता᳚त्प्र॒त्यञ्च॒श्शूद्रा
अव॑स्यन्ति । स्थ॒वि॒म॒त उप॑गूहति । अप्र॑तिवादिन ए॒वैना॒᳚न्कुरुते । धृष्टि॒र्वा॑ उप॑वे॒षः । शु॒चतो॑
वज्रो॒ ब्रह्म॑णा॒ सꣳशि॑तः । योप॑वे॒षे शुक् ।
साऽमुमृ॑च्छतु॒ यन्द्वि॒ष्म इति॑ ।।77।।
331103
अथा᳚स्मै नाम॒ गृह्य॒ प्रह॑रति । निर॒मुन्नु॑द॒ ओक॑सः । स॒पत्नो॒ यः पृ॑त॒न्यति॑ ।
नि॒र्बा॒ध्ये॑न ह॒विषा᳚ । इन्द्र॑ ए॒णं॒ परा॑शरीत् । इ॒हि
ति॒स्रः प॑रा॒वतः॑ । इ॒हि पञ्च॒ जना॒ꣳ अति॑ । इ॒हि ति॒स्रोऽति॑रोच॒नायाव॑त् । सूर्यो॒
अस॑द्दि॒वि । प॒र॒मान्त्वा॑ पर॒ावत᳚म् ।।78।।
331104
इन्द्रो॑ नयतु वृत्र॒हा । यतो॒ न पु॒नरार्य॑सि । श॒श्व॒तीभ्य॒स्समा᳚भ्य॒ इति॑ । त्रि॒वृद्वा
ए॒ष वज्रो॒ ब्रह्म॑णा॒ सꣳशि॑तः । शु॒चैवैनँ॒᳚व्वि॒ध्वा ।
ए॒भ्यो लो॒केभ्यो॑ नि॒र्णुद्य॑ । वज्रे॑ण॒ ब्रह्म॑णा स्तृणुते । ह॒तो॑ऽसावव॑धिष्मा॒मुमित्या॑ह॒
स्तृत्यै᳚ । यन्द्वि॒ष्यात्तन्ध्या॑येत् । शु॒चैवैन॑मर्पयति ।।79।।
331100
नो॒ द्वि॒ष्म इति॑ प॒रावत॑मर्पयति ।।11।।
330000
प्रत्यु॑ष्टन्दि॒वश्शिल्प॒मय॑ज्ञो घृतञ्च॑ देवासु॒रास्स ए॒तमिन्द्र आपो॑ देवीर॒ग्निना॒ धिष्णि॑या॒
अथ॒ स्रुचौ॒ यो वा अय॑थादेवतं परिवे॒षो वा एका॑दश ।।11।।
प्रत्यु॑ष्ट॒मय॑ज्ञ ए॒षा हि विश्वे॑षान्दे॒वाना॑मू॒र्जा पृ॑थि॒वीमथो॒ रख्ष॑सा॒न्तां प्रजा॑ति॒न्द्राभ्या॒न्तङ्का॒लेका॑ले॒
नव॑सप्ततिः ।।79।।
प्रत्यु॑ष्टमर्पयति।।
हरिः॑ ओम् ।। श्रीकृष्णार्पणमस्तु ।।
तृतीयप्रपाठकस्समाप्तः

340000

चतुर्थप्रपाठक प्रारम्भः हरिःओम्।।

340101

ब्रह्मणे ब्राह्मणमालंभते। ख्षत्रायराजन्यम्।

मरुद्भ्योवैश्यम्। तपसेशूद्रम्। तमसेतस्करम्।

नारकाय वीरहणम्। पाप्मनेक्लीबम्। आक्रयायायोगूम्।

कामायपुंश्चलूम्। अतिक्रुष्टायमागधम्।।1।।

340201

गीताय सूतम्। नृत्तायशैलूषम्। धर्माय

सभाचरम्। नर्मायरेभम्। नरिष्ठायैभीमलम्। हसाय

कारिम्। आनन्दाय स्त्रीषखम्। प्रमुदेकुमारी पुत्रम्।

मेधायै रथकारम्। धैर्यायतख्षाणम्।।2।।

340301

श्रमाय कौलालम्। मायायै कार्मारम्।

रूपायम णिकारम् । शुभेवपम् । शरव्याया इषुकारम्।

हेत्यैधन्वकारम्। कर्मणेज्याकारम्। दिष्टायरज्जुसर्गम्।

मृत्यवेमृगयुम्। अन्तकायश्वनितम् ।।3।।

340401

सन्धये जारम्। गेहायोपपतिम्।

निर् ऋत्यै परिवित्तम्। आर्त्यै परिविविदानम्। अराध्यै

दिधिषूपतिम्। पवित्राय भिषजम्। प्रज्ञानाय नख्षत्रदर् शम्।

निष्कृत्यै पेशस्कारीम्। बलायोपदाम्। वर्णायानूरुधम्।।4।।

340501

नदीभ्यः पौञ्जिष्टम्। ऋख्षीकाभ्यो नैषादम्। पुरुषव्याघ्राय दुर्मदम्।

प्रयुद्भ्यउन्मत्तम्। गन्धर्वाप्सराभ्यो व्रात्यम्।

सर्पदेवजनेभ्येऽप्रतिपदम्। अवेभ्यःकितवम्।

इर्यताया अकितवम्। पिशाचेभ्यो बिदलकारम्।

यातुधानेभ्यः कण्टककारम्।।5।।

340601

उथ्सादेभ्यःकुब्जम्। प्रमुदेवामनम्। द्वाभ्र्यस्स्रामम्।

स्वप्नायान्धम्। अधर्मायबधिरम्। संज्ञानायस्मरकारीम्।

प्रकामोद्यायोपसदम्। आशिख्षायैप्रश्निनम्।

।उ॒प॒शि॒क्षाया॑ अभिप्र॒श्नि॒नम्॑। म॒र्यादा॑यै प्रश्नविव॒ाकम्।।6।।
340701
ऋत्यै॑ स्ते॒नह॑दयम्। वैर॑हत्याय॒ पिशु॑नम्। विवि॑त्यैक्ष॒त्तार॑म्। औप॑द्रष्टाय
सङ्ग्रही॒तार॑म्। बला॑यानुच॒रम्। भूम्ने॑परिष्क॒न्दम्। प्रि॒याय॑ प्रियवा॒दिन॑म्।
अरि॑ष्ट्याअश्वसा॒दम्। मेधा॑यवासःपल्पू॒लीम्। प्रका॒माय॑ रजयि॒त्रीम्।।7।।
340801
भायै॑ दार्वा॑हा॒रम्। प्र॒भाया॑ अग्न्येधम्। नाक॑स्य पृष्ठाया॑भिषे॒क्तार॑म्।
ब्र॒ध्नस्य॑ वि॒ष्टपा॑य पात्रनिर्णे॒गम्। दे॒व॒लो॒काय॑ पेशि॒तार॑म्।
म॒नु॒ष्य॒लो॒काय॑ प्रकरि॒तार॑म्। सर्वे॑भ्यो॒लो॒केभ्य॑उपसे॒क्तार॑म्। अव॑र्त्यै
व॒धायो॑पमन्थि॒तार॑म्। सु॒व॒र्गाय॑ लो॒काय॑ भाग॒दुघ॑म्।
वर् षि॑ष्ठाय॒ नाका॑य परिवे॒ष्टार॑म्।।8।।
340901
अर्मे॑भ्यो हस्ति॒पम्। ज॒वाया॑श्व॒पम्। पुष्ट्यै॑गोपा॒लम्।
तेज॑सेऽजपा॒लम्। वी॒र्या॑याविपा॒लम्।
इरा॑यैकी॒नाश॑म्। की॒लाला॑य सुराका॒रम्। भ॒द्राय॑गृह॒पम्। श्रेय॑से
वि॒त्त॒धम्। अध्य॑क्षायानुक्ष॒त्तारम्॑।।9।।
341001
म॒न्यवे॑ऽयस्ता॒पम्। क्रोधा॑यनिसरम्। शोका॑याभिस॒रम्।
उ॒त्कू॒ल॒वि॒कू॒लाभ्या॑न्त्रि॒स्थिन॑म्। योगा॑य
यो॒क्तार॑म्। क्षेमा॑य विमो॒क्तार॑म्। वपु॑षेमानस्कृ॒तम्।
शीला॑ञ्जनीका॒रम्।निर् ऋ॑त्यै कोशका॒रीम्। य॒माया॒सूम् ।।10।।
341101
य॒म्यै॑ यम॒सूम्। अथ॑र्व॒भ्योऽव॑तोकाम्।
स॒व॒ँथ्स॒राय॑पर्या॒रिणी॑म्।परि॒व॒थ्स॒राया वि॑जाताम्।
इ॒दा॒व॒थ्स॒राया॑पस्कद्व॑रीम्।
इ॒द्व॒थ्स॒राया॒तीत्व॑वरीम्। व॒थ्स॒राय॒ विज॑र्जराम्।
स॒र्व॒न्थ्स॒राय॒पलि॑क्नीम्।
वना॑यवन॒पम्। अ॒न्यतो॑रण्यायदाव॒पम्।।11।।
341201
सरो॑भ्योधैव॒रम्। वेश॑न्ताभ्योदाश॑म्। उ॒प॒स्थाव॑रीभ्योबैन्द॑म्।
न॒ड्व॒लाभ्य॑श्शौष्क॒लम्। पा॒र्या॑यकैव॒र्तम्। अ॒वा॒र्या॑यमार्गा॒रम्।

तीर्थेभ्य॑आन्दम्। विष॑मेभ्योमैनालम्। स्वने॑भ्य॒ःपर्न॑कम्।
गुहा॑भ्य॒ःकिरा॑तम्।सानु॑भ्यो॒जम्भ॑कम्। पर्व॑तेभ्य॒ः किंपू॑रुषम्।।12।।
341301
प्र॒ति॒श्रुत्का॑याऋतु॒लम्। घोषा॑यभ॒षम्।
अन्ता॑य बहुवा॒दिनं॑। अ॒न॒न्ताय॒मूकं॑। मह॑सेवीणावा॒दम्।
क्रोशा॑यतूणव॒ध्मम्। आ॒क्र॒न्दा॑य दुन्दुभ्याघा॒तम्।
अ॒व॒र॒स्प॒रा॑य शङ्ख॒ध्मम्। ऋ॒भुभ्यो॑जिनसन्धा॒यम्।
सा॒ध्येभ्य॑श्चर्म॒म्णम्। ।।13।।
341401
बी॒भ॒थ्सायै॑ पौल्क॒सम्। भूत्यै॑जागर॒णम्। अभू॑त्यैस्स्वप॒नम्। तु॒लायै॑
वाणि॒जम्। पर्णा॑यहिरण्यका॒रम्। विश्वे॑भ्योदे॒वेभ्य॑स्सिध्म॒लम्।
प॒श्चाद्दो॒षाय॑ ग्ल॒ावम्। ऋत्यै॑जनवा॒दिनं॑। व्यृद्ध्या अपग॒ल्भम्। स॒ꣳश॒राय॑
प्र॒च्छि॒दं॑म्।।14।।
341501
हसा॑यपुश्च॒लूमाल॑भते। वी॒णा॒वा॒दङ्गण॑कङ्गी॒ताय॑। याद॑सेशाबु॒ल्याम्।
न॒र्माय॑भद्रव॒तीम्। तू॒ण॒व॒ध्मङ्ग्रा॑म॒ण्यं॑ पाणिसङ्घातन्नृ॒त्ताय॑।
मोदा॑यानु॒क्रोश॑कम्। आ॒न॒न्दाय॑ तल॒वम्।।15।।
341601
अ॒ख्य॒रा॒जाय॑ कित॒वम्। कृ॒ताय॑सभा॒विनं॑म्। त्रेता॑या आदिनवद॒र्॒ शम्।
द्वाप॒राय॑ बहि॒स्सदं॑। कल॑ये सभास्था॒णुम्। दु॒ष्कृताय॑ च॒रका॑चार्यम्। अध्व॑ने
ब्रह्मचा॒रिणं॑। पि॒शा॒चेभ्य॑स्सैल॒गम्। पि॒पा॒सायै॑गोव्य॒च्छम्। निर्
ऋ॑त्यै गोघा॒तम्। ख्यु॒धे गौ॑विकर्तम्। ख्यु॒त्तृ॒ष्णाभ्या॒न्तम्।
योगाँ॑व्वि॒कृन्त॑न्तंमा॒ꣳ संभिख्य॑मा उप॒तिष्ठ॑ते।।16।।
341701
भूम्यै॑ पीठस॒र्पिण॒माल॑भते। अ॒ग्नयेऽꣳ॑स॒लम्।
वा॒यवे॑चाण्डा॒लम्। अ॒न्तरि॑ख्याय वꣳशन॒र्तिनं॑। दि॒वे
ख॑ल॒तिम्। सूर्या॑य हर्य॒ख्यम्। च॒न्द्रम॑से मिर्मि॒रम्।
नख्य॑त्त्रेभ्य॒ःकि॒लासं॑। अह्ने॑ शु॒क्लं
पिं॑ङ्ग॒लम्। रात्रि॑यै कृ॒ष्णं पिं॑ङ्गा॒ख्यम्।।17।।
341801
वा॒चेपुरु॑ष॒मालभ॑ते। प्रा॒णम॑पा॒नव्याँ॑नमुं॑दा॒नꣳ स॑मा॒नन्तान् वा॒यवे॑।

सूर्या॑य॒ चख्षु॒राल॑भते। मन॑श्च॒न्द्रम॑से। दि॒ग्भ्यश्श्रोत्र॑ं᳚। प्र॒जाप॑तये॒

पु॒रु॑षम्।।18।।

341901

अथै॒तान॒रूपेभ्य॒ अल॑भते। अति॑ह्रस्व॒मति॑दीर्घम्। अतिकृ॑श॒मत्य॑ꣳसलम्।

अति॑शुक्लमति॑कृष्णम्। अति॑श्लख्ष्ण॒मति॑लोमशम्। अति॑किरि॒टमति॑दन्तुरम्।

अति॑मिर्मिर॒मति॑मेमिषम्। आ॒शायै॑ जा॒मिम्। प्र॒ती॒ख्षायै॑कु॒मा॒रीम्।।19।।

340000

ब्रह्म॑णे गी॒ताय॒ श्रमा॑य स॒न्धये॑ न॒दीभ्य॑ उथ्सा॒देभ्य॒ ऋत्यै॒भाया॒

अर्मे᳚भ्योम॒न्यवे॑ य॒म्यै॑दश॑दश॒सरो᳚भ्यो॒ द्वाद॑श प्रति॒श्रुत्का॑यै

बीभ॒थ्साये॒ दश॑दश॒हसा॑य स॒प्ताख्ष॑ रा॒जाय॒ त्रयो॑दश॒भूम्यै॒

दश॑वा॒चे षडथ॒नवैका॒न्न विꣳ॑शतिः।।19।।

ब्रह्म॑णेय॒म्यै॑ नव॑दश।।19।। ब्रह्म॑णेकु॒मा॒रीम्।।

हरि॑ः ओम्। श्रीकृष्णार्पणमस्तु।। चतुर्थप्रपाठकस्समाप्तः।।

350000

तृतीयाष्टके पञ्चम प्रपाठकप्रारम्भः । हरिःओम्।

350101

स॒त्यं प्रप॑द्ये। ऋ॒तं प्रप॑द्ये। अ॒मृ॒तं प्रप॑द्ये। प्र॒जाप॑तेः

प्रि॒यान्त॒नु॒व॒मना॑र्तां॒ प्रप॑द्ये। इ॒दम॒हं प॑ञ्चद॒शेन॒ वज्रे॑ण।

द्वि॒षन्तं॒ भ्रातृ॑व्य॒मव॑ क्रामामि। यो॑ऽस्मान्द्वेष्टि॑। यञ्च॑

व॒यन्द्वि॒ष्मः। भूर्भुव॒स्सुव॑ः। हिम्।।1।।

350100

स॒त्यन्दश॑।।1।।

350201

प्र व॒ो वाजा॑ अ॒भिद्य॑वः। ह॒विष्म॑न्तो घृ॒ताच्या॑। दे॒वाञ्जि॑गाति

सुम्न॒युः। अग्न॒ आया॑हि व॒ीतये॑। गृ॒णा॒नो ह॒व्यदा॑तये। नि होता॑

सथ्सि ब॒र्॒हिषि॑। तन्त्वा॑ स॒मिद्भि॑रङ्गिरः। घृ॒तेन॑ वर्धयामसि।

बृ॒हच्छो॑चा यविष्ठ्य। स न॑ः पृ॒थुश्श्र॒वाय्य॑म्।।2।।

350202

अच्छा॑ देव विवाससि। बृ॒हद॑ग्ने सु॒वीर्य॑म्। ई॒डेन्यो॑

नम॒स्य॑स्ति॒रः। तमा॑ꣳसि दर्॒श॒तः। सम॒ग्निरि॑ध्यते॒

वृषा॑। वृषो॑ अ॒ग्निस्समि॑ध्यते। अश्वो॒ न दे॑व॒वाह॑नः। तꣳ ह॒विष्म॑न्त

ईडते। वृष॑णन्त्वा व॒यवृ॑षन्न्। वृषा॑ण॒स्समि॑धीमहि।।3।।

350203

अग्ने॒ दीद्य॑तं बृ॒हत्। अ॒ग्निन्दू॒तवृ॑णीमहे। होता॑रव्वि॒श्ववे॑दसम्। अ॒स्य

य॒ज्ञस्य॑ सु॒क्रतु॑म् । स॒मि॒ध्यमा॑नो अध्व॒रे। अ॒ग्निः पा॑व॒क ईड्य॑ः।

शो॒चिष्के॑श॒स्तमी॑महे। समि॑द्धो अग्न आहुत। दे॒वान् य॑क्षि स्वध्वर।

त्वꣳ हि ह॑व्य॒वाडसि॑। आ जु॑होत दुव॒स्यत॑। अ॒ग्निं प्र॑य॒त्य॑ध्व॒रे। वृ॒णीध्वꣳ ह॑व्य॒वाह॑नम्।

त्ववँ॑रुण उ॒त मि॒त्रो अ॑ग्ने। त्वावँ॑र्धन्ति म॒तिभि॒र्वसि॑ष्ठाः। त्वे वसु॑ सुषण॒नानि॑ सन्तु।

यू॒यं पा॑त स्व॒स्तिभि॒स्सदा॑ नः।।4।।

350200

श्र॒वाय्य॑मिधीम॒ह्यसि॑ स॒प्त च॑।।2।।

350301

अग्ने॑ म॒हाꣳ अ॑सि ब्राह्मणभारत। अस॒ावसौ॑। दे॒वेद्धो॒ मन्वि॑द्धः।

ऋषि॑ष्टु॒तो॒ विप्रा॑नुमदितः। क॒वि॒श॒स्तो ब्रह्म॑सꣳशितो घृ॒ताह॑वनः।

प्र॒णीर्य॒ज्ञाना॑म्। र॒थीर॑ध्व॒राणा॑म्। अ॒तू॒र्तो॒ होता॑।

तूर्णिर्‌हव्य॒वाट्। आस्पात्रञ्जु॒हूर्दे॒वानाँम्।।5।।
350302
च॒म॒सो दे॑व॒पानः॑। अ॒राः॑ इ॑वाग्ने ने॒मिर्दे॒वाः॑ स्त्वं प॑रि॒भूर॑सि।
आ व॑ह दे॒वान् यज॑मानाय। अ॒ग्निम॑ग्न आव॑ह। सोम॒माव॑ह। अ॒ग्निमाव॑ह।
प्र॒जाप॑ति॒माव॑ह। अ॒ग्नीषोम॒ावाव॑ह। इ॒न्द्राग्नी आव॑ह।
इन्द्र॒माव॑ह।। म॒हे॒न्द्रमाव॑ह। दे॒वाः॑ आँज्य॒पाः॑ आव॑ह। अ॒ग्निः॑
हो॒त्रायाव॑ह। स्वं म॑हि॒मान॒माव॑ह। आ चाँग्ने दे॒वान् व॑ह। सु॒यजा॑
च यज जातवेदः।।6।।
350300
दे॒वाना॒मिन्द्र॒माव॑ह॒ षट् च॑ ।।3।।
350401
अ॒ग्निर् होता॒ वेत्व॒ग्निः। हो॒त्रँव्वेँत्तु प्रावि॒त्रम्। स्मो व॒यम्।
सा॒धु ते॑ यजमानदे॒वताँ। घृतव॑तीमध्वर्यो॒ स्रुच॒मास्य॑स्व।
दे॒वा॒युवँ॑व्वि॒श्ववा॑राम्।
ईडा॑महै दे॒वाः॑ ई॒डेन्यान्। न॒म॒स्याम॑ नम॒स्यान्। यजा॑म
य॒ज्ञियान्।।7।।
350400
अ॒ग्निर्‌होता॒ नव॑।।4।।
350501
स॒मिधो॑ अग्न॒ आज्य॑स्य वियन्तु। तनू॒नपा॑दग्न॒ आज्य॑स्य वेतु। इ॒डो अ॑ग्न
आज्य॑स्य वियन्तु। ब॒र्‌हिर॑ग्न॒ आज्य॑स्य वेतु। स्वाहा॒ऽग्निम्। स्वाहा॒ सोमँम्। स्वाहा॒ऽग्निम्।
स्वाहाँ प्र॒जाप॑तिम्। स्वाहा॒ऽग्नीषोमौँ। स्वाहेँन्द्रा॒ग्नी।। स्वाहेन्द्रँम्।
स्वाहा॑ मह॒ेन्द्रम्। स्वाहा॑ दे॒वाः॑ आँज्य॒पान्। स्वाहा॒ऽग्निः॑
हो॒त्राज्जु॒षा॒णाः। अग्न॒आज्य॑स्य वियन्तु।।8।।
350500
इ॒न्द्राग्नी पञ्च॑ च।।5।।
350601
अ॒ग्निर्वृ॒त्राणि॑ जङ्घनत्। द्र॒वि॒ण॒स्युर्वि॑प॒न्ययाँ।
समि॑द्धश्शु॒क्र आहु॑तः। जु॒षा॒णो अ॒ग्निराज्य॑स्य वेतु। त्वः॑ सोँमासि॒ सत्प॑तिः।
त्वः॑ राजो॒त वृ॑त्र॒हा। त्वं भ॒द्रो अ॑सि॒ क्रतुः॑। जु॒षा॒णस्सोम॒ आज्य॑स्य
ह॒विषो॑ वेतु। अ॒ग्निः॑ प्र॒त्नेन॒ जन्म॑ना। शुम्भा॑नस्त॒नुव॒ स्वाम्।
क॒विर्विप्रे॑ण वावृधे। जु॒षा॒णो अ॒ग्निराज्य॑स्य वेतु। सोम॑

गीर्भिष्ट्वा वयम्। वर्धयामो वचोविदः।
सुमृडीको न आविश। जुषाणस्सोम आज्यस्य हविषो वेतु।।9।।
350600
स्वाः षट् च।।6।।
350701
अग्निर्मूर्धादिवः ककुत्। पतिः पृथिव्या अयम्।
अपाः रेताꣳसि जिन्वति। भुवो यज्ञस्य रजसश्च नेता। यत्रा
नियुद्भिस्सचसे शिवाभिः।
दिवि मूर्धानन्दधिषे सुवर्षाम्। जिह्वामग्ने चकृषे हव्यवाहम्।
प्रजापते न त्वदेतान्यन्यः। विश्वा जातानि
परि ता बभूव। यत्कामास्ते जहुमस्तन्नो अस्तु।।10।।
350702
वय स्याम पतयो रयीणम्। स वेद पुत्रः पितरꣳ
स मातरम्। स सूनुर्भुवत्स भुवत्पुनर्मघः।
स द्यामौर्णोदन्तरिक्षꣳ स सुवः। स विश्वा भुवो अभवत्स
आभवत्। अग्नीषोमा सवेदसा।
सहूती वनतङ्गिरः। सन्देवत्रा बभूवथुः। युवमेतानि
दिवि रोचनानि। अग्निश्च सोम सक्रतू अधत्तम्।।11।।
350703
युवꣳ सिन्धूꣳ रभिशस्तेरवद्यात्।
अग्नीषोमावमुञ्चतङ्गृभीतान्। इन्द्राग्नी रोचना दिवः।
परि वाजेषु भूषथः। तद्वाञ्चेति प्रवीर्यम्।
श्ञथद्वृत्रमुत सनोति वाजम्।
इन्द्रा यो अग्नी सहुरी सपर्यात्।
इरज्यन्ता वसव्यस्य भूरेः।
सहस्तमा सहसा वाजयन्ता। एन्द्र सानसिꣳ रयिम्।।12।।
350704
सजित्वानꣳ सदासहम्। वर्षिष्ठमूतये भर। प्रससाहिषे पुरुहूत शत्रून्।
ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्रा भर दक्षिणेना
वसूनि। पतिस्सिन्धूनामसि रेवतीनाम्। महाꣳ इन्द्रो य ओजसा।
पर्जन्यो वृष्टिमाꣳ इव। स्तोमैर्वथ्सस्य

वावृधे। महाꣳ इन्द्रो नृवदाचर्षणिप्राः।।13।।
350704
उत द्विबर्हा अमिनस्सहोभिः। अस्मद्रियग्वावृधे वीर्याय।
उरुः पृथुस्सुकृतः कर्तृभिर्भूत्। पिप्रीहि देवाꣳ उशतो
यविष्ठ। विद्वाꣳ ऋतूꣳर् ऋतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने।
त्वꣳ होतॄणामस्यायजिष्ठः। अग्नि स्विष्टकृतम् । अयाडग्निरग्नेः प्रिया धामानि।
अयाट्थ्सोमस्य प्रिया धामानि।।14।।
350705
अयाडग्नेः प्रिया धामानि।
अयाट्प्रजापतेः प्रिया धामानि। अयाडग्नीषोमयोः प्रिया
धामानि। अयाडिन्द्राग्नियोः प्रिया धामानि। अयाडिन्द्रस्य
प्रिया धामानि। अयाण्महेन्द्रस्य प्रिया धामानि। अयाड्
देवानामाज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया
धामानि। यक्षथ्स्वं महिमानम्। आयजतामेज्या इषः। कृणोतु
सो अध्वरा जातवेदाः। जुषताꣳ हविः। अग्ने यदद्य विशो
अध्वरस्य होतः। पावक शोचे वेष्ट्वꣳ हि यज्वा।
ऋता यजासि महिना वियद्भूः। हव्या वह यविष्ठ या ते अद्य।।15।।
350700
अस्त्वधत्तꣳ रयिञ्चर्षणिप्रास्सोमस्य प्रिया धामानीषष्ट्च।।7।।
350801
उपहूतꣳ रथन्तरꣳ सह पृथिव्या। उप मा रथन्तरꣳ
सह पृथिव्या ह्वयताम्। उपहूतव्वाँमदेव्यꣳ सहान्तरिक्षेण। उप मा वामदेव्यꣳ
सहान्तरिक्षेण ह्वयताम् । उपहूतं बृहथ्सह दिवा। उप मा बृहथ्सह दिवा ह्वयताम्।
उपहूतास्सप्त होत्राः। उप मा सप्त होत्रा ह्वयन्ताम्। उपहूता धेनुस्सहर्षभा।
उप मा धेनुस्सहर्षभा ह्वयताम्।।16।।
350802
उपहूतो भख्षस्सखा । उप मा भख्षस्सखा ह्वयताम्।
उपहूताँ(4)हो। इडोपहूता। उपहूतेडा। उपो अस्माꣳ
इडा ह्वयताम्। इडोपहूता। उपहूतेडा। मानवी घृतपदी मैत्रावरुणी ।
ब्रह्म देवकृतमुपहूतम्।।17।।
350803

दैव्या॑ अध्व॒र्यव॒ उप॑हूताः।
उप॑हूता मनु॒ष्या॑ः। य इ॒मय्यँ॒ज्ञमवा॑न्।
ये य॒ज्ञप॑ति॒र्व्वँर्धा॑न्। उप॑हूते॒ द्यावा॑पृथि॒वी। पू॒र्व॒जे
ऋ॒तावा॑री। दे॒वी दे॒वपु॑त्रे। उप॑हूतो॒ऽयय्यँज॑मानः।
उत्त॑रस्यान्देवय॒ज्याया॒मुप॑हूतः। भूय॑सि हवि॒ष्कर॑ण॒ उप॑हूतः।
दि॒व्ये धाम॒न्नुप॑हूतः। इ॒दं मे॑ दे॒वा ह॒विर्जु॑षन्ता॒मिति॒
तस्मि॒न्नुप॑हूतः। विश्व॑मस्य प्रि॒यमुप॑हूतम्। विश्व॑स्य
प्रि॒यस्योप॑हूत॒स्योप॑हूतः ।।18।।
350800
स॒हर्ष॑भा ह्वयता॒मुप॑हूतꣳ हवि॒ष्कर॑ण॒ उप॑हूतश्च॒त्वारि॑ च ।।8।।
350901
दे॒वं ब॒र्हिः। व॒सु॒वने॑ वसु॒धेय॑स्य वेतु। दे॒वो न॒राशꣳसः।
व॒सु॒वने॑ वसु॒धेय॑स्य वेतु। दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृत्।
सु॒द्रवि॑णा म॒न्द्रः॒ क॒विः। स॒त्यम॑न्माय॒जी होता॑। होतु॑र्होतु॒राय॑जीयान्।
अग्ने॒ यान् दे॒वानया॑ट्। याꣳ अपि॑प्रेः। ये ते॑ हो॒त्रे
अम॑थ्सत। ताꣳ स॑स् चनु॒षीꣳ होत्रा॑न्देवङ्ग॒माम्। दि॒वि दे॒वेषु॑ य॒ज्ञमेर॑ये॒मम्।
स्वि॒ष्ट॒कृच्चाग्ने॒ होताभूः। व॒सु॒वने॑ वसु॒धेय॑स्य नमोवा॒के वीहि॑ ।।19।।
350900
अपि॑प्रे॒ पञ्च॑ च ।।9।।
351001
इ॒दन्द्या॑वापृथिवी भ॒द्रम॑भूत्। आर्ध्म॑ सूक्तवा॒कम्।
उ॒त न॑मोवा॒कम्। ऋ॒ध्यास्म॑ सू॒क्तोच्य॑मग्ने। त्वꣳ सू॑क्त॒वाग॑सि।
उप॑श्रितो दि॒व॒ꣳपृ॑थि॒व्योः। ओम॑न्वती ते॒ऽस्मिन् य॒ज्ञे य॑जमान॒
द्यावा॑पृथि॒वी स्ता॑म्। श॒ङ्गये॒ जी॒रदा॑नू।
अत्र॑स्नू॒ अप्र॑वेदे। उ॒रुग॑व्यूती अभय॒ङ्कृतौ॑ ।।20।।
351002
वृ॒ष्टिद्या॑वा री॒त्या॑पा। श॒म्भुवौ॑ मयो॒भुवौ॑। ऊर्ज॑स्वती च॒
पय॑स्वती च। सू॒प॒च॒र॒णा च॑ स्वधिच॒रणा॑च। तयो॑रा॒विदि॑।
अ॒ग्निरि॒दꣳ ह॒विर॑जुषत। अवी॑वृधत॒ मह॒ो ज्यायो॑कृत। सोम॑ इ॒दꣳ
ह॒विर॑जुषत। अवी॑वृधत॒ मह॒ो ज्यायो॑कृत। अ॒ग्निरि॒दꣳ ह॒विर॑जुषत।।21।।
351003

अवी॑वृधत्॒ मह्॒ो ज्यायो॑कृत। प्र॒जाप॑तिरि॒दꣳ ह॒विर॑जुषत। अवी॑वृधत्॒ मह्॒ो ज्यायो॑कृत।
अ॒ग्नीषोमा॑वि॒दꣳ ह॒विर॑जुषेताम्। अवी॑वृधेता॒ं मह्॒ो ज्यायो॑ऽक्राताम्।
इ॒न्द्रा॒ग्नी इ॒दꣳ ह॒विर॑जुषेताम्। अवी॑वृधेता॒ं मह्॒ो ज्यायो॑ऽक्राताम्।
इन्द्र॑ इ॒दꣳ ह॒विर॑जुषत। अवी॑वृधत॒मह्॒ो ज्यायो॑कृत।
म॒हे॒न्द्र इ॒दꣳ ह॒विर॑जुषत।।22।।
351004
अवी॑वृधत्॒ मह्॒ो ज्यायो॑कृत।
दे॒वा आ॑ज्य॒पा आज्य॑मजुषन्त। अवी॑वृधन्त्॒ मह्॒ो ज्यायो॑ऽक्रत। अ॒ग्निर्
ह्॒ोत्रेणे॒दꣳ ह॒विर॑जुषत। अवी॑वृधत्॒ मह्॒ो ज्यायो॑कृत।
अ॒स्यामृ॑ध॒द्धोत्रा॑यान्देव॒ङ्गमा॑याम्। आशा॑स्ते॒यय्यँज॑माना॒ोसौ।
आयु॒राशा॑स्ते। सु॒प्र॒जा॒स्त्वमाशा॑स्ते।
स॒जा॒त॒व॒न॒स्यामाशा॑स्ते।।23।।
351005
उत्त॑रान्देवय॒ज्यामाशा॑स्ते । भूयो॑ हवि॒ष्कर॑ण॒माशा॑स्ते।
दि॒व्यन्धामाशा॑स्ते। विश्व॑ं प्रि॒यमाशा॑स्ते।
यद॒नेन॑ ह॒विषाऽऽशा॑स्ते। तद॑श्या॒त्तद॑ध्यात्। तद॑स्मै दे॒वा रा॑सन्ताम्।
तद॒ग्निर्दे॒वो दे॒वेभ्य॒ो वन॑ते। व॒यम॒ग्नेर्मा॑नु॒षाः। इ॒ष्टञ्च॑ वी॒तञ्च॑।
उ॒भे च॑ न॒ो द्यावा॑पृथि॒वी अꣳह॑सस्पाताम्। इ॒ह गति॑र्वा॒मस्ये॒दञ्च॑।
नमो॑ दे॒वेभ्य॑ः।।24।।
351000
अ॒भ॒य॒ङ्कृता॑वकृता॒ग्निरि॒दꣳ ह॒विर॑जुषत मह॒ेन्द्र इ॒दꣳ
ह॒विर॑जुषत सजातवन॒स्यामाशा॑स्ते वी॒तञ्च त्रीणि॑ च ।।10।।
351101
तच्छ॒ंय्योरा॑वृणीमहे। गा॒तुय्यँ॒ज्ञाय॑। गा॒तुय्यँ॒ज्ञप॑तये। दैवी॑ स्व॒स्तिर॑स्तु
नः। स्व॒स्तिर्मा॑नु॒षेभ्यः। ऊ॒र्ध्वञ्जि॑गातु भेष॒जम्।
शन्नो॑ अस्तु द्वि॒पदे॑। शञ्चत॑ुष्पदे ।।25।।
351100
तच्छ॒ंय्योर॒ष्टौ ।।11।।
351201
आप्या॑यस्व॒ सन्ते॑। इ॒ह त्वष्टा॑रमग्रि॒यन्तन्न॑स्तु॒रीप॑म्। दे॒वाना॒ं
पत्नी॑रुश॒ीर॑वन्तु नः। प्राव॑न्तु नस्तु॒जये॒ वाज॑सातये।

याः पार्थिवासो या अपामपि व्रते। ता नो देवीस्सुहवाश्शर्मयच्छत।
उत ग्ना वियन्तु देवपत्नीः। इन्द्राण्यग्नाय्यश्विनी राट्। आ
रोदसी वरुणानी शृणोतु। वियन्तु देवीर्यऋतुर्जनीनाम्।।26।।
351202
अग्निर्होता गृहपतिस्स राजा। विश्वा वेद जनिमा जातवेदाः।
देवानामुत यो मर्त्यानाम्। यजिष्ठस्स प्र यजतामृतावा ।
वयमु त्वा गृहपते जनानाम्। अग्ने अकर्म समिधा बृहन्तम्।
अस्थूरि णो गार्हपत्यानि सन्तु। तिग्मेन न स्तेजसा सं
शिशाधि ।।27।।
351200
जनीनामष्टौ च ।।12।।
351301
उपहूतं रथन्तरं सह पृथिव्या। उप मा रथन्तरं
सह पृथिव्या ह्वयताम्। उपहूतव्वाँमदेव्यं सहान्तरिक्षेण।
उप मा वामदेव्यं सहान्तरिक्षेण ह्वयताम्।
उपहूतं बृहथ्सह दिवा। उप मा बृहथ्सह दिवा ह्वयताम्। उपहूतास्सप्त होत्राः।
उप मा सप्त होत्रा ह्वयन्ताम्। उपहूता धेनुस्सहर्षभा।
उप मा धेनुस्सहर्षभा ह्वयताम्।।28।।
351302
उपहूतो भक्षस्सखा। उप मा भक्षस्सखा ह्वयताम्। उपहूताँ 4 हो। इडोपहूता।
उपहूतेडा। उपो अस्मां इडा ह्वयताम्। इडोपहूता। उपहूतेडा।
मानवी घृतपदी मैत्रावरुणी। ब्रह्म देवकृतमुपहूतम्।।29।।
351303
दैव्या अध्वर्यव उपहूताः।
उपहूता मनुष्याः। यइमय्यँज्ञमवान्। ये यज्ञपत्नीव्वँर्धान्।
उपहूते द्यावापृथिवी। पूर्वजे ऋतावरी। देवी देवपुत्रे।
उपहूतेयय्यँजमाना। इन्द्राणीवाविधवा। अदितिरिव सुपुत्रा।
उत्तरस्यान्देवयज्यायामुपहूता। भूयसि हविष्करण उपहूता।
दिव्ये धामन्नुपहूता। इदं मे देवा हविर्जुषन्तामिति
तस्मिन्नुपहूता। विश्वमस्याः प्रियमुपहूतम्। विश्वस्य
प्रियस्योपहूतस्योपहूता।।30।।

351300

स॒हर्ष॑भा ह्वयता॒मुप॑हूतः॒ सुपु॒त्रा षट्च॑ ।।13।।

350000

स॒त्यं प्रवोऽग्ने॑र्म॒हान॒ग्निर् होता॑

स॒मिधो॒ऽग्निर्वृ॒त्राण्य॒ग्निर्मू॒र्धोप॑हूतन्दे॒वं

ब॒र् हिरि॒दन्द्या॑वा पृथिवी॒

तच्छुँ॒य्योराप्या॑य॒स्स्वोप॑हूत॒न्त्रयो॑दश ।।13।।

स॒त्यव्वुँ॒यस्या॑म वृ॒ष्टिद्या॑वा त्रि॒ꣳ॒शत्।

स॒त्यमुप॑हूता ।।30।।

हरि॑ःओम्।। श्रीकृष्णार्पणमस्तु।।

कृष्णयजुर्ब्राह्मणे तृतीयाष्टके पञ्चम प्रपाठकस्समाप्तः

360000

तृतीयाष्टके षष्ठप्रपाठक प्रारम्भः हरिःओम्।।

360101

अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्त॑ः। वन॑स्पते॒ मधु॑ना॒ दैव्ये॑न।

यदू॒र्ध्वस्तिष्ठा॑द्द्रवि॑णे॒ह ध॑त्तात्। यद्वा॒ क्षयो॑

मा॒तुर॒स्या उ॒पस्थे᳚। उच्छ्र॑यस्व वनस्पते। वर्ष्म॑न्पृथि॒व्या अधि॑। सुमि॑तीमी॒यमा॑नः।

वर्चो॑धा य॒ज्ञवा॑हसे। समि॑द्धस्य॒ श्रय॑माणᳶ पु॒रस्ता᳚त्।

ब्रह्म॑ वन्वा॒नो अ॒जरꣳ॑ सु॒वीर᳚म्।।1।।

360102

आ॒रे अ॒स्मदम॑तिं॒ बाध॑मानः। उच्छ्र॑यस्व मह॒ते सौभ॑गाय।

ऊ॒र्ध्व ऊ॒षुण॑ ऊ॒तये᳚। तिष्ठा॑ दे॒वो न स॑वि॒ता।

ऊ॒र्ध्वो वाज॑स्य॒ सनि॑ता॒ यद॒ञ्जिभि॑ः। वा॒घद्भि॑र्वि॒ह्वया॑महे।

ऊ॒र्ध्वो न॑ᳶ पा॒ह्यꣳह॑सो॒ नि के॒तुना᳚।

विश्व॒ꣳ॒ सम॒त्रिण॑न्दह। कृ॒धी न॑ ऊ॒र्ध्वाञ्च॒ रथा॑य

जी॒वसे᳚। वि॒दा दे॒वेषु॑ नो॒ दुव॑ः।।2।।

360103

जा॒तो जा॑यते सुदिन॒त्वे अह्ना᳚म्। सम॒र्य आ वि॒दथे॒

वर्ध॑मानः। पु॒नन्ति॒ धीरा॑ अ॒पसो॑ मनी॒षा। दे॒व॒या विप्र॒

उदि॑यर्ति॒ वाच᳚म्। युवा॑ सु॒वासा॒ᳶ परि॑वीत॒ आगा᳚त्। स उ॒

श्रेया᳚न्भवति॒ जाय॑मानः। तन्धीरा॑सᳵ क॒वय॒ उन्न॑यन्ति।

स्वा॒धियो॒ मन॑सा देव॒यन्त॑ः। पृ॒थुपाजा॒ अम॑र्त्यः।

घृ॒तनि॑र्णि॒ख्स्वा॑हुतः। अ॒ग्निर्य॒ज्ञस्य॑

हव्य॒वाट्। तꣳ स॒बाधो॑ य॒तस्रु॑चः। इ॒त्था धि॒या य॒ज्ञव॑न्तः।

आच॑क्रुर॒ग्निमू॒तये᳚। त्वव्वँ॑रुण उ॒त मि॒त्रो

अ॑ग्ने। त्वाव्वँ॑र्धन्ति म॒तिभि॒र्वसि॑ष्ठाः। त्वे वसु॑

सुषण॒नानि॑ सन्तु। यू॒यं पा॑त स्व॒स्तिभि॒स्सदा॑ नः।।3।।

360100

सु॒वीर॒न्दुव॒स्स्वा॑हुतो॒ऽष्टौ च॑ ।।1।।

360201

होता॑ यख्सद॒ग्निꣳ स॒मिधा॑ सुष॒मिधा॒ समि॑द्धं॒ नाभा॑

पृथि॒व्यास्सं॑ङ्ग॒थे वा॒मस्य॑। वर्ष्म॑न्दि॒व इ॒डस्प॒दे

वेत्वाज्यस्य होतर्यज। होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य

गोपाम्। मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज।

होता यक्षन्नराशꣳसं नृशस्त्रं नॄꣳꣳ प्रणेत्रम्।

गोभिर्वपावान्थ्स्याद्वीरैश्शक्तीवान्नथैꣳ प्रथमया वा

हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज। होता यक्षदग्निमिड ईडितो देवो

देवाꣳ आवक्षद्दूतो हव्यवाडमूरः। उपेमय्यँज्ञमुपेमां

देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज। होता यक्षद्

बर्हिस्सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प्र च प्रथताꣳ

स्वासस्थं देवेभ्यः। एमेनदद्य वसवो रुद्रा आदित्यास्सदन्तु

प्रियमिन्द्रस्यास्तु वेत्याज्यस्य होतर्यज ।।4।।

360202

होता यक्षद्दुर ऋष्वाꣳ कवष्यो कोषधावनीरुदाताभीर्जिहताँ

व्विपक्षोभिः श्रयन्ताम्। सुप्रायणा अस्मिन् यज्ञे

विश्रयन्तामृतावृधो वियन्त्वाज्यस्य होतर्यज। होता

यक्षदुषासानक्ता बृहती सुपेशसा नॄꣳꣳ पतिभ्यो योनिं

क्रृण्वाने। सस्मयमाने इन्द्रेण देवैरेदं बर्हिस्सीदताँ

व्वीतामाज्यस्य होतर्यज। होता यक्षद्दैव्या होतारा मन्द्रा

पोतारा कवी प्रचेतसा। स्विष्टमद्यान्यꣳ करदिषा स्वभिगूर्त

मन्य ऊर्जा सतवसेमय्यँज्ञं दिवि देवेषु धत्ताँव्वीता

माज्यस्य होतर्यज। होता यक्षत्तिस्रो देवीरपसामपस्तमा

अच्छिद्रमद्येदमपस्तन्वताम्। देवेभ्यो देवीर्देवमपो

वियन्त्वाज्यस्य होतर्यज। होता यक्षत्त्वष्टारमचिष्टु

मपाकꣳ रेतोधां विश्रवसय्यँशोधाम्। पुरुरूपमकामकर्शनꣳ

सुपोषꣳ पोषैस्स्याथ्सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज।

होता यक्षद्वनस्पतिमुपावस्नक्षद्धियो जोष्टारꣳ

शशमन्नरः। स्वदाथ्स्वधितिर् ऋतुथाद्य देवो देवेभ्यो

हव्यावाड्वेत्वाज्यस्य होतर्यज। होता यक्षदग्नि स्वाहा

ऽऽज्यस्य स्वाहा मेदसस्स्वाहा स्तोकानाꣳ स्वाहा

स्वाहाकृतीनाꣳ स्वाहा हव्यसूँक्तीनाम्। स्वाहा देवाꣳ

आँज्यपान्थ्स्वाहाऽग्निꣳ होत्राज्जुषाणा अग्न आज्यस्य

वियन्तु होतर्यज ।।5।।
360200
प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज सुवीरो
वीरैर्वेत्वाज्यस्य होतर्यज चत्वारि च ।।2।।
360301
अग्निन्तनूनपातन्नराशꣳसमग्निमिड ईडितो बर्हिर्दुर
उषासानक्ता दैव्या तिस्रस्त्वष्टारव्वँनस्पतिमग्निम्।
पञ्च वेत्वेको वियन्तु द्विर्वीतामेको वियन्तु द्विर्वेत्वेको
वियन्तु होतर्यज।।
समिद्धो अद्य मनुषो दुरोणे। देवो देवान् यजसि जातवेदः।
आ च वह मित्रमहश्चिकित्वान्। त्वन्दूतꣳ कविरसि प्रचेताः।
तनूनपात्पथ ऋतस्य यानान्। मध्वा समञ्जन्थ्स्वदया सुजिह्व।
मन्मानि धीभिरुत यज्ञमृन्धन्। देवत्रा च कृणुह्यध्वरन्नः।
नराशꣳसस्य महिमानमेषाम्। उप स्तोषाम यजतस्य यज्ञैः ।।6।।
360302
ते सुक्रतवश्शुचयो धियन्धाः। स्वदन्तु देवा उभयानि हव्या।
आजुह्वान ईड्यो वन्द्यश्च। आयाह्यग्ने वसुभिस्सजोषाः।
त्वं देवानामसि यह्व होता। स एनान् यख्षीषितो यजीयान्।
प्राचीनं बर्हिꣳ प्रदिशा पृथिव्याः। वस्तोरस्या वृज्यते
अग्रे अह्नाम्। व्यु प्रथते वितरव्वँरीयः। देवेभ्यो अदितये
स्योनम् ।।7।।
360303
व्यचस्वतीरुर्विया विश्रयन्ताम्। पतिभ्यो न
जनयश्शुम्भमानाः। देवीर्द्वारो बृहतीर्विश्वमिन्वाः। देवेभ्यो
भवथ सुप्रायणाः। आसुष्वयन्ती यजते उपाके। उषासानक्ता
सदतान्नि योनौ। दिव्ये योषणे बृहती सुरुक्मे । अधि श्रियꣳ
शुक्रपिशन्दधाने। दैव्या होतारा प्रथमा सुवाचा। मिमाना
यज्ञं मनुषो यजध्यै ।।8।।
360304
प्रचोदयन्ता विदथेषु कारू।
प्राचीनञ्ज्योतिꣳ प्रदिशा दिशन्ता। आ नो यज्ञं भारती

तूर्य॑मेतु। इडा॑ मनु॒ष्वदि॒ह चे॒तय॑न्ती। ति॒स्रो दे॒वीर्ब॒र्॒हिरेद
स्यो॒नम्। सर॑स्वती॒ स्वप॑सस्सदन्तु॒। य इ॒मे द्यावा॑पृथि॒वी जनि॑त्री।
रू॒पैरपि॑ꣳश॒द्भुव॑नानि॒ विश्वा᳚। तम॒द्य हो॑तरिषि॒तो यजी॑यान्।
दे॒वन्त्वष्टा॑रमि॒ह य॑क्षि वि॒द्वान् ।।9।।
360305
उ॒पाव॑सृज॒ त्मन्या॑
सम॒ञ्जन्। दे॒वाना॒ं पाथ॑ ऋतु॒था ह॒वीꣳषि॑। वन॒स्पति॑श्शमि॒ता दे॒वो
अ॒ग्निः। स्वद॑न्तु ह॒व्यं मधु॑ना घृ॒तेन॑। स॒द्यो जा॒तो व्य॑मिमीत
य॒ज्ञम्। अ॒ग्निर्दे॒वाना॑मभवत्पुरो॒गाः। अ॒स्य होतु॑ᳲ
प्र॒दिश्यृ॒तस्य॑ वा॒चि। स्वाहा॑कृतꣳ ह॒विर॑दन्तु दे॒वाः ।।10।।
360300
य॒ज्ञैस्स्यो॒नं यज॑ध्यै वि॒द्वान॒ष्टौ च॑ ।।3।।
360401
अ॒ग्निर्होता॑ नो अध्व॒रे। वा॒जी सन्परि॑णीयते। दे॒वो दे॒वेषु॑
य॒ज्ञिय॑ः। परि॑त्रिवि॒ष्ट्य॑ध्व॒रम्। यात्य॒ग्नी र॒थीरि॑व।
आ दे॒वेषु॒ प्रयो॒ दध॑त्। परि॒ वाज॑पति॒ᳲ क॒विः। अ॒ग्निर्ह॒व्या
न्य॑क्रमीत्। दध॒द्रत्ना॑नि दा॒शुषे᳚ ।।11।।
360400
अ॒ग्निर्होता॑ नो॒ नव॑ ।।4।।
360501
अजै॑द॒ग्निः। अस॑न॒द्वाज॒न्नि। दे॒वो दे॒वेभ्यो॑ ह॒व्यावा᳚ट्।
प्राञ्जो॑भिर्हिन्वा॒नः। धेना॑भि॒ᳲ कल्प॑मानः। य॒ज्ञस्यायु॑ᳲ
प्रति॒रन्। उप॒ प्रेष्य॑ होतः। ह॒व्या दे॒वेभ्य॑ः ।।12।।
360500
अजै॑द॒ष्टौ ।।5।।
360601
दैव्या᳚श्शमितार उ॒त म॑नुष्या॒ आर॑भध्वम्। उप॑नयत॒ मेध्या॒ दुर॑ः।
आ॒शासा॑ना॒ मेध॑पतिभ्या॒ं मेध᳚म्। प्रास्मा॑ अ॒ग्निं भ॑रत। स्तृ॒णी॒त
ब॒र्॒हिः । अन्वे॑नं मा॒ता म॑न्यताम्। अनु॑ पि॒ता। अनु॒ भ्रा॒ता
सग॑र्भ्यः। अनु॒ सखा॒ सयू᳚थ्यः। उ॒दी॒चीनाꣳ॑ अस्य प॒दो
निध॑त्तात्।।13।।
360602

सूर्यञ्चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतात्।
दिशश्श्रोत्रम्। अन्तरिक्षमसुम्। पृथिवीꣳ शरीरम्। एकधा
ऽस्य त्वचमाछ्यतात्। पुरा नाभ्या अपिशसो वपामुत्खिदतात् ।
अन्तरेवोष्माणव्वाँरयतात्। श्येनमस्य वक्षꣳ कृणुतात्। प्रशसा
बाहू ।।14।।
360603
शला दोषणी। कश्यपेवाꣳसा। अच्छिद्रे श्रोणी।
कवषोरू स्रेकपर्णाष्ठीवन्ता। षड्विꣳशतिरस्य वङ्क्रयः।
ता अनुष्ठ्योच्च्यावयतात्। गात्रङ्गात्रमस्यानूनङ्कृणुतात्।
ऊवध्यगोहं पार्थिवङ्खनतात्। अस्ना रक्षस्सꣳसृजतात्।
वनिष्ठुमस्य मा राविष्ट ।।15।।
360604
उरूकं मन्यमानाः। नेद्वस्तोके
तनये। रवितारवच्छमितारः। अध्रिगो शमीध्वम्। सुशमि शमीध्वम्।
शमीध्वमध्रिगो। अध्रिगुश्चापापश्च। उभौ देवानाꣳ शमितारौ।
ताविमं पशु श्रपयतां प्रविद्वाꣳसौ। यथायथाऽस्य
श्रपणन्तथातथा ।।16।।
360600
धत्ताद्बाहूमाराविष्ट तथातथा ।।6।।
360701
जुषस्व सप्रथस्तमम्। वचो देवप्सरस्तमम्। हव्या जुह्वान
आसनि। इमन्नो यज्ञममृतेषु धेहि। इमा हव्या जातवेदो जुषस्व।
स्तोकानामग्ने मेदसो घृतस्य। होतꣳ प्राशान प्रथमो निषद्य।
घृतवन्तः पावक ते। स्तोकाश्श्चोतन्ति मेदसः। स्वधर्मन्देव
वीतये ।।17।।
360702
श्रेष्ठन्नो धेहि वार्यम्। तुभ्य स्तोका
घृतश्चुतः। अग्ने विप्राय सन्त्य। ऋषिश्श्रेष्ठस्समिध्यसे।
यज्ञस्य प्राविता भव। तुभ्य श्चोतन्त्यध्रिगो शचीवः। स्तोकासो
अग्ने मेदसो घृतस्य। कविशस्तो बृहता भानुनागाः।
हव्या जुषस्व मेधिर। ओजिष्ठन्ते मध्यतो मेद उद्भृतम्।

प्र ते॑ व॒यन्द॑दामहे। श्चोत॑न्ति ते वसो स्त॒ोका अधि॑त्व॒चि। प्रति॒
तान्दे॑व॒शोवि॑हि ।।18।।
360700
दे॒ववी॑तय॒ उर्द्ध्व॒त॒न्त्रीणि॑ च ।।7।।
360801
आवृ॑त्रहणा वृत्र॒हभि॒श्शुष्मैः॑। इन्द्र॑ य॒ातन्नमो॑भिरग्ने अ॒र्वाक्।
यु॒वꣳ राधो॑भि॒रक॑वेभिरिन्द्र। अग्ने॑ अ॒स्मे भ॑वतमु॒त्त॒मेभिः॑।
होता॑यख्षदिन्द्रा॒ग्नी। छाग॑स्य व॒पाया॒ मेद॑सः। जु॒षेताꣳ॑ ह॒विः।
होत॒र्यज॑। विह्यख्य॒न्मन॑सा॒ वस्य॑ इ॒च्छन्। इन्द्रा॑ग्नी ज्ञा॒स उ॒त
वा॑ सज॒ातान् ।।19।।
360802
नान्या यु॒वत्प्रम॑तिरस्ति॒ मह्य॑म्। स वा॒न्धियँ॑
व्वाज॒यन्ती॑मतख्षम्। होता॑ यख्षदिन्द्रा॒ग्नी। पु॒रोडाश॑स्य
जु॒षेताꣳ॑ ह॒विः। होत॒र्यज॑। त्वामी॑डते अजि॒रन्दू॒त्या॑य।
ह॒विष्म॑न्त॒स्सद॒मिन्मानु॑षासः। यस्य॑ दे॒वैरास॑दो ब॒र्हि॒र॑ग्ने।
अहा॑न्यस्मै सु॒दिना॑ भवन्तु। होता॑ यख्षद॒ग्निम्। पु॒रोडाश॑स्य
जु॒षताꣳ॑ ह॒विः। होत॒र्यज॑ ।।20।।
360800
स॒ज॒ाताना॒ग्निन्द्धे च॑ ।।8।।
360901
गी॒र्भिर्विप्र॒ꣳ प्रम॑तिमि॒च्छमा॑नः। ईट्टे॑ र॒यिय्य॒शसं॑
पूर्व॒भाजम्॑। इन्द्रा॑ग्नी वृत्रहणा सुवज्रा। प्र ण॒ो नव्यै॑भिस्तिरत
न्दे॒ष्णैः। माच्छे॑द्म र॒श्मीꣳरिति॒ नाध॑मानाः। पि॒तृणाꣳ शक्ती॑
रनु॒यच्छ॑मानाः। इ॒न्द्रा॒ग्निभ्य॒ाङ्कव्वृँष॑णो मदन्ति। ताह्यद्री॑
धि॒षणा॑या उ॒पस्थे॑। अ॒ग्निꣳ सु॑दी॒तिꣳ सु॒दृश॑ङ्गृ॒णन्तः॑।
न॒म॒स्याम॒स्त्वेड्य॑ञ्जातवेदः। त्वान्दू॒तम॑र॒तिꣳ ह॑व्य॒वाह॑म्।
दे॒वा अ॑कृण्वन्न॒मृत॑स्य॒ नाभि॑म् ।।21।।
360900
ज॒ात॒वे॒दो॒ द्वे च॑ ।।9।।
361001
त्व ह्य॑ग्ने प्रथ॒मो म॒नोता॑। अ॒स्या धि॒यो अभ॑वो दस्म॒होता॑।
त्वꣳ सी॑व्वृँषन्नकृणोर्दु॒ष्टरी॑तु। सह॒ो विश्व॑स्मै॒ सह॑से॒ सह॑ध्यै।

अ॒धा होता॒ न्य॑सीदो॒ यजी॑यान्। इ॒डस्प॒द इ॒षय॒न्नीड्य॒स्सन्।

तन्त्वा॒ नर॑ᳲ प्रथ॒मन्दे॑व॒यन्त॑ः। म॒हो रा॒ये चि॒तय॑न्तो॒

अनु॑ग्मन्। वृ॒तेव॒ यन्तं॑ ब॒हुभि॑र्वस॒व्यै᳚ः। त्वे र॒यिञ्

जा॑गृ॒वाꣳसो॒ अनु॑ग्मन् ।।22।।

361002

रुश॑न्तम॒ग्निन्द॑र्॒श॒तम्बृ॒हन्त᳚म्।

व॒पाव॑न्तँ॒व्वि॒श्वहा॑ दीदि॒वाꣳस᳚म्। प॒दन्दे॒वस्य॒ नम॑सा

वि॒यन्त॑ः। श्र॒व॒स्यव॒श्श्रव॑ आप॒न्नमृ॑क्तम्। नामा॑नि चिद्दधिरे

य॒ज्ञिया॑नि। भ॒द्राया᳚न्ते रणयन्त॒ सन्दृ॑ष्टौ। त्वाव्वँ॑र्धन्ति

क्षि॒तय॑ᳲ पृथि॒व्याम्। त्वꣳ राय॑ उ॒भया॑सो॒ जना॑नाम्। त्वन्त्रा॒ता

त॑रणे॒ चेत्यो॑भूः। पि॒ता मा॒ता सद॒मिन्मानु॑षाणाम् ।।23।।

361003

सप॒र्येण्य॒स्स प्रि॒यो वि॒क्ष्व॑ग्निः। होता॑ म॒न्द्रो निष॑सादा॒

यजी॑यान्। तन्त्वा॑ व॒यन्दम॒ आ दी॑दि॒वाꣳस᳚म्। उप॑ज्ञु॒बाधो॒ नम॑सा

सदेम। तन्त्वा॑ व॒यꣳ सु॒धियो॒ नव्य॑मग्ने। सु॒म्ना॒यव॑ ईमहे

दे॒वयन्त॑ः। त्वँव्विशो॑ अनयो॒ दीद्या॑नः। दि॒वो अ॑ग्ने बृ॒हता

रो॑च॒नेन॑। वि॒शाङ्क॒विँव्वि॒श्पति॒ꣳ शश्व॑तीनाम्। नि॒तोश॑न

व्वृँष॒भञ्च॑र्॒षणी॒नाम् ।।24।।

361004

प्रेती॑षणि मि॒षय॑न्तं पाव॒कम्।

राज॑न्तम॒ग्निंय्य॑ज॒तꣳ र॑यी॒णाम्। सो अ॑ग्न ईजे शश॒मे च॒ मर्त॑ः।

यस्त॒ आन॑ट्॒थ्स॒मिधा॑ ह॒व्यदा॑तिम्। य आहु॑तिं॒ परि॒ वेदा॒ नमो॑भिः।

विश्वेथ्सवा॒मा द॑धते॒ त्वोत॑ः। अ॒स्मा उ॑ ते॒ महि॑ म॒हे वि॑धेम।

नमो॑भिरग्ने स॒मिधो॒त ह॒व्यैः। वेदी॑सूनो सहसो गी॒र्भिरु॒क्थैः। आ ते

भ॒द्रायाꣳ॑ सुम॒तौ य॑तेम ।।25।।

361005

आ॒यस्त॒तन्थ॒ रोद॑सी॒ विभा॒सा।

श्रवो॑भिश्च श्र॒व॒स्य॑स्तरु॑त्रः। बृ॒हद्भि॒र्वाजै॒स्स्थवि॑रेभिर॒स्मे।

रे॒वद्भि॑रग्ने वित॒रँव्वि भा॑हि। नृ॒वद्व॑सो॒ सद॒मिद्धे᳚ह्य॒स्मे।

भूरि॑तो॒काय॒ तन॑याय प॒श्वः। पू॒र्वीरि॑षो॑ बृ॒हतीरा॒रे अ॑घाः।

अ॒स्मे भ॒द्रा सौ᳚श्रव॒सानि॑ सन्तु। पु॒रूण्य॑ग्ने पु॒रुधा त्वा॒या।

वसू॑नि राजन्व॒सुता॑ते अश्याम्। पु॒रूणि॒ हित्वे पु॑रुवार॒ सन्ति॑।
अग्ने॒ वसु॑ विध॒ते राज॑नि॒त्वे ।।26।।
361000
जा॒गृ॒वाꣳसो॒ अनु॑ग्म॒न्मानु॑षाणाञ्चर्॒षणी॒नाय्यँ॑तेमाश्य॒ान्द्वे च॑ ।।10।।
361101
आभ॑रतꣳ शिख्षतव्वँज्रबाहू। अ॒स्माꣳ इ॑न्द्राग्नी अवत॒ꣳ॒ शची॑भिः।
इ॒मे नु ते र॒श्मय॒स्सूर्य॑स्य। येभि॑स्सपि॒त्वं पि॒तरो॑ न॒ आयन्न्।
होता॑ यख्षदिन्द्र॒ाग्नी। छाग॑स्य ह॒विष॒ आत्ता॑म॒द्य। म॒ध्य॒तो मेद॒
उद्भृ॑तम्। पु॒रा द्वेषो᳚भ्यः। पु॒रा पौरु॑षेय्या गृ॒भः। घस्ता᳚न्नू॒नम्।।27।।
361102
घ॒ासे अ॑ज्राणा॒य्यँ॑वसप्रथमानाम्। सु॒मत्ख्ष॑राणाꣳ
श॒तरु॑द्रियाणाम्। अ॒ग्नि॒ष्वा॒त्ता॒नां पीवो॑पवसनानाम्। पा॒र्श्व॒तः
श्रो॑णि॒तश्शि॑ताम॒त उ॑थ्साद॒तः। अङ्गा॑दङ्गा॒दव॑त्तानाम्। कर॑त
ए॒वेन्द्र॒ाग्नी। जु॒षेताꣳ॑ ह॒विः। होत॒र्यज॑। दे॒वेभ्यो॑ वनस्पते
ह॒वीꣳषि॑। हिर॑ण्यपर्ण प्र॒दिव॑स्ते॒ अर्थ॑म्। ।।28।।
361103
प्र॒द॒ख्षि॒णिद्र॑श॒नया॑ नि॒यूय॑। ऋ॒त॑स्य वख्षि प॒थिभी॒रजि॑ष्ठैः।
होता यख्षद्व॒न॒स्पति॑म॒भिहि। पि॒ष्टत॑मया॒ रभि॑ष्ठया रश॒नयाधि॑त।
यत्रे᳚न्द्राग्नि॒योश्छाग॑स्य ह॒विष॑ᳲ प्रि॒या धामा॑नि। यत्र॒
वन॒स्पते᳚ᳲ प्रि॒या पाथाꣳ॑सि। यत्र॑ दे॒वाना॑माज्य॒पाना᳚ प्रि॒या
धामा॑नि। यत्र॒ाग्नेर्॒होतु॑ᳲ प्रि॒या धामा॑नि। तत्रै॒तं
प्र॒स्तुत्ये॑वोप॒स्तुत्ये॑व॒ोपाव॑स्रख्षत्। रभी॑याꣳसमिव कृ॒त्वी ।।29।।
361104
कर॑दे॒वन्दे॒वो वन॒स्पति॑ः। जु॒षताꣳ॑ ह॒विः। होत॒र्यज॑।
पि॒प्री॒हि दे॒वाꣳ उ॑श॒तो य॑विष्ठ। वि॒द्वाꣳ ऋ॒तूꣳ ऋ॑॑तुपते यजे॒ह।
ये दैव्या॑ ऋ॒त्विज॒स्तेभि॑रग्ने। त्वꣳ होतॄ॑णाम॒स्याय॑जिष्ठः। होता॑
यख्षद॒ग्नि स्वि॑ष्ट॒कृत᳚म्। अया॑ड॒ग्निरि॑न्द्राग्नि॒योश्छाग॑स्य
ह॒विष॑ᳲ प्रि॒या धामा॑नि। अय॒ाड्वन॒स्पते᳚ᳲ प्रि॒या पाथाꣳ॑सि।
अया᳚ड्दे॒वाना॑माज्य॒पाना᳚ प्रि॒या धामा॑नि। यख्ष॑द॒ग्नेर्॒होतु॑ᳲ
प्रि॒या धामा॑नि। यख्ष॒थ्स्वं म॑हि॒मान᳚म्। आय॑जता॒मेज्या॒ इष॑ः।
कृ॒णोतु॒ सो अ॑ध्व॒रा जा॒तवे॑दाः। जु॒षताꣳ॑ ह॒विः। होत॒र्यज॑ ।।30।।

361100

नू॒नमर्थ॑ङ्कृ॒त्वी पाथा॑ꣳसि स॒प्त च॑ ।।11।।

361201

उपो॑ ह॒ यद्वि॒दथ॑व्वाँ॒जिनो॒ गूः। गी॒र्भिर्वि॑प्रा॒ᳲ

प्रम॑तिमि॒च्छमा॑नाः। अ॒र्वन्तो॒ न काष्ठा॒न्नख्ष॑माणाः। इ॒न्द्रा॒ग्नी

जोहु॑वतो॒ नर॒स्ते। वन॑स्पते रश॒नया॑ऽभि॒धाय॑। पि॒ष्टत॑मया

व॒युना॑नि वि॒द्वान्। वह॑ देव॒त्रा दिधि॑षो ह॒वीꣳषि॑। प्र च॑

दा॒तार॑म॒मृते॑षु वोचः। अ॒ग्नि स्वि॑ष्ट॒कृत᳚म्।

अया॑ड॒ग्निरि॑न्द्रा॒ग्नि॒योश्छग॑स्य ह॒विष॑ᳲ प्रि॒या धामा॑नि ।।31।।

361202

अया॒ड्वन॒स्पते᳚ᳲ प्रि॒या पाथा॑ꣳसि। अया᳚ड्दे॒वाना॑माज्य॒पाना᳚

प्रि॒या धामा॑नि। यख्ष॑द॒ग्नेर्होतु॑ᳲ प्रि॒या धामा॑नि। यख्ष॒थ्स्वं

म॑हि॒माना᳚म्। आय॑जता॒मेज्या॒ इष॑ः। कृ॒णोतु॒ सो अ॑ध्व॒रा

जा॒तवे॑दाः। जु॒षता॑ꣳ ह॒विः। अग्ने॒ यद॒द्य वि॒शो अ॑ध्वरस्य होतः।

पाव॑क शोचे॒ वेष्ट्वꣳ हि यज्वा᳚। ऋ॒ता य॑जासि महि॒ना वियद्भूः।

ह॒व्या व॑ह यविष्ठ॒ या ते॑ अ॒द्य ।।32।।

361200

धामा॑नि॒ भूरेक॑ञ्च ।।12।।

361301

दे॒वं ब॒र्॒हिस्सु॑दे॒वन्दे॒वैस्स्याथ्सु॒वीरँ॑व्वी॒रैर्वस्तो᳚

वृ॒ज्येता॒क्तोᳲ प्रभ्रि॑ये॒तात्य॒न्यान्रा॒या ब॒र्॒हिष्म॑तो

मदेम वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑।

दे॒वीर्द्वार॑स्सङ्घा॒ते वि॒ड्वीर्याम॑ङ्छिथि॒रा ध्रु॒वा दे॒वहू॑तौ

व॒थ्स ईं॑मेना॒स्तरु॑ण॒ आमि॑मीयात्कु॒मारो॒ वा॒ नव॑जातो॒

मैना॒ अर्वा॑ रे॒णुक॑काट॒ᳲ पृण॑ग्वसु॒वने॑ वसु॒धेय॑स्य वियन्तु॒ यज॑।

दे॒वी उ॒षासा॒नक्ताऽद्या॒स्मिन्य॒ज्ञे प्र॑य॒त्य॑ह्वेता॒मपि॑

नू॒नन्दैवी॒र्विश॒ᳲ प्राया॑सिष्टा॒ꣳ सुप्री॑ते॒ सुधि॑ते वसु॒वने॑

वसु॒धेय॑स्य वीता॒य्यँज॑। दे॒वी जोष्ट्री॒ वसु॑धिती॒ ययो॑र॒न्या

ऽघाद्वेषा॑ꣳसि यू॒यव॒दान्याव॑ख्ष॒द्वसु॒ वार्या॑णि॒ यज॑मानाय

वसु॒वने॑ वसु॒धेय॑स्य वीता॒ँय्यज॑। दे॒वी ऊ॒र्जाहु॑ती॒ इष॒मूर्ज॑

म॒न्याव॑ख्ष॒थ्सग्धि॒ꣳ सपी॑तिम॒न्या नवे॑न॒ पूर्व॒न्दय॑माना॒

स्स्याम॑ पु॒रा॒णेन॒ नव॒न्तामू॒र्ज॑मू॒र्जाहु॑ती ऊ॒र्जय॑माने
अधाताव्वँसु॒वने॑ वसु॒धेय॑स्य वीता॒ँय्यज॑। दे॒वा दैव्या॒ होता॑रा
नेष्टा॑रा पोता॑रा ह॒ताघ॑शꣳसावाभ॒रद्व॑सू वसु॒वने वसु॒धेय॑स्य
वीता॒य्यँज॑। दे॒वीस्ति॒स्रस्ति॒स्रो दे॒वीरिडा॒ सर॑स्वती॒ भार॑ती॒
द्यां भार॑त्यादि॒त्यैर॑स्पृख्स॒थ्सर॑स्वती॒मꣳ रु॒द्रैर्य॒ज्ञ
मा॑वीदि॒है॒वेड॑या॒ वसु॑मत्या सध॒माद॑ं मदेम वसु॒वने॑ वसु॒धेय॑स्य
वियन्तु॒ यज॑। दे॒वो न॒राशꣳस॑स्त्रिशी॒र्॒षा ष॑ड॒ख्क्षश्श॒तमिदे॑नꣳ
शितिपृ॒ष्ठा आद॑धति स॒हस्र॑मी॒ं प्रव॑हन्ति मि॒त्रावरु॒णेद॑स्य
हो॒त्रमर्ह॑तो॒ बृह॒स्पति॑स्स्तो॒त्रम॒श्विनाऽऽध्व॑र्यवव्वँसु॒वने॑
वसु॒धेयस्य॑ वेतु॒ यज॑। दे॒वो वन॒स्पति॑र्व॒र्॒षप्रा॑वा
घृ॒तनि॑र्णि॒ग्द्यामग्रे॒णास्पृ॑ख्स॒दान्तरि॑ख्स॒ं मध्ये॑नाप्रा॑ꣳ
पृथि॒वीमुप॑रेणादृꣳहीद्वसु॒वने॑ वसु॒थेय॑स्य वेतु॒ यज॑।
दे॒वं ब॒र्॒हिर्वारि॑तीनान्नि॒धेधा॑ऽसि॒ प्रच्यु॑तीना॒मप्र॑च्युत
न्निकाम॒धर॑णं पुरु॒स्पा॒र्॒हय्यँश॑स्वदे॒ना ब॒र्॒हिषा॒ऽन्या
ब॒र्॒हीꣳष्य॒भि ष्या॑म वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑।
दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृथ्सु॒द्रवि॑णा म॒न्द्रꣳ क॒विस्स॒त्यम॑न्मा
ऽऽय॒जी होता॒ होतु॑र्॒होतु॒राय॑जीया॒नग्ने॒ यान्दे॒वानया॒ड्याꣳ
अपि॑प्रे॒र्ये ते॑ हो॒त्रे अम॑थ्सत॒ ताꣳ स॑स॒नुषी॒ꣳ होत्रा॑न्देव
ङ्गमान्दि॒वि दे॒वेषु॑ य॒ज्ञमेर॑ये॒म स्वि॑ष्ट॒कृच्चाग्ने॒
होता॑ऽभूँर्वसु॒वने॑ वसु॒धेय॑स्य नमोवा॒के वीहि॒ यज॑ ।।33।।
361300
यजैक॑ञ्च ।।13।।
361401
दे॒वं ब॒र्॒हिः। व॒सु॒वने॑ वसु॒धेय॑स्य वेतु। दे॒वीर्द्वार॑ः।
व॒सु॒वने॑ वसु॒धेय॑स्य वियन्तु। दे॒वी उ॒षासा॒नक्ता॑। व॒सु॒वने॑
वसु॒धेय॑स्य वीताम्। दे॒वी जोष्ट्री॑। व॒सु॒वने॑ वसु॒धेय॑स्य वीताम्।
दे॒वी ऊ॒र्जाहु॑ती। व॒सु॒वने॑ वसु॒धेयस्य॑ वीताम् ।।34।।
361402
दे॒वा दैव्या॒ होता॑रा। व॒सु॒वने॑ वसु॒धेय॑स्य वीताम्। दे॒वीस्ति॒स्र
स्ति॒स्रो दे॒वीः। व॒सु॒वने॑ वसु॒धेय॑स्य वियन्तु। दे॒वो न॒राशꣳस॑ः।

वसुवने वसुधेयस्य वेतु। देवो वनस्पतिः। वसुवने
वसुधेयस्य वेतु। देवं बर्हिर्वारितीनाम्। वसुवने
वसुधेयस्य वेतु ।।35।।
361403
देवो अग्निस्स्विष्टकृत्। सुद्रविणा
मन्द्रः कविः। सत्यमन्मायजी होता। होतुर्होतुरायजीयान्।
अग्ने यान्देवानयाट्। याः अपिप्रेः। ये ते होत्रे अमथ्सत।
ताः ससनुषीः होत्रान्देवङ्गमाम्। दिवि देवेषु
यज्ञमेरयेमम्। स्विष्टकृच्चाग्ने होताऽभूः। वसुवने
वसुधेयस्य नमोवाके वीहि ।।36।।
361400
वीतांव्वेत्वभूरेकञ्च ।।14।।
361501
अग्निमद्य होतारमवृणीतायय्यँजमानः पचन्पक्तीः
पचन्पुरोडाशं बध्नन्निन्द्राग्निभ्याञ्छागं सूपस्था अद्य
देवो वनस्पतिरभवदिन्द्राग्निभ्याञ्छागेनाघस्तान्तं मेदस्तः
प्रतिपचताग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्यर्ष
आर्षेय ऋषीणान्नपादवृणीतायय्यँजमानो बहुभ्य आ सङ्गतेभ्य एष मे
देवेषु वसु वार्या यख्ष्यत इति ता या देवा देवदानान्यदु
स्तान्यस्मा आ च शास्वाच गुरस्वेषितश्च होतरसि भद्रवाच्याय
प्रेषितो मानुषस्सूक्तवाकाय सूक्ता ब्रूहि ।।37।।
361500
अग्निमद्यैकम्।।15।।
360000
अञ्जन्ति होता यख्षथ्समिद्धो अद्याग्निरजैदैव्या जुषस्वा
वृत्रहणा गीर्भिस्त्व ह्याभरतमुपोह यद्वेवं बर्हि
स्सुदेवन्देवं बर्हिरग्निमद्य पञ्चदश ।।15।।
अञ्जन्त्यग्निर्होता नो गीर्भिरुपो ह यद्विदथं
वाजिनस्सप्तत्रिꣳशत् ।।37।। अञ्जन्ति सूक्ताब्रूहि।।
हरिःओम्।। श्रीकृष्णार्पणमस्तु
षष्ठ प्रपाठक स्समाप्तः

370000

सप्तम प्रपाठक प्रारम्भः । हरिःओम्।

370101

सर्वान् वा एषोऽग्नौ कामान्प्रवेशयति । योऽग्नीनन्वाधाय

व्रतमुपैति । सयदनिष्ट्वा प्रया यात्। अकामप्रीता एनङ्कामा नानुप्रयायुः ।

अतेजा अवीर्यस्स्यात् । स जुहुयात् । तुभ्यन्ता अङ्गिरस्तम ।

विश्वास्सुक्षितयःपृथक् । अग्ने कामाय येमिर इति । कामानेवास्मिन्दधाति ।।1।।

370102

कामप्रीता एनङ्कामा अनु प्रयान्ति । तेजस्वी वीर्यावान्भवति ।

सन्ततिर्वा एषा यज्ञस्य । योऽग्नीनन्वाधाय

व्रतमुपैति । सयदुद्वायति । विच्छित्तिरेवास्यसा ।

तंप्राञ्चमुद्धृत्य । मनसोपतिष्ठेत । मनो वै प्रजापतिः।

प्राजापत्यो यज्ञः ।।2।।

370103

मनसैव यज्ञꣳ सन्तनोति । भूरित्याह । भूतो वै

प्रजापतिः । भूतिमेवोपैति । वि वा एष इन्द्रियेण

वीर्येणर्ध्यते । यस्याहिताग्नेरग्निरपक्षायति । यावच्छम्यया

प्रविध्येत् । यदि तावदपक्षायेत् । तꣳ

संभरेत्। इदन्त एकं पर उत एकम् ।।3।।

370104

तृतीयेन ज्योतिषा सँविशस्व । सँवेशनस्तनुवै

चारुरेधि । प्रियेदेवानां परमे जनित्र इति । ब्रह्मणैवैनꣳ

संभरति । सैव ततः प्रायश्चित्तिः । यदि परस्तरामपक्षायेत् । अनुप्र या

यावस्येत् । सो एव ततः प्रायश्चित्तिः । ओषधीर्वा एतस्य

पशून्पयः प्रविशति । यस्य हविषे वथ्सा अपाकृता धयन्ति ।।4।।

370105

तान् यद्दुह्यात्। यतयाम्ना हविषा यजेत ।

यन्न दुह्यात् । यज्ञपरुरन्तरियात् । वायव्याय्यँवागूनिर्वपेत् ।

वायुर्वै पयसः प्रदापयिता । स एवास्मै पयः प्रदापयति ।

पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयोऽवरुन्धे ।।5।।

370106

अथोत्तरस्मैहविषेवथ्सानपाकुर्यात्। सैवततःप्रायश्चित्तिः। अन्यतरान्

वाए॒ष दे॒वा न्भा॑ग॒देयै॑न॒ व्य॑र्धयति। येयज॑मानस्य

सा॒यङ्गृ॒हम॒ागच्छ॑न्ति। यस्य॑सायन्दु॒ग्धꣳ ह॒विरार्ति॑म॒ार्छति॑।

इन्द्रा॑यव्री॒हीन्नि॒रुप्योप॑वसेत्। पयो॒वा ओष॑धयः। पय॑ए॒वारभ्य॑गृह॒ीत्वोप॑वसति।

यत्प्रा॒तस्स्यात्। तच्छृ॒तङ्कु॑र्यात्।।6।।

370107

अथेत॑रऐ॒न्द्रꣳ पु॑रो॒डाश॑ स्स्यात्। इ॒न्द्रि॒ये ए॒वास्मै॑स॒मीची॑दधाति। पयो॒वा

ओष॑धयः। पय॒ꣳपय॑ः। पय॑सै॒वास्मै॒ पयोऽव॑रुन्धे। अथोत्त॑रस्मैह॒विषे॑

व॒थ्सान॒पाकु॑र्यात्। सैवतत॒ꣳप्राय॑श्चित्तिः। उ॒भया॒न्वा

ए॒षदे॒वान्भा॑ग॒धेयै॑न॒ व्य॑र्धयति। येयज॑मानस्य

सा॒यञ्चप्रा॒तश्च॑ गृ॒हमा॒ गच्छ॑न्ति। यस्यो॒भयꣳ॑

ह॒विरार्ति॑म॒ार्छति॑।।7।।

370108

ऐ॒न्द्रंपञ्च॑शरावमोदु॒मनन्निर्व॑पेत्। अ॒ग्निंदे॒वता॑नां

प्र॒थमय्यँ॑जेत्। अ॒ग्निमु॑खाए॒व दे॒वता॑ꣳ प्रीणाति। अ॒ग्निव्वाँ अ

न्व॒न्यादे॒वता॑ः। इन्द्र॒ मन्व॒न्याः। ताए॒वोभयी॑ꣳप्रीणाति। पयो॒वा ओष॑धयः।

पय॒ꣳपय॑ः। पय॑सै॒वास्मै॒पयोऽव॑रुन्धे। अथोत्तर॑स्मैह॒विषे॑व॒थ्सान॒पाकु॑र्यात्।।8।।

370109

सैवतत॒ꣳप्राय॑श्चित्तिः। अ॒र्धो वाए॒तस्य॑य॒ज्ञस्य॑ मीयते।

यस्य॒व्रत्येहह॒न्पत्न्य॑नालम्भु॒काभव॑ति। ताम॑प॒रुध्य॑यजेत।

सर्वे॑णै॒व य॒ज्ञेन॑ यजते। तामि॒ष्ट्वोप॑ह्वयेत। अमू॒हम॑स्मि। सात्वम्।

द्यौर॒हम्। पृथि॒वीत्वम्। सामा॒हम्। ऋक्त्वम्। तावेहि॒संभ॑वाव।

स॒हरेतो॑दधावहै। पु॒ꣳसेपु॒त्राय॒वेत्त॑वै। रा॒यस्पोषा॑य सुप्रजा॒स्त्वाय॑

सु॒वीर्या॒येति॑। अ॒र्धए॒वै ना॒मुप॑ह्वयते। सैवतत॒ꣳ प्राय॑श्चित्तिः।।9।।

370100

द॒धा॒तिय॒ज्ञउ॒त॒एक॒न्धय॑न्ति रुन्धेकुर्यादा॒र्छत्य॒पाकु॑र्यात्पृथि॒वीत्वम॒ष्टौच॑।।1।।

370201

सर्वा॒न् विवै यदि॑परस्त॒रामोष॑धीरन्यत॒रानु॒भया॑न॒र्धोवै।।

यद्विष्य॑ण्णेन जु॒हुयात्। अप्र॑जा अप॒शुर्यज॑मानस्स्यात्।

यदना॑यतने नि॒नये॑त्। अ॒ना॒य॒त॒नस्स्या॑त्।

प्रा॒जा॒प॒त्यय॒र्चा व॑ल्मीकव॒पाया॒मव॑नयेत्।

प्रा॒जा॒प॒त्यो वै व॒ल्मीक॑ः। य॒ज्ञꣳ प्र॒जाप॑तिः। प्र॒जाप॑तावे॒व य॒ज्ञं

प्रतिष्ठापयति। भूरित्याह। भूतो वै प्रजापतिः।।10।।
370202
भूतिमेवोपैति। तत्कृत्वा। अन्यां दुग्ध्वा पुनर् होतव्यम्।
सैव तत॰ प्रायश्चित्तिः। यत्कीटावपन्नेन जुहूयात्। अप्रजा अपशुर्यजमानस्स्यात्।
यदनायतने निनयेत्। अनायतनस्स्यात्।
मध्यमेन पर्णेन द्यावापृथिव्ययर्चाऽन्त॰परिधि निनयेत्।
द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति।।11।।
370203
तत्कृत्वा। अन्यां दुग्ध्वा पुनर् होतव्यम्। सैव तत॰ प्रायश्चित्तिः।
यदववृष्टेन जुहुयात्। अपरूपमस्यात्मञ्जायेत। किलासोवा स्यादर् शसोवा।
यत्प्रत्येयात्। यज्ञँव्विच्छिन्द्यात्। स जुहुयात्। मित्रोजनान्कल्पयति
प्रजानन्।।12।।
370204
मित्रो दाधार पृथिवीमुत द्याम्। मित्र॰ कृष्टीरनिमिषाऽभिचष्टे।
सत्याय हव्यङ्घृतवज्जुहोतेति। मित्रेणैवैनत्कल्पयति। तत्कृत्वा।
अन्यां दुग्ध्वा पुनर् होतव्यम्। सैव तत॰प्रायश्चित्तिः।
यत्पूर्वस्यामाहुत्याः हुतायामुत्तराऽऽहुतिः स्कन्देत्। द्विपाद्भि॰
पशुभिर्यजमानो व्यृध्येत। यदुत्तरयाऽभिजुहूयात्।।13।।
370205
चतुष्पाद्भि॰पशुभिर्यजमानो व्यृध्येत। यत्र वेत्थ वनस्पते
देवानाङ्गुह्या नामानि। तत्र हव्यानि गामयेति
वानस्पत्ययर्चा समिधमाधाय। तूष्णीमेव पुनर्जुहुयात्।
वनस्पतिनैव यज्ञस्यार्ताञ्चानार्ताञ्चाहुती विदाधार।
तत्कृत्वा। अन्यां दुग्ध्वा पुनर् होतव्यम्। सैव तत॰
प्रायश्चित्तिः। यत्पुरा प्रयाजेभ्य॰ प्राङङ्गारस्स्कन्देत्।
अध्वर्यवे च यजमानाय चार्क स्यात्।।14।।
370206
यद्दक्षिणा। ब्रह्मणे च यजमानाय चार्क स्यात्। यत्प्रत्यक्।
होत्रे च पत्नियै च यजमानाय चार्क स्यात्। यदुदङ्क्। अग्नीधे च
पशुभ्यश्च यजमानाय चार्क स्यात्। यदभिजुहुयात्। रुद्रोस्य
पशून्घातुकस्स्यात्। यन्नाभिजुहुयात्। अशान्त॰ प्रहियेत।।15।।

370207
स्रु॒वस्य॒ बुध्ने॑नाभि॒निद॑ध्यात्। मा तमो॒
माय॒ज्ञस्त॑म॒न्मायज॑मानस्तमत्। नम॑स्ते
अस्त्वाय॒ते। नमो॑ रुद्रपराय॒ते। नम॒ोयत्र॒ नि॒षीद॑सि।
अ॒मुं माहि॑ꣳ सीर॒मुंहि॑ꣳसी॒रिति॒ येन॒स्कन्दे॑त्। तंप्र॑हरेत्।
स॒हस्र॑शृङ्गोवृष॒भो जा॒तवे॑दाः। स्तोम॑पृष्ठो घृ॒तवा॑न्थ्सु॒प्रतीकः। मा
नो॑हासीन्मेत्थि॒तो नेत्त्वा॒जहा॑म। गो॒पो॒षन्नो॑ वीरपो॒षञ्च॑य॒च्छेति॑।
ब्रह्म॑णै॒वैनं॒ प्रह॑रति। सैवतत॒ꣳ प्राय॑श्चित्तिः।।16।।
370200
वै प्र॒जाप॑तिस्स्थापयति प्रजा॒नन्न॒भि जु॑हु॒याथ्स्या॑द्ध्रियेत॒ जहा॑म॒ त्रीणि॑च।।2।।
370301
यद्विष॑ण्णेन प्राजाप॒त्यया॒ यत्क्री॒टा म॑ध्य॒मेन॒ यदव॑वृष्टेन॒
यत्पूर्व॑स्या॒य्यँत्पु॒रा प्र॑या॒जेभ्य॒ꣳप्राङङ्गा॑रो॒ यद्द॑क्षि॒णा यत्प्र॒त्यग्यदु॒दङ्। ।।
विवा ए॒षा इन्द्रि॒येण॑ वी॒र्ये॑णर्ध्यते। यस्याहि॑ताग्नेर॒ग्निर्म॒थ्यमा॑नो
न जाय॑ते। यत्रा॒न्यं पश्ये॑त्। तत॑ आ॒हृत्य॑ होत॒व्य॑म्। अ॒ग्नावे॒वास्या॑ग्निहो॒त्रꣳहु॒तंभ॑वति।
यद्य॒न्यन्नवि॒न्देत्। अ॒जाया॑ꣳ होत॒व्य॑म्। आ॒ग्ने॒यी वा ए॒षा। यद॒जा।
अ॒ग्नावे॒वास्या॑ग्निहो॒त्रꣳ हु॒तं भ॑वति।।17।।
370302
अ॒जस्य॒ तु नाश्ञी॑यात्। यद॒जस्या॑श्ञी॒यात्। या॒मे॒वाग्नावाहु॑तिञ्जुहु॒यात्। ताम॑द्यात्। तस्मा॑द॒जस्य॒
नाश्य॑म्। यद्य॒जान्नवि॒न्देत्। ब्रा॒ह्म॒णस्य॒ दक्षि॑णे॒ हस्ते॑
होत॒व्य॑म्। एष वा अ॒ग्निर्वै॑श्वान॒रः। यद्ब्रा॑ह्म॒णः।
अ॒ग्नावे॒वास्या॑ग्निहो॒त्रꣳ हु॒तं भ॑वति।।18।।
370303
ब्रा॒ह्म॒णन्तु व॑स॒त्यैनाप॑रुन्ध्यात्। यद्ब्रा॑ह्म॒णव्वँस॒त्या
अ॑परु॒न्ध्यात्। यस्मि॑न्ने॒वाग्नावाहु॑तिञ्जुहू॒यात्।
तम्भा॑गधेये॑न॒ व्य॑र्धयेत्। तस्मा॑द्ब्राह्म॒णो व॑स॒त्यैनाप॒रुध्यः॑।
यदि॑ब्राह्म॒णन्नवि॒न्देत्। द॒र्भ॒ स्त॒म्बेहो॑त॒व्य॑म्। अ॒ग्निवान्
वैद॑र्भस्त॒म्बः। अ॒ग्नावे॒वास्या॑ग्नि हो॒त्रꣳ हु॒तं भ॑वति। द॒र्भाꣳस्तु नाध्या॑सीत।।19।।
370304
यद्द॒र्भान॒ध्यासी॑त। या॒मे॒वाग्नावाहु॑तिञ्जुहु॒यात्। ताम॒ध्या॑सीत।
तस्मा॑द्द॒र्भानाध्यासित॒व्या॑ः। यदि॑ द॒र्भान्नवि॒न्देत्। अ॒प्सुहो॑त॒व्य॑म्। आपो॒वै

सर्वा॑दे॒वताः᳚। दे॒वता॒स्वे॒वास्या᳚ग्निहो॒त्रꣳ हु॒तं भ॑वति। आप॒स्तुनप॑रि॑चख्षीत।
यदाप॑ꣳ परि॒चख्षी॑त।।20।।
370305
याम्॒ेवाफ्स्वाहु॑तिञ्जुहु॒यात्। तां परि॑चख्षीत। तस्मा॒दापो॒ नप॑रि॒चख्ष्या᳚ः। मेध्या॑चु॒वा
ए॒तस्या॑मे॒ध्याच॑त॒नुवौ॒ सꣳ सृ॑ज्येते। यस्याहि॑ताग्ने॒रन्यै॒रग्निभि॒॑रग्नय॑स्सꣳ सृ॒ज्यन्ते᳚।
अ॒ग्नये॒ विवि॑चये पु॒रोडाश॑म॒ष्टा क॑पाल॒ न्निर्व॑पेत्।
मेध्या᳚ञ्चैवास्या॑मे॒थ्याञ्च॑ त॒नुवौ॒ व्याव॑र्तयति।
अ॒ग्नये᳚ व्र॒तप॑तये पु॒रोडाश॑म॒ष्टाक॑पाल॒न्निर्व॑पेत्। अ॒ग्निमे॒व
व्र॒तप॑ति॒ स्वेन॑ भाग॒धेये॒नोप॑धावति। स ए॒वैन॑व्व्र॒तमाल॑म्भयति।।21।।
370306
गर्भ॒ स्रव॑न्तमग॒दम॑कः। अ॒ग्निरिन्द्रि॒स्त्वष्टा॒
बृह॒स्पति॑ः। पृ॒थि॒व्यामव॑चुश्चोते॒तत्। नाभिप्राप्नो॑ति॒ निर्ऋ॑तिं॑ परा॒चैः। रेत॒ोवा
ए॒तद्वाजि॑न॒माहि॑ताग्नेः। यद॑ग्निहो॒त्रम्। तद्यथ्स्रवे᳚त्। रेतो᳚ऽस्य॒
वाजि॑नस्रवेत्। गर्भ॒ꣳ स्रव॑न्तमग॒दम॑कु॒रित्या॑ह। रेत॑ ए॒वास्मि॒न्वाजि॑नन्दधाति।।22।।
370307
अ॒ग्निरित्या॑ह। अ॒ग्निर्वै रेत॒ोधाः। रेत॑एव तद्द॑धाति। इन्द्र॒इत्या॑ह।
इ॒न्द्रियमे॒वास्मि॑न्दधाति। त्वष्टेत्या॑ह। त्वष्टा॒वै प॑शू॒नां मि॑थु॒नानाꣳ᳚
रूप॒कृत्। रू॒पमे॒वप॒शुषु॑दधाति। बृह॒स्पति॒रित्या॑ह। ब्रह्म॒वै दे॒वाना॒ं
बृह॒स्पति॑ः। ब्रह्म॑णै॒ वास्मै᳚ प्र॒जाꣳप्रज॑नयति। पृ॒थि॒व्यामव॑चुश्चो
ते॒तदित्या॑ह। अ॒स्यामे॒वैन॒त्प्रति॑ष्ठापयति। नाभिप्राप्नो॑ति॒निर् ऋ॑तिं
परा॒चैरित्या॑ह। रख्ष॑सा॒मप॑हत्यै ।।23।।
370300
अजा॒ऽग्नावे॒वास्या᳚ग्निहो॒त्रꣳ हु॒तं भ॑वति भवत्यासीत परि॒चख्षी॑त
लम्भयति दधाति दे॒वाना॒ं बृह॒स्पति॒ꣳपञ्च॑च।।3।।
370401
विवैयद्य॒न्यम॒जाया᳚ं ब्राह्म॒णस्य॑दर्भस्त॒म्बे᳚ऽप्सुहो॑त॒व्य॑म्।।
याꣳ पु॒रस्ता᳚त्प्र॒स्रव॑न्ति। उ॒परि॑ष्टाथ्स॒र्वत॑श्च॒ याः। ताभी॑र॒श्मिप॑वित्राभिः।
श्र॒द्धाय्यँ॒ज्ञमार॑भे। दैवा॑गातुविदः। गा॒तुय्यँ॒ज्ञाय॑विन्दत।
मन॑स॒स्पति॑नादे॒वेन॑। वाता᳚द्य॒ज्ञꣳप्रयु॑ज्यताम्। तृ॒तीय॑स्यैदि॒वः।
गा॒य॒त्रिया सोम॒ आभृ॑तः ।।24।।
370402

सोमपीथाय सन्नयितुम्। वर्कलमन्तरमाददे। आपोदेवीश्शुद्धास्स्थ।

इमापात्राणिशुन्धत। उपातङ्क्ष्यायदेवानाम्। पूर्णवल्कमुतशुन्धत।

पयोगृहेषुपयोअघ्नियासु। वयोवथ्सेषु पय

इन्द्राय

हविषेध्रियस्व। गायत्रीपर्ण वल्केन। पयस्सोमङ्करोत्विमम्।।25।।

370403

अग्निर्ङ्गृह्णामिसुरथँय्योमयोभूः। य उद्यन्तमारोहति सूर्यमह्ने।

आदित्यञ्ज्योतिषाञ्ज्योतिरुत्तमम्। श्वोयज्ञाय रमतान्देवताभ्यः।

वसूँन्रुद्रानादित्यान्। इन्द्रेणसहदेवताः। ताꣳपूर्वꣳ परिगृह्णामि। स्व

आयतने मनीषया। इमामूर्जं पञ्चदशीय्ये प्रविष्टाः।

तान्देवान्परिगृह्णामिपूर्वः ।।26।।

370404

अग्निर् हव्यवाडिहताना वहतु। पौर्णमासꣳ हविरिदमेषां मयि।

आमावास्यꣳहविरिदमेषां मयि।

अन्तराऽग्री पशवः। देवसꣳसदमागमन्।

तान्पूर्वꣳपरिगृह्णामि। स्व आयतने मनीषया। इह प्रजा विश्वरूपा रमन्ताम्।

अग्निङ्गृहपतिमभिसव्वँसानाः। ताꣳपूर्वꣳपरिगृह्णामि।।27।।

370405

स्वआयतनेमनीषया। इहपशवो विश्वरूपारमन्ताम्।

अग्निङ्गृहपतिमभिसव्वँसानाः। तान्पूर्वꣳ

परिगृह्णामि। स्वआयतनेमनीषया। अयंपितृणामग्निः।

अवाड्ढव्यापितृभ्य आ। तंपूर्वꣳपरिगृह्णामि। अविषन्नꣳपितुङ्करत्।

अजस्रन्त्वाꣳ सभापालाः ।।28।।

370406

विजयभागꣳ समिन्धताम्। अग्नेदीदायमेसभ्य। विजित्यैशरदश्शतम्।

अन्नमावसथीयँम्। अभिहराणि शरदश्शतम्। आवसथेश्रियं मन्त्रम्।

अहिर्बुध्नि योनियच्छतु। इदमहमग्नि ज्येष्ठेभ्यः। वसुभ्योयज्ञं प्रब्रवीमि ।

इदमहमिन्द्र ज्येष्ठेभ्यः ।।29।।

370407

रुद्रेभ्योयज्ञं प्रब्रवीमि। इदमहं वरुणज्येष्ठेभ्यः।

आदित्येभ्योयज्ञं प्रब्रवीमि। पयस्वतीरोषधयः। पयस्वद्वीरुधांपयः। अपांपयसो

यत्पयः। तेनमामिन्द्रसꣳ सृज। अग्ने व्रतपते व्रतञ्चरिष्यामि

। तच्छकेयन्तन्मेराध्यताम्। वायोव्रतपत आदित्यव्रतपते ।।30।।

370408

व्रतानाव्व्रँतपते व्रतञ्चरिष्यामि। तच्छकेयन्तन्मे राध्यताम्। इमां

प्राचीमुदीचीम्। इषमूर्जमभिसस्कृताम्। बहुपर्णामशुष्काग्राम्।

हरामि पशुपामहम्। यत्कृष्णोरूपङ्कृत्वा। प्राविशस्त्वव्वँनस्पतीन्।

ततस्त्वामेकविꣳशतिधा। संभरामि सुसंभृता ।।31।।

370409

त्रीन्परिधीꣳ स्तिस्रस्समिधः। यज्ञायुरनुसञ्चरान्।

उपवेषंमेख्वणन्धृष्टिम्। संभरामिसुसंभृता। याजाता ओषधयः।

देवेभ्यस्त्रियुगंपुरा। तासां पर्व राध्यासम्। परिस्तरमाहरन्।

अपांमेध्यय्यँज्ञियम्। सदेवꣳ शिवमस्तुमे ।।32।।

370410

आच्छेत्ता वो मा रिषम्। जीवानि शरदश्शतम्। अपरिमितानां परिमिताः । सन्नह्येसुकृतायकम्।

एनो मा निगाङ्कतमञ्चनाहम्। पुनरुत्थाय बहूला भवन्तु। सकृदाच्छिन्नं बर् हिरूर्णामृदु।

स्योनंपितृभ्यस्त्वाभराम्यहम्। अस्मिन् थ्सीदन्तुमे पितरस्सोम्याः।

पितामहाꣳप्रपितामहाश्चानुगैस्सह।।33।।

370411

त्रिवृत्पलाशे दुर्भः। इयान्प्रा देश सम्मितः। यज्ञेपवित्रं

पोतृतमम्। पयोहव्यङ्करोतुमे। इमौ प्राणापानौ। यज्ञस्याङ्गानि

सर्वशः। आप्याययन्तौ सञ्चरताम्। पवित्रेहव्यशोधने। पवित्रेस्थो वैष्णवी।

वायुर्वा मनसापुनातु ।।34।।

370412

अयंप्राणश्चापानश्च। यजमानमपि गच्छताम्। यज्ञेह्यभूतां पोतारौ। पवित्रेहव्यशोधने। त्वया

वेदिँव्विविदुꣳपृथिवीम्। त्वयायज्ञो जायते विश्वदानिः।

अच्छिद्रय्यँज्ञमन्वेषिविद्वान्। त्वया होता सन्तनोत्यर्धमासान्।

त्रयस्त्रिꣳशोऽसि तन्तूनाम्। पवित्रे सहागहि ।।35।।

370413

शिवेयꣳ रज्जुरभिधानी। अग्नियामुपसेवताम्। अप्रस्रꣳसाय यज्ञस्य।

उखेउपदधाम्यहम्। पशुभिस्सन्नीतं बिभृताम्। इन्द्रायशृतन्धधि।

उपवेषोसियज्ञाय। त्वांपरिवेषमधारयन्। इन्द्रायहविꣳकृण्वन्तः।

शि॒वश्श॒ग्मोभ॑वासिनः ।।36।।
370414
अमृ॑न्मयन्देवपा॒त्रम्। य॒ज्ञस्यायु॑षि॒प्रयु॑ज्यताम्। ति॒र॒ᳶप॒वि॒त्रमति॑नीताः। आपो॑धारय॒माति॑गुः।
दे॒वेन॑सवि॒त्रोत्पू॑ताः। वसो॒स्सूर्य॑स्यर॒श्मिभि॑ः। गान्दो॑हपवि॒त्रेरज्जु॑म्।
सर्वा॒पात्रा॑णिशुन्धत। ए॒ताआच॑रन्ति॒मधु॑म॒द्दुहा॑नाः। प्र॒जाव॑तीर्य॒शसो॑
वि॒श्वरू॑पाः ।।37।।
370415
ब॒ह्वीर्भव॑न्ती॒रुप॒जाय॑मानाः। इ॒हव॒इन्द्रो॑रमयतुगावः।
पू॒षास्थ॑। अ॒य॒ख्मावᳶप्र॒जया॒सꣳसृ॑जामि। रा॒यस्पोषे॑ण बह॒ुलाभव॑न्तीः।
ऊ॒र्जं॒पय॒ᳶपिन्व॑मानाघृ॒तञ्च॑। जी॒वोजीव॑न्ती॒रुप॑वस्सदेयम्।
द्यौश्चे॒मँय्य॒ज्ञं पृ॑थि॒वीच॒ सन्दु॑हाताम्। धा॒तासोमे॑न स॒हवाते॑न
वा॒युः। यज॑माना॒यद्रवि॑णन्दधातु ।।38।।
370416
उथ्स॑न्दुहन्तिक॒लशञ्चतु॑र्बिलम्। इडा॑न्दे॒वीम्मधु॑मतीꣳ सुव॒र्विद॑म्।
तदि॑न्द्रा॒ग्नीजि॑न्वतꣳ सू॒नृता॑वत्। तद्यज॑मानममृ॒त॒त्वेद॑धातु। काम॑धुख्ष॒ᳶप्रणो॑ब्रूहि।
इन्द्रा॑य ह॒विरि॑न्द्रि॒यम्। अ॒मूय्यँस्या॑न्दे॒वाना॑म्।
म॒नु॒ष्या॑णां पयो॑हि॒तम्। ब॒हु दु॒ग्धीन्द्रा॑य दे॒वेभ्य॑ः। ह॒व्यमाप्या॑यता॒ंपुन॑ः।।39।।
370417
व॒थ्सेभ्यो॑ मनु॒ष्ये॑भ्यः। पु॒न॒र्दो॒हाय॑कल्पताम्। य॒ज्ञस्य॒
सन्त॑तिरसि। य॒ज्ञस्य॑त्वा॒ सन्त॑ति॒मनु॒सन्त॑नोमि। अद॑स्तमसि॒ विष्ण॑वेत्वा।
य॒ज्ञायापि॑ दधाम्य॒हम्। अ॒ग्भिररि॑क्तेन॒पात्रे॑ण। याᳶपू॒ताᳶपरि॒शेर॑ते।
अ॒यंपय॒स्सोम॑ङ्कृ॒त्वा। स्वाँय्योनि॒मपि॑गच्छतु।।40।।
370418
प॒र्ण॒व॒ल्कᳶपवि॒त्र॑म्। सौ॒म्यस्सोमा॒द्धिनिर्मि॑तः।
इ॒मौप॒र्णञ्च॑ द॒र्भञ्च॑। दे॒वानाꣳ॑हव्य॒शोध॑नौ। प्रा॒त॒र्वे॒षाय॑ गोपाय।
विष्णो॑ह॒व्यꣳ हिरख्ष॑सि। उ॒भाव॒ग्नी उ॑पस्तृण॒ते। दे॒वता॒ उप॑वसन्तुमे।
अ॒हङ्ग्रा॒म्यानुप॑ वसामि। मह्य॒ङ्गोप॑तये प॒शून् ।।41।।
370400
आभृ॑त इ॒मङ्गृ॑ह्णामि॒ पूर्व॒स्ताᳶ पूर्व॒ᳶपरि॑गृह्णामि
सभापा॒ला इन्द्र॑ज्येष्ठेभ्य॒ आदि॑त्यव्रतपते सुस॒ंभृता॑मे स॒हपु॑नातु गहिनो वि॒श्वरू॑पा
दधातु॒ पुन॑र्गच्छतु प॒शून् ।।4।।
370501

याःपुरस्तादिमामूर्जमिह प्रजाइह पशवोऽयं पितृणामग्निः ।
देवादेवेषु पराक्रमध्वम्। प्रथमाद्वितीयेषु। द्वितीयास्तृतीयेषु।
त्रिरेकादशा इहमावत। इदꣳ शकेयय्यँदिदङ्करोमि। आत्माकरोत्वात्मने।
इदङ्करिष्येभेषजम्। इदम्मे विश्वभेषजा। अश्विनाप्रावतय्युँवम्।
इदमहꣳसेनाया अभीत्वर्यै ।।42।।
370502
मुखमपोहामि। सूर्यज्योतिर्विभाहि। महत इन्द्रियाय। आप्यायताङ्घृतयोनिः। अग्निर्
हव्याऽनुमन्यताम्। खमङ्ख्वत्वचमङ्ख्व। सुरूपन्त्वा वसुविदम्।
पशूनान्तेजसा। अग्नयेजुष्टमभिघारयामि। स्योनन्ते सदनङ्करोमि।।43।।
370503
घृतस्यधारया सुशेवङ्कल्पयामि। तस्मिन् थ्सीदामृते प्रतितिष्ठ।
व्रीहीणाम्मेधसुमनस्यमानः। आर्द्रः प्रथस्नुर्भुवनस्यगोपाः। शृत
उथ्स्नाति जनितामतीनाम्। यस्तआत्मापशुषु प्रविष्टः।
देवानाँव्विष्ठामनुयो वितस्थे। आत्मन्वान् थ्सोमघृतवान् हिभूत्वा।
देवान्गच्छ सुर्वविन्द यजमानायमह्यम्। इराभूतिः पृथिव्यैरसोमोत्क्रमीत्।।44।।
370504
देवाःपितरःपितरोदेवाः। योहमस्मिससन् यजे। यस्यास्मिनतमन्तरेमि। स्वंम
इष्टस्वन्दत्तम्। स्वंपूर्तस्वश्रान्तम्। स्वꣳहुतम्।
तस्यमेऽग्निरुपद्रष्टा। वायुरुपश्रोता। आदित्योऽनुख्याता। द्यौःपिता।।45।।
370505
पृथिवीमाता। प्रजापतिर्बन्धुः। यएवास्मिससन् यजे।
माभेर्मासँव्विक्थामात्वाहिꣳसिषम्। मातेतेजोऽपक्रमीत्। भरतमुद्धरेमनुषिञ्च।
अवदानानि तेप्रत्यवदास्यामि। नमस्ते अस्तुमामाहिꣳ सीः। यदवदानानि तेऽवद्यन्।
विलोमाकार् षमात्मनः ।।46।।
370506
आज्येनप्रत्यनज्म्येनत्। तत्तआप्यायतां पुनः। अज्यायो यवमात्रात्। आव्याधात्कृत्यतामिदम्।
मारूरुपामयज्ञस्य। शुद्ध स्विष्टमिदꣳहविः। मनुनादृष्टाङ्घृतपदीम्। मित्रावरुणसमीरिताम्।
दख्शिणार्धादसंभिन्दन्। अवद्याम्येकतो मुखाम् ।।47।।
370507
इडेभागं जुषस्वनः। जिन्वगा जिन्वार्वतः। तस्यास्ते भख्शिवाणस्स्याम। सर्वात्मानस्सर्वगणाः।
ब्रध्नपिन्वस्व। ददतोमेमाख्शायि। कुर्वतोमे मोपदसत्। दिशाङ्कॢप्तिरसि । दिशोमेकल्पन्ताम् ।

कल्पन्ताम्मेदिशः ।।48।।
370508
दैवीश्च मानुषीश्च। अहोरात्रेमे कल्पेताम्। अर्धमासामेकल्पन्ताम्।
मासामे कल्पन्ताम्। ऋतवोमे कल्पन्ताम्। सव्वँथ्सरोमे कल्पताम्।
कॢप्तिरसिकल्पतांमे। आशानांत्वाऽऽशापालेभ्यः। चतुर्भ्यो अमृतेभ्यः।
इदंभूतस्याध्यक्षेभ्यः।।49।।
370509
विधेमहविषा वयम्। भजतां भागीभागम्। माभागोऽभक्त।
निरभागं भजामः। अपस्पिन्व। ओषधीर्जिन्व। द्विपात्पाहि। चतुष्पादव।
दिवोवृष्टिमेरय। ब्राह्मणानामिदꣳहविः ।।50।।
370510
सोम्यानाꣳ सोमपीथिनाम्। निर्भक्तोब्राह्मणः। नेहाब्राह्मणस्यास्ति।
समङ्क्तां बर्हिर् हविषा घृतेन। समादित्यैर्वसुभिस्सम्मरुद्भिः। समिन्द्रेण
विश्वेभिर्देवेभिरङ्क्ताम्। दिव्यंनभोगच्छतु यथ्स्वाहा।। इन्द्राणीवाऽविधवा
भूयासम्। अदितिरिवसुपुत्रा। अस्थूरित्वा गार् हपत्य ।।51।।
370511
उपनिषदे सुप्रजास्त्वाय। संपत्नी पत्या सुकृतेनगच्छताम्।
यज्ञस्ययुक्तौधुर्यावभूताम्। संजानानौ विजहतामरातीः। दिवि
ज्योतिरजरमारभेताम्। दशते तनुवो यज्ञयज्ञियाः। ताꣳप्रीणातु
यजमानोघृतेन। नारिष्ठयोꣳप्रशिषमीडमानः। देवानां
दैव्येऽपियजमानोऽमृतोभूत्। यंव्वाँन्देवा अकल्पयन्।।52।।
370512
ऊर्जोभागꣳ शतक्रतू। एतद्वांतेन प्रीणानि। तेनतृप्यतमꣳहहौ।
अहन्देवानाꣳ सुकृतामस्मिल्लोके। ममेदमिष्टन्नमिथुर्भवाति।
अहन्नारिष्ठावनुयजामि विद्वान्। यदाभ्यामिन्द्रो अदधाद्भागधेयम्।
अदारसृद्भवत देवसोम। अस्मिन् यज्ञे मरुतोमृडतानः। मानोविददभिभामो अशस्तिः ।।53।।
370513
मानोविदद्वृजना द्वेष्याया। ऋषभव्वाँजिनव्वँयम्। पूर्णमासय्यँजामहे।
सनोदोहताꣳ सुवीर्यम्। रायस्पोषꣳसहस्रिणम्। प्राणायसुराधसे।
पूर्णमासाय स्वाहा। अमावास्यासुभगासुशेवा। धेनुरिवभूय
आप्यायमाना। सानोदोहताꣳ सुवीर्यम्। रायस्पोषꣳ सहस्रिणम्। अपानाय

सुराधसे। अमावास्यायै स्वाहा। अभिस्तृणीहिपरिधेहि वेदिम्।
जामिम्माहिꣳ सीरमुया शयाना। होतृषदना हरितास्सुवर्णाः। निष्काइमे
यजमानस्यब्रध्ने ।।54।।
370500
अभीत्वर्यैकरोमिक्रमीत्पिताऽऽत्मनं एकुतो मुखां मेदिशोऽध्यंख्वेभ्यो
हविर्गार् हपत्याकल्पयन्न शस्तिस्सानो दोहताः सुवीर्यꣳ सप्तर्च ।।5।।
370601
परिस्तृणीत परिधत्ताग्निम्। परिहितोऽग्निर्यजमानं भुनक्तु। अपाः रस
ओषधीनाः सुवर्णः। निष्काइमे यजमानस्य सन्तु कामदुघाः।
अमुत्रामुष्मिंल्लोके। भूपते भुवनपते। महतो भूतस्यपते।
ब्रह्माणन्त्वावृणीमहे। अहं भूपतिरहं भुवनपतिः। अहं महतोभूतस्यपतिः।।55।।
370602
देवेन सवित्रा प्रसूत आर्त्विज्यङ्करिष्यामि। देवसवितरेतन्त्वावृणते।
ब्रहस्पतिंदैव्यंब्रह्माणम्। तदहं मनसेप्रब्रवीमि। मनोगायत्रियै। गायत्री
त्रिष्टुभे। त्रिष्टुब्जगत्यै। जगत्यनुष्टुभे। अनुष्टुक्पङ्क्त्यै। पङ्क्तिः
प्रजापतये ।।56।।
370603
प्रजापतिर्वि श्वेभ्यो देवेभ्यः। विश्वेदेवा बृहस्पतये।
बृहस्पतिर्ब्रह्मणे। ब्रह्मभूर्भुवस्सुवः। बृहस्पतिर्देवानां ब्रह्मा।
अहंमनुष्याणाम्। बृहस्पते यज्ञङ्गोपाय। इदंतस्मैहर्म्यङ्करोमि।
योवोदे वाश्चरति ब्रह्मचर्यम्। मेधावीदिख्षुमनसातपस्वी।।57।।
370604
अन्तर्दूतश्चरति मानुषीषु। चतुश्शिखण्डा युवतिस्सुपेशाः।
घृतप्रतीका भुवनस्यमध्ये। मर्मृज्यमाना महते सौभगाय।
मह्यन्धुख्व्वयजमानायकामान्। भूमिर्भूत्वामहिमानंपुपोष।
ततो देवीर्वर्धयते पयाꣳसि। यज्ञिया यज्ञँव्विचयन्तिशञ्च। ओषधीराप
इहशक्करीश्च। योमाहृदामनसायश्चवाचा।।58।।
370605
योब्रह्मणाकर्मणाद्वेष्टिदेवाः। यश्श्रुतेन हृदयेनेष्णताच।
तस्येन्द्रवज्रेण शिरश्छिनद्मि। ऊर्णामृदु प्रथमानस्योनम्।
देवेभ्योजुष्टꣳसदनाय बर् हिः। सुवर्गेलोके यजमानꣳहि धेहि।

मांनाकस्य पृष्ठेपरमेव्योमन्। चतुश्शिखण्डा यवतिस्सुपेशाः।
घृतप्रतीकावयुनानिवस्ते।साऽऽस्तीर्यमाणा महते सौभगाय ।।59।।
370606
सामेधुख्व यजमानाय कामान्। शिवाचमेशग्माचैधि। स्योनाचमे
सुषदाचैधि। ऊर्जस्वतीचमे पयस्वतीचैधि। इषमूर्जं मेपिन्पस्व।
ब्रह्मतेजोमेपिन्पस्व। ख्यत्रमोजो मेपिन्वस्व। विशंपुष्टिंम्मेपिन्वस्व।
आयुरन्नाद्यम्मेपिन्वस्व। प्रजांपशून्मे पिन्वस्व ।।60।।
370607
अस्मिन् यज्ञ उपभूयइन्नुमे। अविख्योभायपरिधीन्दधामि। धर्ताधरुणोधरीयान्।
अग्निर्द्वेषाꣳसि निरितोनुदातै। विच्छिनद्मिविधृतीभ्याꣳ सपत्नान्।
जातान्भ्रातृव्यान् येच जनिष्यमाणाः। विशोयन्त्राभ्याँव्विधमाम्येनान्।
अहस्वानामुत्तमोसानिदेवाः। विशोयन्त्रेनुदमाने अरातिम्।
विश्वं पाप्मान ममतिन्दुर्मरायुम् ।।61।।
370608
सीदन्ती देवीसुकृतस्यलोके। धृतीस्थोविधृती स्वधृती। प्राणान्मयि धारयतम्।
प्रजाम्मयिधारयतम्। पशून्मयिधारयतम्। अयंप्रस्तर उभयस्यधर्ता।
धर्ताप्रयाजानामुतानूयाजानाम्। सदाधारसमिधोविश्वरूपाः। तस्मिन्थ्स्रुचो
अध्यासादयामि। आरोहपथोजुहुदेवयानान् ।।62।।
370609
यत्रर् षयꣳ प्रथमजायेपुराणाः। हिरण्यपख्याऽजिरासम्भृ ताङ्गा। वहासि
मासुकृतायँत्रलोकाः। अवाहं बाध उपभृता सपत्नान्। जातान्भ्रातृव्यान् येच
जनिष्यमाणाः। दोहैयज्ञꣳ सुदुघामिवधेनुम्। अहमुत्तरो भूयासम्।
अधरेमथ्सपत्नाः। योमावाचामनसा दुर्मरायुः। हृदऽरातीया
दभिदासदग्ने ।।63।।
370610
इदमस्य चित्तमधरन्ध्रुवायाः। अहमुत्तरोभूयासम्। अधरेमथ्सपत्नाः।
ऋषभोसिशाक्करः। घृताचीनाꣳ सूनुः। प्रियेणनाम्ना प्रियेसदसिसीद।
स्योनोमेसीदसुषदꣳ पृथिव्याम्। प्रथयि प्रजयापशुभिस्सुवर्गेलोके।
दिविसीदपृथिव्यामन्तरिख्ये। अहमुत्तरोभूयासम्।।64।।
370611
अधरेमथ्सपत्नाः। इयस्थालीघृतस्य पूर्णा। अच्छिन्नपयाश्शतधारउत्सः। मारुतेन

शर्म॑णा॒दैव्ये॑न। य॒ज्ञो॑सि स॒र्वत॑श्श्रि॒तः। स॒र्वतो॒ मां भू॒तं भ॑वि॒ष्यच्छ्र्र॑यताम्।

श॒तम्मे॑सन्त्वा॒शिषः॑। स॒हस्र॑म्मे सन्तु सू॒नृताः॑। इरा॑वतीः॰ पश॒मतीः॑।

प्र॒जाप॑तिरसिस॒र्वत॑श्श्रि॒तः ।।65।।

370612

स॒र्वतो॒ मां भू॒तं भ॑वि॒ष्यच्छ्र्र॑यताम् । श॒तं मे॑ सन्त्वा॒शिषः॑ । स॒हस्रं॑ मे सन्तु सू॒नृताः॑ ।

इरा॑वतीः॰ पश॒मतीः॑ । इ॒दमि॑न्द्रि॒यम॒मृत॑ँव्वी॒र्य॑म् । अ॒नेनेन्द्रा॑य प॒शवो॑ऽचिकित्सन् । तेन॑ देवा

अव॒तोप॒ माम् । इ॒हेष॒मूर्ज॒य्य॑ँश॒स्सह॒ ओज॑स्सनेयम् ।

शृ॒तं मयि॑ श्रयताम् । यत्पृ॑थि॒वीमच॑र॒त्तत्प्रवि॑ष्टम् ।।66।।

370613

येनासि॑ञ्च॒द्बल॒मिन्द्रे॑ प्र॒जाप॑तिः इ॒दन्तच्छु॒क्रंमधु॑वा॒जिनी॑वत्।

येनो॒परि॑ष्टा॒दधि॑नोन्मह॒ेन्द्रम्। दधि॒मान्धि॑नोतु। अ॒यँव्वे॒दः॰पृ॑थि॒वीमन्व॑विन्दत्।

गुहा॑स॒तीङ्गह॑ने॒गह्व॑रेषु। सविन्दतु॒ यज॑मानायल॒ोकम्। अच्छि॑द्रय्य॒ँज्ञंभूरि॑कर्माकरोतु।

अ॒यय्य॒ँज्ञस्सम॑सदद्धविष्मान्। ऋ॒चासाम्ना॒यजु॑षादे॒वता॑भिः।।67।।

370614

तेन॑ल॒ोकान्थ्सूर्य॑वतोजयेम। इन्द॑स्य॑स॒ख्यम॑मृत॒त्वम॑श्याम्। योन॒ःकनी॑य इ॒हका॒मया॑तै।

अ॒स्मिन् य॒ज्ञे यज॑माना॒यमह्य॑म्। अप॒तमि॑न्द्रा॒ग्नीभुव॑नान्नुदेताम्।

अ॒हंप्र॒जाँव्वी॒रव॑तीँ व्विदेय। अग्ने॑वाजजित्। वाज॑न्त्वा सरि॒ष्यन्त॑म्।

वाज॑ञ्जे॒ष्यन्त॑म्। वा॒जिन॑व्वाँज॒जित॑म् ।।68।।

370615

वा॒ज॒जि॒त्याय॒ैसंमा॑र्ज्मि। अ॒ग्निम॑न्ना॒दम॒न्नाद्या॑य। उप॑हूत॒ोद्यौः॰पि॒ता।

उप॒मान्द्यौः॰पि॒ताह्व॑यताम्। अ॒ग्निराग्नी॑ध्रात्। आयु॑षे॒ वर्च॑से।

जी॒वात्वैपुण्या॑य। उप॑हूतापृथि॒वीमा॒ता। उप॒मांमा॒तापृ॑थि॒वीह्व॑यताम्। अ॒ग्निराग्नी॑ध्रात्।।69।।

370616

आयु॑षे॒वर्च॑से। जी॒वात्वैपुण्या॑य। मन॒ोज्योति॑र्जुषत॒ामाज्य॑म्।

विच्छि॑न्नय्य॒ँज्ञंसमि॒मन्द॑धातु। बृह॒स्पति॑स्तनुता॒मि॒मन्नः॑। विश्वे॑दे॒वा

इ॒हमा॑दयन्ताम्। यन्ते॑ अग्न आवृश्चामि॑। अ॒हव्वाँ॑क्षिपि॒तश्चरन्।

प्र॒जाञ्च॒तस्य॒मूल॑ञ्च। न॒ीचैर्दे॒वानिवृ॑श्चत।।70।।

370617

अग्ने॒योनो॑ऽभि॒दास॑ति। स॒मा॒नोयश्च॒निष्ट्यः॑। इ॒ध्मस्ये॑वप्र॒क्षाय॑तः। मातस्योच्छे॑षि॒किञ्च॒न।

योमान्द्वेष्टि॑जातवेदः। यञ्चा॒हन्द्वेष्मि॒यश्च॒माम्। सर्वा॒ँस्तानग्ने॒सन्द॑ह।

यां॑श्चा॒हन्द्वेष्मि॒येच॒माम्। अग्ने॑वाजजित्। वाज॑न्त्वाससृ॒वांसं॑म् ।।71।।

370618

वार्जञ्जिगिवाꣳसम्। वाजिनव्वाँजजितम्। वाजजित्यायै सम्मार्ज्मि।
अग्निमन्नादमन्नाद्याय। वेदिर्बर्‌ हिश्शृतꣳ हविः।
इध्मꣳपरिधयस्स्रुचः। आज्यय्यँज्ञ ऋचोयजुः। याज्याँश्चवषट्काराः। सम्मेसन्नतयोनमन्ताम्।
इध्मसन्नहने हुते।।72।।
370619
दिवꣳखीलोऽवततः। पृथिव्या अध्युत्थितः। तेनासहस्रकाण्डेन। द्विषन्तꣳ
शोचयामसि। द्विषन्मेबहुशोचतु। ओषधेमो अहꣳशुचम्।
यज्ञनमस्तेयज्ञ। नमोनमश्चतेयज्ञ। शिवेन
मेसन्तिष्ठस्व। स्योनेनमे सन्तिष्ठस्व ।।73।।
370620
सुभूतेनमे सन्तिष्ठस्व। ब्रह्मवर्चसेन मेसन्तिष्ठस्व।
यज्ञस्यर्ध्दि मनुसन्तिष्ठस्व। उपतेयज्ञनमः।
उपतेनमः। उपतेनमः। त्रिष्फलीक्रियमाणानाम्। योन्यङ्गो
अवशिष्यते। रखसांभागधेयम्। आपस्तत्प्र वहतादितः ।।74।।
370621
उलूखले मुसले यच्चशूर्पे। आशिश्लेषदृषदि यत्कपाले।
अवप्रुषो विप्रुषस्सँय्यजामि। विश्वेदेवा हविरिद
ञ्जुषन्ताम्। यज्ञे याविप्रुषस्सन्तिबह्वीः।
अग्नौतस्सर्वास्स्विष्टास्सुहुता जुहोमि।
उद्यन्नद्यमित्रमहः। सपत्नान्मे अनीनशः। दिवैनान् विद्युता जहि।
निम्रोचन्नधरान्कृधि ।।75।।
370622
उद्यन्नद्यविनोभज। पितापुत्रेभ्योयथा। दीर्घायुत्वस्य हेशिषे। तस्यनोदेहि सूर्य।
उद्यन्नद्यमित्रमहः। आरोहन्नुत्तरान्दिवम्। हृद्रोगम्ममसूर्य।
हरिमाणञ्च नाशय। शुकेषुमे हरिमाणम्। रोपणाकासुदध्मसि।।76।।
370623
अथोहारिद्रवेषुमे। हरिमाणन्निदध्मसि। उदगादयमादित्यः। विश्वेन
सहसासह। द्विषन्तंममरन्धयन्। मो अहन्द्विषतोरधम्।
योनश्शपादशपतः। यश्चनश्शपतश्शपात्। उषाश्च तस्मैनिम्रुक्च।
सर्वं पापꣳ समूहताम्।।77।।
370624

योन॑स्स॒पत्नो॒ योरणः॑। मर्तो॑ऽभि॒दास॑तिदेवाः। इ॒ध्मस्ये॑व प्र॒ख्षाय॑तः।
मातस्योच्छे॑षि॒ किञ्च॒न। अव॑सृष्ट॒ꣳपरा॑पत। श॒रो ब्रह्म॑सꣳशितः।
गच्छा॒ऽमित्रा॒न्प्रवि॑श । मैषा॒ङ्कञ्च॒नो च्छि॑षः ।।78।।
370600
पति॑ꣳ प्र॒जाप॑तये तप॒स्वी वा॒चा सौभ॑गाय प॒शून्मे॑ पिन्वस्व दुर्म॒रायुन्दे॑व॒याना॑नग्ने॒
ऽन्तरि॑ख्षे॒ऽहमुत्त॑रो भूयासं प्र॒जाप॑तिरसि स॒र्वत॑श्श्रि॒तꣳप्रवि॑ष्टन्दे॒वता॑भिर्वा॑ज॒जित॑
पृथि॒वी ह्व॑यताम॒ग्नि राग्नी॑ ध्राह्वश्चत ससृ॒वाꣳसꣳ हु॒ते स्यो॒नेन॑म॒मे
सन्ति॑ष्ठस्वे॒तꣳकृ॑धि दध्मस्यू॒हताम॒ष्टौच॑ ।।6।।
360701
सख्षे॒दं प॑श्य। विध॑र्तरि॒दंप॑श्य। नाके॒दंप॑श्य। र॒मति॒ꣳपनि॑ष्ठा।
ऋतव्वँर् षिष्ठम्। अ॒मृता॒यान्या॒हुः। सूर्यो॒वरि॑ष्ठोअ॒ख्षभि॒र्विभा॑ति।
अनु॒द्यावा॑पृथि॒वी दे॒वपु॑त्रे। दी॒ख्षाऽसि॒ तप॑सो॒योनिः॑। तपो॑सि॒
ब्रह्म॑णो॒योनिः॑ ।।79।।
360702
ब्रह्मा॑सि ख्ष॒त्रस्य॒योनिः॑। ख्ष॒त्रम॑स्यृ॒तस्य॒योनिः॑।
ऋतम॑सि॒भूरार॑भे। श्र॒द्धांमन॑सा। दी॒ख्षान्तप॑सा। विश्व॑स्य॒
भुव॑न॒स्याधि॑पत्नीम्। सर्वे॒कामा॒ यज॑मानस्य सन्तु। वात॑
प्रा॒णंमन॑सा॒ऽस्वार॑भामहे। प्र॒जाप॑ति॒य्यो भुव॑नस्य
गो॒पाः। सनो॑मृत्योस्त्रा॑यता॒ं पात्वꣳह॑सः ।।80।।
360703
ज्योग्जी॒वा ज॒राम॑शीमहि। इन्द्र॑शाक्कर गाय॒त्रीं प्रप॑द्ये। तान्ते॑ युनज्मि।
इन्द्र॑शाक्करत्रि॒ष्टुभ॒ं प्रप॑द्ये। तान्ते॑युनज्मि। इन्द्र॑शाक्क॒र् जग॑ती॒ं प्रप॑द्ये।
तान्ते॑युनज्मि। इन्द्र॑शाक्करानु॒ष्टुभ॒ंप्रप॑द्ये। तान्ते॑युनज्मि। इन्द्र॑शाक्करप॒ङ्क्तिं प्रप॑द्ये।।81।।
360704
तान्ते॑युन ज्मि। आऽहन्दी॒ख्षाम॑रुहमृ॒तस्य॒ पत्नी॑म्। गा॒य॒त्रेण॒
छन्द॑सा॒ब्रह्म॑णाच। ऋ॒तꣳ स॒त्ये॑ऽधायि। स॒त्यमृ॒ते॑ऽधायि। ऋ॒तञ्च॑मे
स॒त्यञ्चा॑भूताम्। ज्योति॑रभूवꣳ सुव॑रगमम्। सु॒वर्गँल्लोकन्नाक॑स्य
पृष्ठम्। ब्र॒ध्नस्य॑ वि॒ष्टप॑मगमम्। पृथि॒वीदी॒ख्षा।।82।।
360705
तया॒ऽग्निर्दी॒ख्षया॑ दीख्षि॒तः। यया॒ऽग्निर्दी॒ख्षया॑ दीख्षि॒तः।
तया॑त्वादी॒ख्षया॑ दीख्षयामि। अ॒न्तरि॑ख्षन्दी॒ख्षा। तया॑वा॒युर्दी॒ख्षया॑ दीख्षि॒तः।

यया॑वा॒युर्दी॒क्षया॑ दीक्षि॒तः। तया॒त्वादी॒क्षया॑दीक्षयामि। द्यौर्दी॒क्षा।
तया॑ऽऽदि॒त्योदी॒क्षया॑दीक्षि॒तः। यया॑ऽऽदि॒त्योदी॒क्षया॑दीक्षि॒तः ।।83।।
360706
तया॒त्वादी॒क्षया॑दीक्षयामि। दिशो॑दी॒क्षा। तया॑ च॒न्द्रमा॑ दी॒क्षया॑दीक्षि॒तः।
यया॑ च॒न्द्रमा॑ दी॒क्षया॑ दीक्षि॒तः। तया॒त्वादी॒क्षया॑दीक्षयामि।
आपो॑दी॒क्षा। तया॒ वरु॑णो॒राजा॑ दी॒क्षया॑दीक्षि॒तः। यया॒वरु॑णो॒ राजा॑ दी॒क्षया॑
दीक्षि॒तः। तया॒त्वादी॒क्षया॑दीक्षयामि। ओष॑धयोदी॒क्षा।।84।।
360707
तया॒सोमो॒राजा॑ दी॒क्षया॑ दीक्षि॒तः। यया॒सोमो॒ राजा॑ दी॒क्षया॑ दीक्षि॒तः।
तया॒त्वा दी॒क्ष या॑दीक्षयामि। वाग्दी॒क्षा। तया॒प्रा॒णो दी॒क्षया॑ दीक्षि॒तः।
यया॒प्रा॒णो दी॒क्षया॑दीक्षि॒तः। तया॒त्वा दी॒क्षया॑दीक्षयामि। पृथि॒वीत्वा॒
दीक्ष॑माण॒मनु॑दीक्षताम्। आ॒न्तरि॑क्षन्त्वा॒दीक्ष॑माण॒मनु॑दीक्षताम्।
द्यौस्त्वा॒दीक्ष॑माण॒मनु॑ दीक्षताम् ।।85।।
360708
दिश॑स्त्वा॒ दीक्ष॑माण॒मनु॑ दीक्षन्ताम्। आप॑स्त्वा॒ दीक्ष॑माण॒मनु॑ दीक्षन्ताम्।
ओष॑धयस्त्वा॒दीक्ष॑माण॒मनु॑दीक्षन्ताम्। वाक्त्वा॒दीक्ष॑माण॒मनु॑ दीक्षताम्।
ऋच॑स्त्वा॒दीक्ष॑माण॒मनु॑दीक्षन्ताम्। सामा॑नित्वा॒दीक्ष॑माण॒मनु॑ दीक्षन्ताम्।
यजू॑ꣳषित्वा॒दीक्ष॑माण॒मनु॑ दीक्षन्ताम्। अह॑श्च॒रात्रि॑श्च। कृ॒षिश्च॒ वृष्टि॑श्च।
त्विषि॒श्चाप॑चितिश्च ।।86।।
360709
अप॒श्चौष॑धयश्च। ऊर्क्च॑सू॒नृता॑च। तास्त्वा॒ दीक्ष॑माण॒मनु॑दीक्षन्ताम्।
स्वेदक्षे॒दक्ष॑पिते॒हसी॑द। दे॒वाना॑ꣳ सु॒म्नो म॑ह॒तेरणा॑य।
स्वास॒स्थस्त॒नुवा॒सँव्वि॑शस्य। पि॒तेवै॑धिसू॒नव॒आसु॒शेव॑ः। शि॒वोमा॑शि॒वमावि॑श।
स॒त्यम्मं॑ आ॒त्मा। श्र॒द्धामेऽक्षि॑तिः।।87।।
360710
तपो॑मेप्रति॒ष्ठा। स॒वि॒तृप्र॑सूतामा॒दिशो॑दीक्षयन्तु। स॒त्यम॑स्मि।
अ॒हन्त्वद॑स्मि॒ मद॑सि॒त्वमे॒तत्। ममा॑सि॒योनि॒स्तव॒योनि॑रस्मि।
ममै॒वसन्वह॑ ह॒व्यान्य॑ग्ने। पु॒त्रꣳपि॒त्रेलो॑क॒कृज्जा॑तवेदः।
आ॒जुह्वा॑नस्सु॒प्रतीक॑ꣳ पु॒रस्ता॑त्। आग्ने॒स्वाँय्योनि॒मासी॑दसा॒ध्या। अ॒स्मिन्थ्स॒धस्थे॒
अध्युत्त॑रस्मिन्।।88।।
360711

विश्वेदेवा यजमानश्चसीदत। एकमि षे विष्णुस्त्वाऽन्वेतु।
द्वेऊर्जेविष्णुस्त्वाऽन्वेतु। त्रीणिव्रताय विष्णुस्त्वान्वेतु। चत्वारि
मायोभवाय विष्णुस्त्वान्वेतु। पञ्चपशुभ्योविष्णुस्त्वाऽन्वेतु। षड्रायस्पोषाय
विष्णुस्त्वाऽन्वेतु। सप्तसप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु।
सखायस्सप्तपदा अभूम। सख्यन्ते गमेयम्।।89।।
360712
सख्यात्ते मायोषम्। सख्यान्मे मायोष्ठाः। सासिसुब्रह्मण्ये। तस्यास्तेपृथिवीपादः।
साऽसिसुब्रह्मण्ये। तस्यास्तेऽन्तरिक्षंपादः। साऽसिसुब्रह्मण्ये।
तस्यास्तेद्यौःपादः। साऽसिसुब्रह्मण्ये। तस्यास्ते दिशःपादः ।।90।।
360713
परोरजास्ते पञ्चमःपादः। सानइषमूर्जं न्धुक्ष्व। तेज इन्द्रियम्।
ब्रह्मवर्चसमन्नाद्यम्। विमिमेत्वा पयस्वतीम्। देवानां
न्धेनुंसुदुघामनपस्फुरन्तीम्। इन्द्र स्सोमं पिबतु। क्षेमो अस्तुनः। इमा
न्नराःकृणुतवेदिमेत्य। वसुमतीं रुद्रवतीमादित्यवतीम्।।91।।
360714
वर्ष्मन्दिवः। नाभापृथिव्याः। यथाऽय य्यँजमानो नरिष्येत्। देवस्य सवितुस्सवे।
चतुश्शिखण्डा युवतिस्सुपेशाः। घृतप्रतीका भुवनस्य मध्ये।
तस्यां सुपर्णावधि यौनिविष्टौ। तयोर्देवानामधि भागधेयम्।
अपजन्यम्भयन्नुद। अपचक्राणि वर्तय। गृहंसोमस्यगच्छतम्। नवा
उवेतन्म्रियसे न रिष्यसि। देवां इदेषि पृथिभिस्सुगेभिः।
यत्रयन्तिसुकृतोनापिदुष्कृतः। तत्रत्वा देवस्सवितादधातु।।92।।
370700
ब्रह्मणो योनिरंहंसः पङ्क्तिं प्रपद्ये दीक्षायया ऽऽदित्यो दीक्षया दीक्षितस्तया
त्वादीक्षया दीक्षयाम्योषधयो दीक्षाद्यौस्त्वा दीक्षमाणमनु
दीक्षतामपचितिश्चाक्षितिरुत्तरस्मिन्गामेय न्दिशः पाद आदित्यवती व्वँर्तयपञ्चच ।।7।।
370801
यदस्य पारे रजसः। शुक्रञ्ज्योतिरजायत। तन्नःपर् षदतिद्विषः।
अग्नेवैस्वानरस्वाहा। यस्माद्भीषावाशिष्ठाः। ततोनो अभय ङ्कृधि।
प्रजाभ्यस्सर्वाभ्यो मृड। नमोरुद्रायमीडुषे।
यस्माद्भीषान्यषदः। ततोनो अभय ङ्कृधि ।।93।।
370802

प्रजाभ्यस्सर्वाभ्योमृड। नमोरुद्रायमीढुषे। उदुस्रतिष्ठ प्रतितिष्ठमारिषः। मेमय्यँज्ञ
य्यँजमानञ्चरीरिषः। सुवर्गेलोके यजमानꣳहिधेहि। शन्नएधि द्विपदे शञ्चतुष्पदे।
यस्माँद्भीषावेपिष्ठाः पलायिष्ठास्समज्ञास्थाः। ततोनो अभयङ्कृधि।
प्रजाभ्यस्सर्वाभ्योमृड। नमोरुद्रायमीडुषे।।94।।
370803
य इदमकः। तस्मैनमः। तस्मैस्वाहा। नवाउवेतन्म्रियसे। आशानान्त्वाविश्वाआशाः।
यज्ञस्यहिस्थऋत्वियौ। इन्द्राँग्नीचेतनस्यच। हुताहुतस्य तृप्यतम्।
अहुतस्य हुतस्यच। हुतस्यचाहुतस्य च। अहुतस्य हुतस्यच। इन्द्राँग्नी
अस्यसोमस्य। वीतं पिबतञ्जुषेथाम्। मा यजमान न्तमोविदत्। मर्त्विजोमो
इमाः प्रजाः। मायस्सोममिमंपि बात्। सꣳसृष्टमुभयङ्कृतम्।।95।।
370800
कृधिमीढु षेऽ हुतस्यचसप्तच ।।8।।
370901
अनागसस्त्वावयम्। इन्द्रेणप्रेषिताउप। वायुष्टे अस्त्वꣳशभूः। मित्रस्ते
अस्त्वꣳशभूः। वरुणस्ते अस्त्वꣳशभूः। अपांक्षयाऋतस्यगर्भाः।
भुवनस्यगोपाश्श्येना अतिथयः। पर्वतानाङ्ककुभः प्रयुतोनपातारः।
वग्नु नेन्द्र ह्वयत। घोषेणामीवाꣳश्चातयत ।।96।।
370902
युक्तास्स्थवहत। देवाग्रावाण इन्दुरिन्द्र इत्यवादिषुः।
एन्द्रमचुच्यवुः परमस्याःपरावतः। आऽस्माथ्सधस्थात्। ओरोरन्तरिक्षात्।
आसुभूतमसुषवुः। ब्रह्मवर्चसम्म् च आसुषवुः। समरेरक्षाꣳस्यवधिषुः। अपहतं ब्रह्मज्यस्य।
वाक्चत्वा मनश्च श्रीणीताम्।।97।।
370903
प्राणश्चत्वाऽपानश्च श्रीणीताम्। चक्षुश्चत्वा श्रोत्रञ्चश्रीणीताम्। दक्षश्चत्वा बलञ्चश्रीणीताम्।
ओजश्चत्वा सहश्चक्षीणीताम्। आयुश्चत्वाऽजराच श्रीणीताम्। आत्मा
चत्वातनूश्च श्रीणीताम्। शृतोसि शृतङ्कृतः। शृतायत्वाशृतेभ्यस्त्वा।
यमिन्द्रमाहुर्वरुण य्यँमाहुः। यम्मित्रमाहुर्य मुसत्यमाहुः ।।98।।
370904
योदेवाना न्देवतमस्तपोजाः। तस्मैत्वा तेभ्यस्त्वा। मयित्यदिन्द्रिय
म्महत्। मयिदक्षोमयिक्रतुः। मयिधायिसु वीर्यम्। त्रिशुग्घर्मोविभातुमे। आकूत्या मनसासह।
विराजाज्योतिषासह। यज्ञेन पयसासह। तस्यदोहमशीमहि ।।99।।
370905

तस्य॑सु॒म्नम॑शीमहि। तस्य॑भ॒क्षम॑शीमहि। वाग्जु॑षा॒णासोम॑स्यतृप्यतु।
मि॒त्रोजन॒ान्प्रसमि॑त्र। यस्मा॒न्न जा॒तᳶपरो॑ अ॒न्योअस्ति॑। यआ॑वि॒वेश॒ भुव॑नानि॒
विश्वा᳚। प्र॒जाप॑तिᳶ प्र॒जया॑सँव्विदा॒नः। त्रीणि॒ज्योती॑ꣳषि सचते॒ सषो॑ड॒शी।
ए॒षब्र॒ह्मायऋ॒त्विय॑ः। इन्द्रो॒नाम॑श्रु॒तोग॒णे ।।100।।
370906
प्रतै॑म॒हेवि॒दथे॑ शꣳसिष॒ꣳहरी᳚। य ऋ॒त्विय॒ᳶ प्रतै॑वन्वे। व॒नुषो॑हर्य॒त
म्मदा᳚म्। इन्द्रो॒नाम॑ घृ॒तन्नयः। हरि॑भि॒श्चारु॒सेच॑ते। श्रु॒तोग॒णआत्वा॑
विशन्तु। हरि॑वर्पस॒ङ्गिर॑ः। इन्द्राधि॑प॒तेऽधि॑पति॒स्त्व न्दे॒वाना॑मसि।
अधि॑पति॒म्माम्। आयु॑ष्मन्त॒व्वँर्च॑स्वन्त म्मनु॒ष्ये॑षु कुरु ।।101।।
370907
इन्द्र॑श्चस॒म्राड्वरु॑णश्च॒राजा᳚। तौतै॑भ॒क्ष ञ्च॑क्रतु॒रग्र॑ए॒तम्। तय॒ोरनु॑भ॒क्षं भ॑क्षयामि।
वाग्जु॑षा॒णा सोम॑स्य तृप्यतु। प्र॒जाप॑तिर्वि॒श्वक॑र्मा। तस्य॒मनो॑दे॒व
य्यँ॒ज्ञेन॑राध्यासम्। अ॒र्थे॒गा अ॒स्यज॑हितः। अ॒व॒सान॑पतेऽव॒सान॑म्मेविन्द।
नमो॑रु॒द्राय॑ वास्तो॒ष्पत॑ये। आय॑नेवि॒द्रव॑णे ।।102।।
370908
उ॒द्याने॒ यत्प॒राय॑णे। आ॒वर्त॑ने वि॒वर्त॑ने। योगो॑पा॒यति॒तꣳहु॑वे।
यान्य॑पा॒मित्या॒न्यप्र॑तीत्ता॒न्यस्मि॑। य॒मस्य॑ ब॒लिना॒चरा॑मि। इ॒हैवसन्त॒ᳶप्रति॒ तद्या॑तयामः।
जी॒वाजी॒वेभ्यो॒निर्ह॑रामएनत्। अ॒नृ॒णा अ॒स्मिन्न॑नृ॒णाᳶ पर॑स्मिन्। तृ॒तीये॑
लो॒के अ॑नृ॒णास्स्या॑म। येदे॑व॒याना॑ उ॒तपि॑तृ॒याणा᳚ः।।103।।
370909
सर्वा᳚न्प॒थो अ॑नृ॒णा आख्षी॑येम। इ॒दमू॒नुश्रेयो॑व॒सान॒मार्ग॑न्म। शि॒वेनो॒
द्यावा॑पृथि॒वी उ॒भेइ॒मे। गोम॒द्धन॑व॒दश्व॑व॒दूर्ज॑स्वत्। सु॒वीरा॑
वी॒रैरनु॒सञ्च॑रेम। अ॒र्कᳶप॒वि॒त्रꣳ॒रज॑सोवि॒मान॑ः। पु॒नाति॑दे॒वाना॒म्भुव॑नानि॒विश्वा᳚। द्यावा॑पृथि॒वी
पय॑सा सँव्विदा॒ने। घृ॒त न्दु॑हाते अ॒मृत॒म्प्रपी॑ने। प॒वित्र॑म॒र्को॑रज॑सोवि॒मान॑ः। पु॒नाति॑दे॒वाना॒
म्भुव॑नानि॒ विश्वा᳚।सुव॒र्ज्यो॑ति॒र्यशो॑ म॒हत्। अ॒शी॒महि॑ गा॒धमु॒तप्र॑ति॒ष्ठाम्।।104।।
370900
चा॒त॒य॒त॒श्री॒णी॒ताꣳ॒ स॒त्यमा॒हुर॑शीमहि ग॒णे कु॑रुवि॒द्रव॑णेपितृ॒याणा॑
अ॒र्को॑रज॑सो वि॒माना॒स्त्रीणि॑च ।।9।।
371001
उद॑स्तांफ्सीथ्सवि॒ता मि॒त्रो अ॑र्य॒मा। सर्वा॑न॒मित्रा॑नवधीद्यु॒गेन॑। बृ॒हन्त॒
म्माम॑करद्वी॒रव॑न्तम्। र॒थ॒न्त॒रेश्र॑यस्व॒स्वाहा॑पृथि॒व्याम्।

वा॒म॒दे॒व्येश्र॑यस्व॒स्वाहा॒ऽन्तरि॑ख्षे।

बृ॒ह॒तिश्र॑यस्व॒स्वाहा॑दि॒वि। बृ॒ह॒तात्वोप॑स्तभ्नोमि। आत्वा॑ददे॒यश॑से

वी॒र्या॑यच। अ॒स्मास्व॑ग्निया यू॒यन्द॑धाथेन्द्रि॒यं॑पय॑ः। यस्तौ᳚द्र॒फ्सोयस्त॑उद॒र्॒ षः।।105।।
371002

दैव्य॑ꣳके॒तुर्वि॑श्व॒म्भुव॑नमावि॒वेश॑। सन॑ꣳपा॒ह्यरि॑ष्ट्यै॒स्वाहा᳚।

अनु॑मा॒सर्वो॑य॒ज्ञो॑ऽयमे॑तु। विश्वे॑दे॒वाम॒रुत॒स्सामा॒र्कः।

आ॒प्रिय॒श्छन्दा॑ꣳसिनि॒विदो॒ यजू॑ꣳषि। अ॒स्यै पृ॑थि॒व्यैयद्य॒ज्ञियँ᳚म्।

प्र॒जाप॑तेर्व॒र्त॒निमनु॑वर्तस्व। अनु॑वी॒रैरनु॑राध्याम॒गोभि॑ः।

अन्वश्वै॒रनु॒सर्वै᳚रुपु॒ष्टैः। अनु॑ प्र॒जयाऽन्वि॑न्द्रि॒येण॑ ।।106।।
371003

दे॒वानो॑ य॒ज्ञमृं॑जु॒धान॑यन्तु। प्रति॑ख्ष॒त्रे प्रति॑तिष्ठामि रा॒ष्ट्रे। प्रत्यश्वे॑षु॒

प्रति॑तिष्ठामि॒गोषु॑। प्रति॑प्र॒जायां॒ प्रति॑तिष्ठामि॒भव्ये᳚। विश्व॑म॒न्याऽभि॑वावृ॒धे।

तद॒न्यस्या॒मधि॑श्रि॒तम्। दि॒वेच॑ वि॒श्वक॑र्मणे। पृ॒थि॒व्यैचा॑कर॒न्नम॑ः। अस्का॒न्द्यौꣳपृ॑थि॒वीम्।

अस्का॑नृष॒भोयुवा॒गाः ।।107।।
371004

स्क॒न्ने माविश्वा॒भुव॑ना। स्क॒न्नोय॒ज्ञꣳप्रज॑नयतु। अस्का॒नज॑नि॒प्राज॑नि।

आस्क॒न्नाज्जा॑यत॒वृषा᳚। स्क॒न्नात्प्रज॑निषीमहि। येदे॒वा येषा॑मि॒दम्भा॑ग॒धेय॑म्ब॒भूव॑।

येषां᳚प्रया॒जाउ॒तानू॑या॒जाः। इन्द्र॑ज्येष्ठेभ्यो॒वरु॑णराजभ्यः।

अ॒ग्निहो॑तृभ्यो दे॒वेभ्य॒स्स्वाहा᳚। उ॒तत्यानो॒दिवा॑म॒तिः ।।108।।
371005

अदि॑तिरू॒त्याग॑मत्। साशन्ता॑ची॒मय॑स्करत्। अप॒स्रिध॑ः। उ॒तत्यादै व्या॑भि॒षजा᳚।

शन्न॑स्करतो अ॒श्विना᳚। यू॒याता॑म॒स्मद्रप॑ः। अप॒स्रिध॑ः।

शम॒ग्निर॒ग्निभि॑स्करत्। शन्न॑ स्तपतु॒सूर्य॑ः। शव्वाँ॑तो॑

वात्वर॒पाः ।।109।।
371006

अप॒स्रिध॑ः। तदित्प॒दन्नविचि॑केतवि॒द्वान्। यन्मृ॒तꣳ पुन॑र॒प्येति॑जी॒वान्।

त्रि॒वृद्यद्भुव॑नस्यरथ॒वृत्। जी॒वोगर्भो॒नमृ॒तस्स जीवा॑त्। प्रत्य॑स्मै॒पिपी॑षते।

विश्वा॑नि वि॒दुषे॑भर। अ॒र॒ङ्ग॒माय॒जग्म॑वे। अप॑श्चाद्दघ्वने॒नरे᳚।

इन्दु॒रिन्दु॒मवा॑गात्। इन्दो॒रिन्द्रो॑पात्। तस्य॑त इन्द॒विन्द्र॑पीतस्य॒ मधु॑मतः।

उप॑हूत॒स्योप॑हूतो भख्षयामि ।।110।।
371000

उदर् ष ईन्द्रियेणगा मतिरररपा अंगात्रीणि च ।।10।।
371101
ब्रह्म प्रतिष्ठामनसो ब्रह्मवाचः। ब्रह्मयज्ञानाꣳहविषामाज्यस्य। अतिरिक्त
ङ्कर्मणोयच्चहीनम्। यज्ञꣳपर्वाणि प्रतिरन्नेतिकल्पयन्। 
स्वाहाकृताऽऽहुतिरेतुदेवान्। आश्रावितमत्याश्रावितम्।
वषड्कृतमत्यनूक्तञ्च यज्ञे। अतिरिक्त ङ्कर्मणो यच्चहीनम्।
यज्ञꣳपर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताऽऽहुति रेतुदेवान्।।111।।
371102
यद्वोदेवा अतिपादयानि। वाचाचित्प्रयत न्देवहेडनम्।
अरायोअस्माꣳ अभिदुच्छुनायते। अन्यत्रास्मन्मरुतस्तन्निधेतन।
ततम्मआपस्तदुतायतेपुनः। स्वादिष्ठाधीतिरुचथायशस्यते। अयꣳ समुद्र
उतविश्वभेषजः। स्वाहाकृतस्य समुतृण्णुतर्भुवः। उद्वय न्तमसस्परि।
उदुत्यञ्चित्रम् ।।112।।
371103
इमम्मेवरुण तत्त्वायामि। त्वन्नो अग्नेसत्वन्नो अग्ने। त्वमग्ने अयासि प्रजापते।
इमञ्जीवेभ्यꣳपरिधि न्दधामि। मैषान्नुगादपरो अर्धमेतम्। शतञ्जीवन्तु
शरदꣳपुरूचीः। तिरोमृत्युन्दधतां पर्वतेन। इष्टेभ्यस्स्वाहा
वषडनिष्टेभ्यस्स्वाहा। भेषज न्दुरिष्ट्यैस्वाहा निष्कृत्यैस्वाहा।
दौराध्र्यैस्वाहा दैवीभ्यस्तनूभ्यस्स्वाहा ।।113।।
371104
ऋद्ध्यैस्वाहा समृद्ध्यैस्वाहा । यत इन्द्र भयामहे। ततोनो अभयङ्कृधि। मघवञ्छग्धि तव
तन्नऊतये। विद्विषोविमृधोजहि। स्वस्तिदाविशस्पतिः। वृत्रहा
विमृधोवशी। वृषेन्द्रꣳपुर एतुनः। स्वस्तिदा अभयङ्करः। आभिर्गीभिर्यदतोन
ऊनम् ।।114।।
371105
आप्यायहरिवो वर्धमानः। यदास्तोतृभ्योमहि गोत्रारुजासि।
भूयिष्ठभाजो अध तेस्याम। अनाज्ञात य्यँदाज्ञातम्। यज्ञस्य
क्रियतेमिथु। अग्ने तदस्य कल्पय। त्वꣳहिवेत्थ यथातथम्। पुरुषसम्मितो
यज्ञः। यज्ञꣳपुरुषसम्मितः। अग्ने तदस्य कल्पय। त्वꣳहि वेत्थयथातथम्।
यत्पाकत्रा मनसा दीनदख्षान। यज्ञस्य मन् वते मर्तासः। अग्निष्टद्धोता
क्रतुविद्विजानन्। यजिष्ठोदेवाꣳ ऋतुशोयजाति ।।115।।

371100
दे॒वाः᳚श्चि॒त्रं त॒नूभ्य॒स्स्वाहो॒नं पुरु॑षसम्मि॒तोऽग्ने॒ तद॑स्य कल्पय॒ पञ्च॑च ।।11।।
371201
यद्दे॑वा देव॒हेड॑नम्। देवा॑सश्चकृ॒माव॒यम्। आदि॑त्या॒स्तस्मा॑न्मामुञ्चत।
ऋ॒तस्य॒र्तेन॒मामु॒त। देवा॑ जीवनका॒म्यायत्। वा॒चाऽनृ॑तमूदि॒म।
अ॒ग्निर्मा॒तस्मा॒देन॑सः। गार्॒ह॑पत्य॒ꣳप्रमु॑ञ्चतु।
दु॒रि॒ताया नि॑चकृ॒म। क॒रोतु॒माम॑ने॒नस॑म्।।116।।
371202
ऋ॒तेन॑ द्यावापृथिवी। ऋ॒तेन॒त्वꣳ सर॑स्वति। ऋ॒तान्मा॑ मुञ्च॒ताꣳह॑सः। यद॒न्यकृ॑तमारि॒म।
स॒जा॒त॒श॒ꣳ॒ सादु॒तवा॑ जामि श॒ꣳ॒सात्। ज्याय॑स॒श्शꣳसा॑दु॒तवा॒ कनी॑यसः।
अना॑ज्ञात न्दे॒वकृ॑त॒ य्यँदेनः॑। तस्मा॒त्त्वम॒स्माञ्जा॑तवेदो मुमुग्धि। यद्वाचा
यन्मन॑सा। बा॒हुभ्या॑मू॒रुभ्या॑मष्ठी॒वद्भ्या॑म्।।117।।
371203
शि॒श्नैर्यदनृ॑त ञ्चकृ॒माव॒यम्। अ॒ग्निर्मा॑तस्मा॒देन॑सः। यद्धस्ता॑भ्याञ्च॒कर॒ किल्बि॑षाणि।
अ॒ख्षाणा॑ व्वँ॒ग्नुमु॑प॒जिघ्न॑मानः। दू॒रे॒प॒श्याच॑राष्ट्र॒भृच्च॑।
तान्य॑फ्स॒रसा॒वनु॑दत्तामृ॒णानि॑। अदी॑व्यन्नृ॒ण य्यँदु॒ह ञ्चकार॑।
यद्वादा॑स्यन्थ्स ञ्ज॒गारा॒जने॑भ्यः। अ॒ग्निर्मा॑तस्मा॒देन॑सः। यन्मयि॑मा॒तागर्भे॑स॒ति ।।118।।
371204
एन॑श्च॒कार॒यत्पि॒ता। अ॒ग्निर्मा॑तस्मा॒देन॑सः। यदा॑पि॒षेष॑मा॒तरं॑ पि॒तर॑म्।
पु॒त्रꣳप्रमु॑दि॒तोधय॑न्। अहि॑ꣳसितौपि॒तर॒ौमय॒ातत्। तद॑ग्ने अनृ॒णोभ॑वामि।
यद॒न्तरि॑ख्षं पृथि॒वीमु॒तद्याम्। यन्मा॒तरं॑ पि॒तरं॑ व्वाँजिहि॒ꣳसि॒म।
अ॒ग्निर्मा॒तस्मा॒देन॑सः। यदा॒शसा॑नि॒शसा॒यत्प॑रा॒शसा॑।।119।।
371205
यदेन॑श्चकृ॒मानू॒त॑न॒ य्यँत्पु॑रा॒णम्। अ॒ग्निर्मा॑तस्मा॒देन॑सः।
अति॑क्रामामिदु॒रि॒तय्यँदेनः॑। जहा॑मिरि॒ प्रं प॑र॒मे स॒धस्थे॑। यत्र॒यन्ति॑
सु॒कृतो॒ नापि॑ दु॒ष्कृतः॑। तमारो॑हामिसु॒कृता॒न्नु॒लो॒कम्। त्रि॒तेदे॒वा
अ॑मृजतै॒तदेनः॑। त्रि॒तएतन्म॑नु॒ष्ये॑षु मामृजे। ततो॑मा॒यदि॒ किञ्चि॑दान॒शे।
अ॒ग्निर्मा॒तस्मा॒देन॑सः ।।120।।
371206
गार्॒ह॑पत्य॒ꣳप्रमु॑ञ्चतु। दु॒रि॒तायानि॑चकृ॒म। क॒रोतु॒माम॑ने॒नस॑म्।
दि॒विजा॒ताअ॒प्सुजा॒ताः। याजा॒ता ओष॑धीभ्यः। अथो॒या अ॑ग्नि॒जाआपः॑।
तान॑श्शुन्धन्तु॒शुन्ध॑नीः। यदापो॒नक्त॑ न्दु॒रि॒तञ्चरा॑म। यद्वादिवा॒

नूर्तनय्यँत्पुराणम्। हिर॑ण्यवर्णास्तत उत्पुनीत नः। इमम्मे॑ वरुण

तत्त्वायामि। त्वन्नो॑ अग्ने सत्वन्नो॑ अग्ने। त्वम॑ग्ने अयासि॑।।121।।

371200

अनेनस॑मष्ठीवद्ध्याः॑ सति पराशसा॑ऽऽनशे॑ऽग्निर्मा तस्मादेन॑सः पुनीत

नस्त्रीणि॑ च ।।12।।

371301

यद्दे॑वा देवाॠतेन॑ सजातशः साद्यद्वाचा यद्धस्ता॑भ्यामदी॑व्य य्यँन्मयि॑

माता यदा॑पिपेष यदन्तरि॑ख्यय्यँदाशसाऽति॑ क्रामामि त्रितेदेवा दिवि

जाताअप्सुजाता यदाप॑ इमम्मे॑वरुण तत्त्वा॑ यामि त्वन्नो॑ अग्ने

सत्वन्नो॑ अग्ने त्वम॑ग्ने अयासि॑। यत्तेग्राव्ण्णा॑ चिच्छिदुस्सो॑मराजन्।

प्रियाण्यङ्गा॑नि स्वधि॑ता परूः॑षि। तथ्सन्धथ्स्वाज्ये॑नोत व॑र्धयस्व। अनागसो

अधमिथ्सङ्ख्षये॑म। यत्तेग्रावा॑बाहुच्युतो अचु॑च्यवुः ।

नरोयत्ते॑दुदुहुर्दख्षि॑णेन । तत्तआप्या॑यतान्तत्ते॑ ।

निष्ट्या॑यता न्देवसोम। यत्तेत्वच॑ म्बिभिदुर्यञ्च

योनि॑म्। यदास्थानात्प्रच्युतो वेन॑सि त्मना॑ ।।122।।

371302

त्वया तथ्सो॑म गुप्तम॑स्तु नः। सा न॑स्सन्धा स॑त्परमे व्यो॑मन्। अहाच्छरीर॑ं पय॑सा

समेत्य॑। अन्यो॑न्यो भवति वर्णो॑अस्य। तस्मि॑न्वयमुप॑हूतास्तव॑ स्मः।

आनो॑भज सद॑सि विश्वरू॑पे। नृचख्षास्सोम॑ उत शुश्रुग॑स्तु। मानो

विहा॑सीद्गिर॑ आवृणानः। अना॑गास्तनुवो॑ वावृधानः। आनो॑ रूपव्वँ॑हतु जाय॑मानः।।123।।

371303

उप॑ ख्षर न्तिजुह्वो॑घृतेन॑। प्रियाण्यङ्गा॑नि तव॑

वर्धय॑न्तीः। तस्मै॑ तेसोम नम इद्वषट्च। उप॑मा राजन् थ्सुकृ

तेह्वयस्व। सं प्रा॑णापानाभ्याः समु चख्षु॑षात्वम्।

स श्रोत्रे॑णगच्छस्वसोमराजन्। यत्तआस्थि॑तः

शमुतत्ते॑अस्तु। जानीतान्न॑स्सङ्गम॑ने पथीनाम् । एतज्ञा॑नीतात्परमे

व्यो॑मन् । वृका॑स्सधस्था विदरूपम॑स्य।।124।।

371304

यदा गच्छा॑त्पथिभि॑र्देवयानैः॑। इष्टापूर्तेकृ॑णुतादाविर॑स्मै। अरि॑ष्टो

राजन्न गदःपरे॑हि। नम॑स्ते अस्तु चख्ष॑से रघूयते। नाकुमारो॑ह

सह यज॑मानेन । सूर्य॑ ङ्गच्छतात्परमे व्यो॑मन् । अभू॑द्देवस्स॑विता

वन्द्योनु नः । इदानीमह्न उपवाच्योनृभिः । वियो रत्ना भजति
मानवेभ्यः । श्रेष्ठन्नो अत्र द्रविणय्यँथा दधत् । उप नो
मित्रावरुणाविहावतम् । अन्वादीँध्याथामिह नस्सखाया । आदित्यानां
प्रसितिर् हेतिः । उग्रा शतापाँष्ठा घविषा परि णो वृणक्तु। आप्यायस्व सन्ते ।।125।।
371300
त्मना जाय मानोऽस्य दध त्पञ्च च ।।13।।
371401
यद्दिं दीख्शे मनसा यच्च वाचा । यद्वाँ प्राणै श्चख्शुषा यच्च श्रोत्रेण ।
यद्रेतसा मिथुनेना प्यात्मनाँ । अद्भ्यो लोका द धिरे तेज इन्द्रियम् ।
शुक्रा दीख्शायै तपसो विमोचनीः । आपो वि मोक्त्रीर्मयि तेज इन्द्रियम् ।
यदृचा साम्ना यजुषा । पशूनाञ्चर्मन् हविषा दिदीख्शे ।
यच्छन्दोभि रोषधीभि र्वनस्पतौँ । अद्भ्यो लोका दधिरे तेज इन्द्रियम् ।।126।।
371402
शुक्रादीख्शायै तपसोविमोचनीः। आपोवि मोक्त्रीर्म यितेज इन्द्रियम्।
येनब्रह्म येनख्शत्रम्। येनेँन्द्राग्नी प्रजापतिस्सोमो वरुणो येनराजाँ।
विश्वेदेवा ऋषयोयेन प्राणाः। अद्भ्योलोका दधिरेतेज इन्द्रियम्।
शुक्रादीख्शायै तपसोविमोचनीः। आपोविमोक्त्री र्मयि तेज इन्द्रियम्।
अपां पुष्प मस्योष धीनाꣳरसः। सोमस्य प्रियन्धाम।।127।।
371403
अग्नेᳲप्रियतमꣳहवि स्स्वाहाँ। अपां पुष्पम स्योष धीनाꣳरसः।
सोमस्य प्रियन्धाम। इन्द्रस्य प्रियतमꣳहवि स्स्वाहाँ। अपां पुष्प मस्योष धीनाꣳरसः।
सोमस्य प्रियन्धाम। विश्वेषान्देवानाँ प्रियतमꣳ हवि स्स्वाहाँ।
वयꣳसोम व्रतेतव। मनस्त नूषुपिप्रतः। प्रजावन्तो अशीमहि।।128।।
371404
देवेभ्यᳲपितृभ्यस्स्वाहाँ। सोम्येभ्यᳲपितृभ्यस्स्वाहाँ।
कव्येभ्यᳲपितृभ्यस्स्वाहाँ। देवास इहमादयध्वम्। सोम्यास इह
मादयध्वम्। कव्यास इह मादयध्वम्। अनन्त रिताᳲपितरस्सोम्या स्सोम पीथात्।
अपैतुमृत्युरमृतन्न आगन्। वैवस्वतो नो अभय ङ्कृ णोतु। पूर्ण व्वँनस्पतेरिव।।129।।
371405
अभि नश्शीयताꣳरयिः। सचता न्नश्शची पतिः। परम्मृत्यो अनु परेहि पन्थाँम्।
यस्तेस्व इतरो देवयानाँत्। चख्शुष्मते शृण्वते तेँ ब्रवीमि। मानᳲप्रजाꣳ

रीरिषो मोतवीरान्। इदमूनु श्रेयोवसानमागन्म। यद्गो जिद्धन जिदश्वजिद्यत्।
पुर्णव्वँ नस्पते रिव। अभि नश्शीय ताः रयिः। सचतान्न श्शचीपतिः ।।130।।
371400
वनस्पता वृद्ध्यो लोकादधिरे तेज इन्द्रिय न्धामा शीमही वाभिन श्शीयताः रयिरेकञ्च ।।14।।
370000
सर्वान् यद्विर्ष्वण्णेन विवैयाः पुरस्ताद्देवा देवेषु परिस्तृणीत सख्येद
य्यँदस्य पारेऽनागस उदस्तांफ्सी द्वह्म प्रतिष्ठा यद्देवा यत्तेग्राव् ण्णा
यद्दिदीख्ये चतुर्दश ।।14।।
सर्वान्भूतिमेव यामेवाफ्स्वाहुति व्व्रँतानां पर्णवल्क स्सोम्याना मस्मिन्
यज्ञेऽग्ने योनो ज्योग्जीवाः परोरजाः प्रतेमहे ब्रह्मप्रतिष्ठा गार् ह
पत्यस्त्रिः शदुत्तर शतम् ।।130।।
सर्वा ञ्छची पतिः ।। ।।हरिःओम्।। श्रीकृष्णार्पणमस्तु सप्तम प्रपाठक स्समाप्तः

380000
अष्टम प्रपाठक प्रारम्भः हरिः ओम्।।
380101
साङ्ग्रहण्येष्ट्या यजते। इमाञ्जनताः सङ्गृह्णानीति। द्वादशारत्नी
रशना भवति। द्वादश मासाँस्सव्वँथ्सरः। सव्वँथ्सरमेवावरुन्धे। मौञ्जी
भवति। ऊर्ग्वै मुञ्जाः । ऊर्जमेवावरुन्धे। चित्रा नक्षत्रम्भवति। चित्रव्वाँ
एतत्कर्म।।1।।
380102
यदश्वमेधस्समृद्ध्यै। पुण्यनाम देवयजनमध्यवस्यति। पुण्यामेव तेन
कीर्तिमभिजयति। अपदातीनृत्विजस्समावहन्त्यासुब्रह्मण्यायाः।
सुवर्गस्य लोकस्य समष्ट्यै। केशश्मश्रु वपते। नखानि निकृन्तते। दतो
धावते। स्नाति। अहतव्वाँसः परिधत्ते। पाप्मनोऽपहत्यै। वाच
य्यँत्वोपवसति। सुवर्गस्य लोकस्य गुप्त्यै। रात्रिञ्जागरयन्त आसते।
सुवर्गस्य लोकस्य समष्ट्यै।।2।।
380100
कर्म धत्ते पञ्च च ।।1।।
380201
चतुष्टय्य आपो भवन्ति। चतुश्शफो वा अश्वः प्राजापत्यस्समृद्ध्यै। ता
दिग्भ्यस्समाभृता भवन्ति। दिक्षु वा आपः। अन्नव्वाँ आपः। अद्भ्यो वा अन्न
ञ्जायते। यदेवाद्भ्योऽन्नञ्जायते। तदवरुन्धे। तासु ब्रह्मौदनं पचति।
रेत एव तद्दधाति।।3।।
380202
चतुश्शरावो भवति। दिक्ष्वेव प्रतितिष्ठति। उभयतो रुक्मौ भवतः। उभयत एवास्मिन्रुच न्दधाति।
उद्धरति शृतत्वाय। सर्पि ष्वाँन्भवति मेध्यत्वाय। चत्वार आर्षेयाः
प्राश्नन्ति। दिशामेव ज्योतिषि जुहोति। चत्वारि हिरण्यानि ददाति। दिशामेव ज्योतीः
ष्यवरुन्धे ।।4।।
380203
यदाज्यमुच्छिष्यते। तस्मिन्रशनान्युनक्ति। प्रजापतिर्वा ओदनः। रेत
आज्यम्। यदाज्ये रशनान्युनक्ति। प्रजापतिमेव रेतसा समर्धयति।
दर्भमयी रशना भवति। बहु वा एष कुचरो मेध्यमुपगच्छति।
यदश्वः। पवित्रव्वै दर्भाः ।।5।।
380204

यद्दर्भमयी रशना भवति। पुनात्येवैनम्। पूतमेनम्मेध्यमालभते। अश्वस्य वा आलब्धस्य महिमोदक्रामत्। स महर्त्विजः प्राविशत्। तन्महर्त्विजा म्महर्त्विक्त्वम्। यन्महर्त्विजः प्राश्ञन्ति। महिमानमेवास्मिन्तद्दधति। अश्वस्य वा आलब्धस्य रेत उदक्रामत्। तथ्सुवर्णꣳ हिरण्यमभवत्। यथ्सुवर्णꣳ हिरण्यन्ददाति। रेत एव तद्दधाति। ओदने ददाति। रेतो वा ओदनः। रेतो हिरण्यम्। रेतसैवास्मिन्रेतो दधाति।।6।।
380200
दधाति रुन्धे दर्भा अभवथ्षट् च ।।2।।
380301
यो वै ब्रह्मणे देवेभ्यः प्रजापतयेऽप्रतिप्रोच्याश्वम्मेध्य म्बध्नाति। आ देवताभ्यो वृश्च्यते। पापीयान्भवति। यःप्रतिप्रोच्य। न देवताभ्य आवृश्च्यते। वसीयान्भवति। यदाह। ब्रह्मन्नश्व म्मेध्य म्भन्थ्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति। ब्रह्म वै ब्रह्मा। ब्रह्मण एव देवेभ्यःप्रजापतये प्रतिप्रोच्याश्व म्मेध्य म्बध्नाति ।।7।।
380302
न देवताभ्य आवृश्च्यते। वसीयान्भवति। देवस्य त्वा सवितुःप्रसव इति रशनामादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। व्यृद्धव्वाँ एतद्यज्ञस्य। यदयजुष्केण क्रियते। इमामगृभ्णन्रशनामृतस्येत्यधिवदति यजुष्कृत्यै। यज्ञस्य समृद्ध्यै।।8।।
380303
तदाहुः। द्वादशारत्नी रशना कर्तव्या 3 त्रयोदशारत्नी 3 रिति। ऋषभो वा एष ऋतूनाम्। यथ्संव्वँथ्सरः। तस्य त्रयोदशो मासो विष्टपम्। ऋषभ एष यज्ञानाम्। यदश्वमेधः। यथा वा ऋषभस्य विष्टपम्। एवमेतस्य विष्टपम्। त्रयोदशमरत्निꣳ रशनायामुपादधाति।।9।।
380304
यथर्षभस्य विष्टपꣳ सस्करोति। तादृगेव तत्। पूर्व आयुषि विदथेषु कव्येत्याह। आयुरेवास्मिन्दधाति। तया देवास्सुतमा बभूवुरित्याह। भूतिमेवोपावर्तते। ऋतस्य सामन्थ्सरमारपन्तीत्याह। सत्यव्वाँ ऋतम्। सत्येनैवैनमृतेनारभते। अभिधा असीत्याह ।।10।।

380305

तस्मा॑दश्वमेधया॒जी सर्वा॑णि भू॒तान्य॒भिभ॑वति। भुव॑नम॒सीत्या॑ह। भू॒मान॑मे॒वोपै॑ति। य॒न्ताऽसीत्या॑ह।

य॒न्तार॑मे॒वैन॑ङ्करोति। ध॒र्तासीत्या॑ह। ध॒र्तार॑मे॒वैन॑ङ्करोति। सो॑ऽग्निं

व्वै॑श्वान॒रमित्या॑ह। अ॒ग्नावे॒वैनं॑ व्वैश्वान॒रेजु॑होति। सप्र॑थस॒मित्या॑ह।।।11।।

380306

प्र॒जये॒वैनं॑ प॒शुभिः॑ प्रथयति। स्वाहा॑कृत॒ इत्या॑ह। होम॑

ए॒वास्यै॒षः। पृ॒थि॒व्यामित्या॑ह। अ॒स्यामे॒वैनं॒ प्रति॑ष्ठापयति।

य॒न्ता राड्य॒न्ताऽसि॒ यम॑नो ध॒र्तासि॑ ध॒रुण॒ इत्या॑ह। रू॒पमे॒वास्यै॒

तन्म॑हि॒मान॒व्व्याँच॑ष्टे। कृ॒ष्यै त्वा॒ ख्वेमा॑य त्वा र॒य्यै त्वा॒ पोषा॑य॒

त्वेत्या॑ह। आ॒शिष॑मे॒वै तामाशा॑स्ते। स्व॒गा त्वा॑ दे॒वेभ्य॒ इत्या॑ह। दे॒वेभ्य॑

ए॒वैनं॑ स्व॒गाक॑रोति। स्वाहा॑ त्वा प्र॒जाप॑तय॒ इत्या॑ह। प्रा॒जा॒प॒त्यो वा

अश्वः॑। यस्या॑ ए॒व दे॒वता॑या आल॒भ्यते॑। तये॒वैन॒ꣳ सम॑र्धयति ।।12।।

380300

ब॒ध्नाति॒ सम॑द्ध्या उ॒पाद॑धात्य॒सीत्या॑ह॒ सप्र॑थस॒मित्या॑ह दे॒वेभ्य॒ इत्या॑ह॒ पञ्च॑ च ।।3।।

380401

यः॑पि॒तुर॑नु॒जायाः॑पु॒त्रः। सपु॒रस्ता॑न्नयति। यो मा॒तुर॑नु॒जायाः॑ पु॒त्रः।

स प॒श्चान्न॑यति। विष्व॑ञ्चमे॒वास्मा॑त्पा॒प्मान॒ँ व्विवृ॑हतः। यो अर्व॑न्त॒

ञ्जिघाꣳ॑सति॒ तम॒भ्य॑मीति॒ वरु॑ण॒ इति॒ श्वानं॑ ञ्चतु॒रख्वं॑ प्रसौ॑ति। पु॒रो मर्तः॑

पु॒रश्श्वेति॒ शुन॑श्चतु॒रख्वस्य॒ प्रह॑न्ति। श्वेव॒ वै पा॒प्मा भ्रातृ॑व्यः।

पा॒प्मान॑मे॒वास्य॒ भ्रातृ॑व्यꣳ हन्ति। सै॒ध्रकम्मुस॑लम्भवति ।।13।।

380402

कर्म॑कर्मै॒वास्मै॑ साधयति। पौ॒ꣳश्च॒ले॒यो ह॑न्ति।

पु॒श्च॒ल्वाँव्वै दे॒वाश्शु॒चन्न्य॑दधुः।

शु॒चैवास्य॒ शुचꣳ॑ हन्ति। पा॒प्मा वा ए॒तमी॑प्स॒तीत्या॑हुः ।

यो॑ऽश्वमे॒धेन॒ यज॑त॒ इति॑। अश्व॑स्याधस्प॒दमुपा॑स्यति। व॒ज्री वा

अश्वः॑प्राजाप॒त्यः। वज्रे॑णैव पा॒प्मान॒म्भ्रातृ॑व्य॒मव॑ क्रामति।

द॒ख्वि॒णाऽप॑प्लावयति ।।14।।

380403

पा॒प्मान॑ मे॒वास्मा॒च्छम॑ल॒मप॑प्लावयति। ऐ॒षी॒क उ॑दू॒हो भ॑वति।

आयु॒र्वा इ॒षीकाः॑। आयु॒रे॒वास्मि॑न्दधति। अ॒मृ॒त॒व्वाँइ॒षीकाः॑। अ॒मृत॑

मे॒वास्मि॑न्दधति । वे॒त॒स॒शा॒खोप॒सम्ब॑द्धाभवति । अ॒प्सुयो॑नि॒र्वा

अश्व॑ः । अ॒फ्सु॒जो वे॑त॒सः । स्वादे॒वैनं॒य्योने॒र्निर्मि॑मीते ।
पु॒रस्ता᳚त्प्र॒त्यञ्च॑म॒भ्युदू॑हति। पु॒रस्ता॑दे॒वास्मि॑न्प्र॒तीच्य॒मृत॑न्दधाति।
अ॒हञ्च॒ त्वञ्च॑ वृत्रह॒न्निति॑ ब्र॒ह्मा यज॑मानस्य॒ हस्त॑ङ्गृह्णाति। ब्र॒ह्म॒ख्ष॒त्रे ए॒व
सन्द॑धाति। अ॒भिक्रत्वे᳚न्द्र भू॒रध॒ज्मन्नित्य॑ध्व॒र्युर्यज॑मान व्वाँचयत्य॒भिजि॑त्यै ।।15।।
380400
भ॒व॒ति॒ प्ला॒व॒य॒ति॒ मि॒मि॒ते॒ पञ्च॑ च ।।4।।
380501
च॒त्वार॑ ऋ॒त्विज॒स्समु॑ख्षन्ति। आ॒भ्य ए॒वैन॑ ञ्चत॒सृभ्यो॑ दि॒ग्भ्यो॑ऽभि॒ समी॑रयन्ति।
श॒तेन॑ राजपु॒त्रैस्स॒हाध्व॒र्युः । पु॒रस्ता᳚त्प्र॒त्यङ् तिष्ठ॒न्प्रोख्ष॑ति। अ॒नेनाश्वे॑न॒
मेध्ये॑न॒ष्ट्वा। अ॒यꣳ राजा॑ वृत्रव्वँ॑ध्या॒दिति॑। रा॒ज्यव्वाँ॑ अ॑ध्व॒र्युः। ख्ष॒त्रꣳ
रा॑जपु॒त्रः। रा॒ज्येनै॒ वास्मि॑न्ख्ष॒त्र न्द॑धाति। श॒तेना॑ रा॒जभि॑रु॒ग्रैस्स॒ह ब्र॒ह्मा।।16।।
380502
द॒ख्षि॒ण॒त उ॒द॒ङ् तिष्ठ॒न्प्रोख्ष॑ति। अ॒नेनाश्वे॑न॒ मेध्ये॑न॒ष्ट्वा। अ॒यꣳ
राजा᳚ प्रतिधृ॒ष्यो᳚ऽस्त्विति॑। बल॒व्वै᳚ ब्र॒ह्मा। बल॑मरा॒जोग्रः। बले॑नै॒
वास्मि॒न्बल॑न्दधाति। श॒तेन॑ सूतग्रामा॒णिभि॑स्स॒ह होता᳚। प॒श्चात्प्राङ्तिष्ठ॒न्प्रोक्ष॑ति। अ॒नेनाश्वे॑न॒
मेध्ये॑न॒ष्ट्वा। अ॒यꣳ राजा॒ऽस्यै वि॒शः।।17।।
380503
ब॒हु॒ग्वै ब॑ह्व॒श्वायै॑ बह्वजावि॒कायै᳚। ब॒हु॒व्री॒हि॒य॒वायै॑
बहुमाषति॒लायै᳚। ब॒हु॒हि॒र॒ण्यायै॑ बहु॒हस्तिका॑यै।
।ब॒हु॒दा॒स॒पू॒रु॒षायै॑ रयि॒मत्यै॒ पुष्टि॑मत्यै ।
ब॒हु॒रा॒य॒स्पो॒षायै॒ राजा॒स्त्विति॑। भू॒मा वै होता᳚।
भू॒मा सू॑तग्राम॒ण्य॑ः। भू॒म्नैवास्मि॑न्भू॒मान॑न्दधाति।
श॒तेन॑ ख्षत्तसङ्ग्रह॒ीतृभि॑स्स॒होद्गा॒ता। उ॒त्त॒र॒तो
द॑ख्षि॒णा तिष्ठ॒न्प्रोख्ष॑ति ।।18।।
380504
अ॒नेनाश्वे॑न॒ मेध्ये॑ न॒ष्ट्वा । अ॒यꣳ राजा॒ सर्व॒मायु॑रे॒त्विति॑। आयु॒र्वा॑
उ॑द्गा॒ता। आयु॑ःख्षत्तसङ्ग्रह॒ीतार॑ः। आयु॑षै॒वास्मि॒न्नायु॑र्दधाति। श॒तꣳ
श॑तम्भवन्ति। श॒ताय॒ुꣳपुरु॑षश्श॒तेन्द्रि॑यः। आयु॑ष्ये॒वेन्द्रि॒ये प्रति॑तिष्ठति।
च॒तु॒श्श॒ता भ॑वन्ति। चत॑स्रो॒ दिश॑ः। दि॒ख्ष्वे॑व प्रति॑ तिष्ठति ।।19।।
380500
ब्र॒ह्मावि॒श उ॑ख्खति॒ दिश॒ एक॑ञ्च ।।5।।
380601

यथा॒ वै ह॒विषो॑ गृह्री॒तस्य॒ स्कन्द॑ति। ए॒वँ व्वा ए॒तदश्व॑स्य स्कन्दति।
यन्नि॒क्तमना॑लब्धमुथ्सृ॒जन्ति॑। यथ्सोक्या॑ अ॒न्वाह॑। स॒र्व॒हु॒त॑मे॒वैन॑
ङ्क॒रो॒त्यस्क॑न्दाय। अस्क॑न्न॒ꣳ हि तत्। यद्धु॒तस्य॒ स्कन्द॑ति। स॒ह॒स्र॒मन्वा॑ह।
स॒ह॒स्र॑सम्मितस्सुव॒र्गो ल॒ोकः। सु॒व॒र्गस्य॑ ल॒ोकस्या॒भिजि॑त्यै।।20।।
380602
यत्परि॑मिता अनुब्रू॒यात्। परि॑मित॒मव॑रुन्धीत। अप॑रिमि॒ता अन्वा॑ह।
अप॑रिमितस्सुव॒र्गो ल॒ोकः। सु॒व॒र्गस्य॑ ल॒ोकस्य॒ सम॑ष्ट्यै। स्तोक्या॑ जुहोति।
या ए॒व वर्ष्या॒ आप॑ः। ता अव॑रुन्धे। अ॒स्याञ्जु॑होति। इ॒यँ व्वा अ॒ग्निर्वै॑श्वान॒रः ।।21।।
380603
अ॒स्यामे॒वैना॒ꣳ प्रति॑ष्ठापयति । उ॒वाच॑ ह प्र॒जाप॑तिः।
स्तोक्या॑सु॒ वा अ॒हमश्व॑मे॒धꣳ सस्था॑पयामि। तेन॒ तत॒स्सस्थि॑तेन चर॒ामीति॑।
अ॒ग्नये॒ स्वाहेत्या॑ह। अ॒ग्नय॑ ए॒वैन॑ ञ्जुहोति। सोमा॑य॒ स्वाहेत्या॑ह।
सोमा॑यै॒वैन॑ञ्जुहोति। स॒वि॒त्रे स्वाहेत्या॑ह। स॒वि॒त्र ए॒वैन॑ञ्जुहोति।।22।।
380604
सर॑स्वत्यै॒ स्वाहेत्या॑ह। सर॑स्वत्या ए॒वैन॑ ञ्जुहोति। पू॒ष्णे स्वाहेत्या॑ह ।
पूष्ण ए॒वैन॑ञ्जुहोति। बृह॒स्पत॑ये॒ स्वाहेत्या॑ह। बृह॒स्पत॑य
ए॒वैन॑ञ्जुहोति। अ॒पाम्मोदा॑य॒ स्वाहेत्या॑ह। अ॒द्भ्यए॒वैन॑ ञ्जुहोति।
वा॒यवे॒स्वाहेत्या॑ह। वा॒यव॑ ए॒वैनं॑जुहोति ।।23।।
380605
मि॒त्राय॒ स्वाहेत्या॑ह । मि॒त्रायै॒वैनं॑जुहोति। वरु॑णाय॒स्वाहेत्या॑ह।
वरु॑णायै॒वैनं॑जुहोति। ए॒ताभ्य॑ ए॒वैन॑ न्दे॒वता॑भ्योजुहोति। दश॑ दश
स॒ंपाद॑ंजुहोति। दशा॑क्षरा वि॒राट्। अन्न॑व्वि॒राट्। वि॒राजै॒वान्नाद्य॒मव॑रुन्धे।
प्र वा ए॒षो॑ऽस्माल्ल॒ोकाच्च्य॑वते । यꣳ परा॑ची॒राहु॑तीर्जु॒ होति॑। पुन॑ःपुनरभ्या॒वर्त॑ंजुहोति।
अ॒स्मिन्ने॒वल॒ोकेप्रति॑तिष्ठति। ए॒ताꣳ ह वावसो॑ऽश्वमे॒धस्य॒
सस्थि॑तिमु॒वाचास्क॑न्दाय। अस्क॑न्न॒ꣳ हि तत्। यद्य॒ज्ञस्य॒ सस्थि॑तस्य॒ स्कन्द॑ति।।24।।
380600
अ॒भिजि॑त्यै वैश्वान॒रस्स॑वि॒त्र ए॒वैनं॑ जुहोति वा॒यव॑ ए॒वैनं॑ जुहोति च्यवत॒े षट् च॑ ।।6।।
380701
प्र॒जाप॑तयेत्वा॒ जुष्ट॑ं प्रोख्षा॒मीति॑ पु॒रस्ता॑त्प्र॒त्यङ् तिष्ठन्प्रोख्ष॑ति।
प्र॒जाप॑ति॒र्वै दे॒वाना॑मन्ना॒दो वी॒र्या॑वान्। अ॒न्नाद्य॑मे॒वा स्मि॑न्वी॒र्य॑ न्दधाति।
तस्मा॒दश्व॒ꣳ पशू॒नाम॑न्ना॒दो वी॒र्या॑वत्तमः। इ॒न्द्रा॒ग्निभ्या॒न्त्वेति॑ दख्षिण॒तः।

इ॒न्द्रा॒ग्नी वै दे॒वाना॒मोजि॑ष्ठौ बलि॑ष्ठौ। ओज॑ ए॒वास्मि॒न्बल॒न्दधाति। तस्मा॒दश्वः॑
प॒शू॒नामोजि॑ष्ठो॒ बलि॑ष्ठः। वा॒यवे॒त्वेति॑प॒श्चात्। वा॒युर्वै दे॒वाना॑मा॒शुस्सा॑रसा॒रित॑मः।।25।।
380702
ज॒वमे॒वास्मि॑न्दधाति। तस्मा॒दश्वः॑ प॒शू॒नामा॒शुस्सा॑रसा॒रित॑मः। विश्वे॑भ्यस्त्वा दे॒वेभ्य॒
इत्यु॑त्तर॒तः। विश्वे॒ वै दे॒वा दे॒वानाँ॒य्यश॑स्वित॑माः। यश॑ ए॒वास्मि॑न्दधाति।
तस्मा॒दश्वः॑पशू॒ना य्यँश॒स्वित॑मः। दे॒वेभ्य॒स्त्वेत्य॒धस्ता॑त् । दे॒वा वै
दे॒वाना॒मप॑चिततमाः। अप॑चितिमे॒वास्मि॑न्दधाति। तस्मा॒दश्वः॑पशू॒नामप॑चिततमः।।26।।
380703
सर्वे॑भ्यस्त्वा दे॒वेभ्य॒ इत्यु॒परि॑ष्टात्। सर्वे॒वै दे॒वास्त्विषि॑मन्तो
हर॒स्विनः॑। त्विषि॑मे॒वास्मि॒न् हरो॑ दधाति। तस्मा॒दश्वः॑ पशू॒नान्त्विषि॑मान्
हर॒स्वित॑मः। दि॒वेत्वा॒ऽन्तरि॑क्षाय त्वा पृथि॒व्यै त्वेत्या॑ह। ए॒भ्यए॒वैनँ॑
ल्लो॒केभ्यः॑प्रोक्ष॑ति। स॒ते त्वाऽस॑तेत्वा॒ ऽद्भ्यस्त्वौष॑धीभ्यस्त्वा॒ विश्वे॑भ्यस्त्वा
भू॒तेभ्य॒ इत्या॑ह। तस्मा॑दश्वमेधया॒जिन॒ꣳ सर्वा॑णि भू॒तान्युप॑जीवन्ति।
ब्र॒ह्म॒वा॒दिनो॑ वदन्ति। यत्प्रा॑जाप॒त्योश्वः॑। अथ॒ कस्मा॑देनम॒न्याभ्यो॑
दे॒वता॒भ्योपि॒ प्रोक्ष॒तीति॑। अश्वे॒ वै सर्वा॑ दे॒वता॑ अ॒न्वाय॑त्ताः।
तय्यँद्विश्वे॑भ्यस्त्वा भू॒तेभ्य॒ इति॑ प्रो॒क्षति॑। दे॒वता॑ ए॒वास्मि॑न्नन्वाया॑तयति।
तस्मा॒दश्वे॒ सर्वा॑ दे॒वता॑ अ॒न्वाय॑त्ताः।।27।।
380700
सा॒र॒सा॒रित॒मोप॑चिततमः॑ प्राजाप॒त्योऽश्वः॒ पञ्च॑ च ।।7।।
380801
यथा॒ वै ह॒विषो॑ गृ॒हीतस्य॒ स्कन्द॑ति। ए॒व व्वाँ ए॒तदश्व॑स्य स्कन्दति।
यत्प्रोक्षि॑त॒मना॑लब्धमुथ्सृ॒जन्ति॑। यद॑श्वचरि॒तानि॑ जु॒होति॑। स॒र्व॒हु॒त॑मे॒वैन॑
ङ्क॒रो॒त्यस्क॑न्दाय। अस्क॑न्न॒ꣳ हि तत्। यद्धु॒तस्य॒ स्कन्द॑ति।
ई॒ङ्का॒राय॒ स्वाहेङ्कृ॑ताय॒ स्वाहेत्या॑ह। ए॒तानि॒ वा अ॑श्वचरि॒तानि॑।
च॒रि॒तैरे॒वैन॒ꣳ सम॑र्धयति ।।28।।
380802
तदा॑हुः। अना॑हुतयो॒ वा अ॑श्वचरि॒तानि॑। नैता हो॑त॒व्या॑ इति॑। अथो॒ खल्वा॑हुः। हो॒त॒व्या॑ ए॒व।
अत्र॒ वावैवं व्वि॒द्वान॑श्वमे॒धꣳ सस्था॑पयति। यद॑श्वचरि॒तानि॑
जु॒होति॑। तस्मा॑द्धोत॒व्या॑इति॑। ब॒हि॒र्धा वा ए॑नमे॒तदा॒यत॑नाद्दधाति। भ्रातृ॑व्यमस्मैजनयति।।29।।
380803
यस्या॑नायत॒नेऽन्यत्रा॒ग्नेराहु॑तीर्जु॒होति॑। सा॒वि॒त्रि॒या इष्ट्याः॑

पुरस्तांथ्स्विष्टकृतंः। आहवनीयेंऽश्वचरितानि जुहोति। आयतंन
एवास्याहुंतीर्जुहोति। नास्मै भ्रातृंव्य ञ्जनयति। तदांहुः। यज्ञमुखे
यंज्ञमुखे होतव्याः। यज्ञस्य क्लृत्यैं। सुवर्गस्यं लोकस्यानुंख्यात्या इतिं।
अथो खल्वांहुः ।।30।।
380804
यद्यंज्ञमुखे यंज्ञमुखे जुहुयात्। पशुभिर्यजंमान व्यँर्धयेत्। अवं
सुवर्गाल्लोकात्पंद्येत। पापीयान्थ्स्यादितिं।
सकृदेव होतव्याः। न यजंमानं पशुभिर्व्यंर्धयति।
अभि सुंवर्गल्लोक ञ्जंयति। न पापीयान्भवति। अष्टाचंत्वारिं शतमश्वरूपाणिं
जुहोति । अष्टाचंत्वारिंशदख्खरा जगंती। जागतोऽश्वंः
प्राजापत्यस्समृंद्ध्यै। एकमतिंरिक्तञ्जुहोति। तस्मादेकं प्रजास्वर्धुंकः ।।31।।
380800
अर्धयति जनयति खल्वांहुर्जगंती त्रीणिं च।।8।।
380901
विभूर्मात्रा प्रभूः पित्रेत्यांह। इयं व्वै माता। असौपिता।
आभ्यामेवैनं परिंददाति। अश्वोंसि हयोसीत्यांह। शास्त्येवैनमेतत्।
तस्माँच्छिष्टाः प्रजाजांयन्ते। अत्योसीत्यांह। तस्मादश्वस्सर्वान्पशूनत्येंति।
तस्मादश्वस्सर्वेषां पशूनां श्रैष्ठ्यंङ्गच्छति ।।32।।
380902
प्रयशश्श्रैष्ठ्यंमाप्नोति। य एवँ व्वेदं। नरोस्यर्वांऽसि सप्तिंरसि
वाज्यंसीत्यांह। रूपमेवास्यैतन्मंहिमानव्द्व्यष्ठव्याँचंष्टे।
ययुर्नामाऽसीत्यांह। एतद्वा अश्वंस्य प्रियन्नामधेयँम्। प्रियेणैवैनं
न्नामधेयेंनाभिवंदति। तस्मादप्यांमित्रौ सङ्गत्यं। नाम्नाचेद्धयेंते।
मित्रमेव भंवतः ।।33।।
380903
आदित्यानां पत्वाऽन्विहीत्यांह। आदित्यानेवैनं ङ्गमयति। अग्नये स्वाहा
स्वाहेन्द्राग्निभ्यामितिं पूर्वहोमाञ्जुहोति। पूर्वं एव द्विषन्त
म्भ्रातृंव्यमतिं क्रामति। भूरंसि भुवे त्वा भव्याय त्वा भविष्यते
त्वेत्युथ्सृंजति सर्वत्वायं। देवां आशापाला एत न्देवेभ्योश्व
म्मेधांयप्रोख्षिंत ङ्गोपायतेत्यांह। शतँव्वै तल्प्यां राजपुत्रा देवा
आंशापालाः। तेभ्यं एवैनं परिंददाति। ईश्वरो वा अश्वः प्रमुंक्तःपरांँ

परावतङ्गन्तोः । इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह
रमतिस्स्वाहेति चतृषु पृथ्सु जुहोति।।34।।
380904
एता वा अश्वस्य बन्धनम्। ताभिरेवैनम्बध्नाति। तस्मादश्वᳲप्रमुक्तो
बन्धनमागच्छति। तस्मादश्वᳲप्रमुक्तो बन्धनन्न जहाति। राष्ट्रव्वाँ
अश्वमेधः। राष्ट्रे खलु वा एते व्यायच्छन्ते। येऽश्व म्मेध्यᳲ रखन्ति।
तेषाय्यँ उद्दच ङ्गच्छन्ति। राष्ट्रादेव ते राष्ट्र ङ्गच्छन्ति। अथय उद्दच न्न
गच्छन्ति।।35।।
380905
राष्ट्रादेव ते व्यवच्छिद्यन्ते। परा वा एष सिच्यते।
योऽबलोऽश्वमेधेन यजते। यदमित्रा अश्वं व्विन्देरन्। हन्येतास्य यज्ञः।
चतुश्शता रखन्ति। यज्ञस्याघाताय। अथान्यमानीय प्रोख्येयुः। सैव ततः प्रायश्चित्तिः ।।36।।
380900
गच्छति भवतः पृथ्सु जुहोति न गच्छन्ति नव च।।9।।
381001
प्रजापतिरकामयताश्वमेधेन यजेयेति। स तपोतप्यत। तस्य तेपानस्य।
सप्तात्मनो देवता उदक्रामन्। सा दीख्याऽभवत्। स एतानि
वैश्वदेवान्यपश्यत्। तानजुहोत्। तैर्वैस दीख्यामवारुन्ध।
यद्वैश्वदेवानि जुहोति। दीख्यामेव तैर्यजमानोऽवरुन्धे ।।37।।
381002
सप्त जुहोति। सप्त हि ता देवता उदक्रामन्। अन्वहञ्जुहोति। अन्वहमेव
दीक्षामवरुन्धे। त्रीणि वैश्वदेवानि जुहोति। चत्वार्यौद्ग्रहणानि। सप्त
संपद्यन्ते। सप्त वैशीर् षण्याᳲप्राणाः। प्राणा दीक्षा। प्राणैरेव
प्राणान्दीक्षामवरुन्धे।।38।।
381003
एकविᳲशतिं वैश्वदेवानि जुहोति। एकविᳲशतिर्वै
देवलोकाः। द्वादश मासाᳲ पञ्चर्तवः । त्रयइमे लोकाः। असावादित्य
एकविᳲशः । एष सुवर्गोलोकः। तद्दैव्यं क्षत्रम्। सा श्रीः।
तद्ब्रध्नस्य विष्टपम्। तथ्स्वाराज्यमुच्यते ।।39।।
381004
त्रिᳲशतमौद्ग्रहणानि जुहोति। त्रिᳲशदक्षरा विराट्। अन्नं विराट्।
विराजैवान्नाद्यमवरुन्धे। त्रेधा विभज्य देवतां जुहोति। त्र्यावृतो वै देवाः।

त्र्यावृत इमे लोकाः। एषां लोकानामाप्त्यै। एषां लोकानां क्लृप्त्यै। अप

वा एतस्मात्प्राणाः क्रामन्ति ।।40।।

381005

यो दीक्षामतिरेचयति। सप्ताहं प्रचरन्ति। सप्त वै शीर्षण्याः

प्राणाः। प्राणा दीक्षा। प्राणैरेव प्राणान्दीक्षामवरुन्धे। पूर्णाहुतिमुत्तमां

जुहोति। सर्वं वै पूर्णाहुतिः। सर्वमेवाप्नोति। अथोइयं वै

पूर्णाहुतिः। अस्यामेव प्रतितिष्ठति ।।41।।

381000

रुन्धे प्राणान्दीक्षामवरुन्ध उच्यतेक्रामन्ति तिष्ठति।।10।।

381101

प्रजापतिरश्वमेधमसृजत। तꣳ सृष्टं न किञ्चनोदयच्छत्। तं

वैश्वदेवान्येवोदयच्छन्। यद्वैश्वदेवानि जुहोति।

यज्ञस्योद्यत्यै। स्वाहाऽऽधिमाधीता यस्वाहा। स्वाहाऽधीतं मनसे

स्वाहा। स्वाहा मनः प्रजापतये स्वाहा। काय स्वाहा कस्मै स्वाहा

कतमस्मै स्वाहेति प्राजापत्ये मुख्ये भवतः। प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छते।।42।।

381102

अदित्यै स्वाहाऽदित्यै मह्यैस्वाहाऽ दित्यै सुमृडीकायै स्वाहेत्याह। इयं वा अदितिः। अस्या

एवैनं प्रतिष्ठायोद्यच्छते। सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा

सरस्वत्यै पावकायै स्वाहेत्याह। वाग्वै सरस्वती। वाचैवैनमुद्यच्छते। पूष्णे स्वाहा पूष्णे

प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहेत्याह। पशवो वै पूषा।

पशुभिरेवैनमुद्यच्छते। त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा

त्वष्ट्रे पुरुरूपाय स्वाहेत्याह। त्वष्टा वै पशूनां मिथुनानाꣳरूपकृत्। रूपमेव

पशुषुदधाति। अथो रूपैरेवैनमुद्यच्छते। विष्णवे स्वाहा विष्णवे

निखुर्यपाय स्वाहा विष्णवेनिभूयपाय स्वाहे त्याह। यज्ञो वै विष्णुः।

यज्ञायैवैनमुद्यच्छते। पूर्णाहुतिमुत्तमां जुहोति। प्रत्युत्तब्ध्यै सयत्वाय ।।43।।

381100

यच्छते पुरुरूपाय स्वाहेत्याहाष्टौ च ।।11।।

381201

सावित्रमष्टाकपालं प्रातर्निर्वपति। अष्टाक्षरा गायत्री। गायत्रं

प्रातस्सवनम्। प्रातस्सवनादेवैनं गायत्रियाश्छन्दसोऽधि निर्मिमीते।

अथो प्रातस्सवनमेवतेनाप्नोति। गायत्रीं छन्दः। सवित्रे प्रसवित्र

एका॑दशकपालं म॒ध्यन्दि॑ने। एका॑दशाक्षरात्रि॒ष्टुप्। त्रैष्टु॑भं॒ माध्य॑न्दिन॒ꣳ॒ सव॑नम्। माध्य॑न्दि नादे॒वैन॒ꣳ॒ सव॑नात्त्रि॒ष्टुभ॒श्छन्द॒सोऽधि॒ निर्मि॑मीते ।।44।।
381202
अथो॒ माध्य॑न्दिनमे॒व सव॑नं॒ तेना॒प्नोति। त्रि॒ष्टुभं॒ छन्दः॑। स॒वि॒त्र आ॑सवि॒त्रे द्वाद॑शकपालमप॒राह्णे । द्वाद॑शाक्ष॒रा जग॑ती। जाग॑तं तृतीयसव॒नम्। तृ॒ती॒य॒स॒व॒नादे॒वैनं॒ जग॑त्या॒श्छन्द॒सोऽधि॒ निर्मि॑मीते। अथो॑ तृतीयसव॒नमे॒व तेना॒प्नोति । जग॑ती॒ं छन्दः॑। ई॒श्व॒रो वा अश्व॒ः प्रमु॑क्त॒ः परा॒ं परा॒वतं॒ गन्तोः॑। इ॒ह धृति॒स्स्वाहे॒ह विधृ॑ति॒स्स्वाहे॒ह रन्ति॒स्स्वाहे॒ह रम॑ति॒स्स्वाहेति॒ चत॑स्र॒ आहु॑तीर्जुहोति ।।45।।
381203
चत॑स्रो॒ दिशः॑। दि॒ग्भिरे॒वैनं॒ परि॑गृह्णाति। आश्व॑त्थो व्र॒जोभ॑वति। प्र॒जाप॑तिर्दे॒वेभ्यो॒ निला॑यत। अश्वो॑रू॒पं कृ॒त्वा। सो॑ऽश्व॒त्थे सं॑वथ्स॒रम॑तिष्ठत्। तद॑श्व॒त्थस्या॑श्वत्थ॒त्वम्। यदाश्व॑त्थो व्र॒जो भव॑ति। स्व ए॒वेनं॒ योनौ॒ प्रति॑ष्ठापयति ।।46।।
381200
त्रि॒ष्टुभ॒श्छन्द॒सोऽधि॒ निर्मि॑मीते जुहोति॒ नव॑ च ।।12।।
381301
आ ब्रह्म॑न्ब्राह्म॒णो ब्र॑ह्मवर्च॒सी जा॑यता॒मित्या॑ह। ब्रा॒ह्म॒ण ए॒व ब्र॑ह्मवर्च॒सं द॑धाति। तस्मा॒त्पु॒रा ब्रा॒ह्म॒णो ब्र॑ह्मवर्च॒स्य॑जायत। आऽस्मिन्रा॒ष्ट्रे रा॑ज॒न्य॑ इष॒व्य॑श्शूरो॑ महार॒थो जा॑यता॒मित्या॑ह। रा॒ज॒न्य॑ ए॒व शौ॒र्यं म॑हि॒मानं॑ दधाति। तस्मा॒त्पु॒रा रा॑ज॒न्य॑ इष॒व्य॑श्शूरो॑ महार॒थो॑ऽजायत। दोग्ध्री॑ धे॒नुरित्या॑ह। धे॒न्वामे॒व पयो॑ दधाति। तस्मा॒त्पु॒रा दोग्ध्री॑ धे॒नुर॑जायत। वोढा॑ऽन॒ड्वानित्या॑ह ।।47।।
381302
अ॒न॒डुह्ये॒व वी॒र्यं॑ दधाति। तस्मा॑त्पु॒रा वोढा॑ऽन॒ड्वान॑जायत। आ॒शुस्सप्ति॒रित्या॑ह। अश्व॑ ए॒व ज॒वं द॑धाति। तस्मा॒त्पु॒राऽशुरश्वो॑ऽजायत। पुर॑न्धि॒र्योषेत्या॑ह। यो॒षित्ये॒व रू॒पं द॑धाति। तस्मा॒थ्स्त्री यु॑व॒तिः प्रि॒या भावु॑का। जि॒ष्णू र॑थे॒ष्ठा इत्या॑ह । आ ह॒ वै तत्र॑ जि॒ष्णू र॑थे॒ष्ठा जा॑यते ।।48।।
381303
यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते। स॒भेयो॒ युवेत्या॑ह। यो वै पू॒र्व॑वय॒सी। स स॒भेयो॒ युवा॑। तस्मा॒द्युवा॒ पुमा॑न्प्रि॒यो भावु॑कः। आऽस्य॒ यज॑मानस्य

वी॒रो जा॑यता॒मित्या॑ह। आ ह॒ वै तत्र॒ यज॑मानस्य वी॒रो जा॑यते। यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते। नि॒का॒मे नि॑कामे नः॑ प॒र्जन्यो॑ वर्॒ष॒त्वित्या॑ह। नि॒का॒मेनि॑कामे ह॒ वै तत्र॑ प॒र्जन्यो॑ वर्॒षति। यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते। फ॒लिन्यो॑ न॒ ओष॑धयः॑ पच्यन्ता॒मित्या॑ह। फ॒लिन्यो॑ ह॒ वै तत्रौष॑धयः॑ पच्यन्ते। यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते। यो॒ग॒क्षे॒मो नः॑ कल्पता॒मित्या॑ह। कल्प॑ते ह॒ वै तत्र॑ प्र॒जाभ्यो॑ योगक्षे॒मः। यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते।।49।।

381300

अ॒न॒ड्वानित्या॑ह जायते वर्॒ षति स॒प्त च॑ ।।13।।

381401

प्र॒जाप॑तिर्दे॒वेभ्यो॑ य॒ज्ञान्व्यादि॑शत्। स आ॒त्मन्न॑श्वमे॒धम॑धत्त। तं दे॒वा अ॑ब्रुवन्। ए॒ष वाव य॒ज्ञः। यद॑श्वमे॒धः। अप्ये॒व नोऽत्रा॒स्त्विति॑। तेभ्य॑ ए॒तान॑न्नहो॒मान्प्राय॑च्छत्। तान॑जुहोत्। तैर्वै स दे॒वान॑प्रीणात्। यद॑न्नहो॒माञ्जु॒होति॑ ।।50।।

381402

दे॒वाने॒व तैर्यज॑मानः॑ प्रीणाति। आज्ये॑न जुहोति। अ॒ग्नेर्वा ए॒तद्रू॒पम्। यदाज्य॑म्। यदाज्ये॑न जु॒होति॑। अ॒ग्निमे॒व तत्प्री॑णाति। मधु॑ना जुहोति। म॒हत्यै वा ए॒तद्दे॒वता॑यै रू॒पम्। यन्मधु॑। यन्मधु॑ना जु॒होति॑ ।।51।।

381403

म॒हतीमे॒व तद्दे॒वतां॑ प्रीणाति। त॒ण्डु॒लैर्जु॑होति। वसू॒नां वा ए॒तद्रू॒पम्। यत्त॑ण्डु॒लाः। यत्त॑ण्डु॒लैर्जु॒होति॑। वसू॒ने॒व तत्प्री॑णाति। पृथु॑कैर्जुहोति। रु॒द्राणां॒ वा ए॒तद्रू॒पम्। यत्पृथु॑काः। यत्पृथु॑कैर्जु॒होति॑। ।।52।।

381404

रु॒द्राने॒व तत्प्री॑णाति। ला॒जैर्जु॑होति। आ॒दि॒त्याना॒ं वा ए॒तद्रू॒पम्। यल्ला॒जाः। यल्ला॒जैर्जु॒होति॑। आ॒दि॒त्याने॒व तत्प्री॑णाति। क॒रम्बैर्जु॑होति। विश्वे॑षां॒ वा ए॒तद्दे॒वाना॑ꣳ रू॒पम्। यत्क॒रम्बाः॑। यत्क॒रम्बैर्जु॒होति॑।।53।।

381405

विश्वा॑ने॒व तद्दे॒वान्प्री॑णाति। धा॒नाभि॑र्जुहोति। नक्ष॑त्राणां॒ वा ए॒तद्रू॒पम्। यद्धा॒नाः। यद्धा॒नाभि॑र्जु॒होति॑। नक्ष॑त्राण्ये॒व तत्प्री॑णाति। सक्तु॒भिर्जु॑होति। प्र॒जाप॑ते॒र्वा ए॒तद्रू॒पम्। यथ्सक्त॑वः। यथ्सक्तु॒भिर्जु॒होति॑।।54।।

381406

प्र॒जा॑पतिमे॒व तत्प्री॑णाति। म॒सूस्यै॑र्जु॑होति। सर्वा॑सां॒ वा ए॒तद्दे॒वता॑नाꣳ रू॒पम्। यन्म॒सूस्या॑नि। यन्म॒सूस्यै॑र्जु॒होति॑। सर्वा॑ ए॒वतद्दे॒वताः॑ प्रीणाति। प्रि॒य॒ङ्गु॒त॒ण्डु॒लैर्जु॑होति। प्रि॒याङ्गा॑ ह॒ वैना॑मै॒ते। ए॒तैर्वै दे॒वा

अश्वस्याङ्गानि समदधुः। यत्प्रियङ्गुतण्डुलैर्जुहोति। अश्वस्यैवाङ्गानि
संदधाति। दशान्नानि जुहोति। दशाक्षरा विराट्। विराट्कृथ्स्नस्यान्नाद्यस्यावरुध्यै ।।55।।
381400
जुहोति मधुना जुहोति पृथुकैर्जुहोति करम्बैर्जुहोति सक्तुभिर्जुहोति
प्रियङ्गुतण्डुलैर्जुहोति चत्वारि च ।।14।।
381501
अन्नहोमानाज्येनाग्नेर्मधुना तण्डुलैः पृथुकैर्लाजैः करम्बैर्धानाभि
स्सक्तुभिर्मसूस्यैः प्रियङ्गुतण्डुलैर्दशान्नानि द्वादश।
प्रजापतिरश्वमेधमसृजत। तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन्। स
एतान्प्रजापतिर्नक्तꣳ होमानपश्यत्। तानजुहोत्। तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन्।
यन्नक्तꣳ होमाञ्जुहोति। यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति। आज्येन
जुहोति। वज्रो वा आज्यम्। वज्रेणैव यज्ञाद्रक्षाꣳ स्यपहन्ति।।56।।
381502
आज्यस्य प्रतिपदं करोति। प्राणो वा आज्यम्। मुखत एवास्य प्राणं दधाति।
अन्नहोमाञ्जुहोति। शरीरवदेवावरुन्धे। व्यत्यासं जुहोति।
उभयस्यावरुध्यै। नक्तं जुहोति। रक्षसामपहत्यै। आज्येनान्ततो जुहोति।।57।।
381503
प्राणो वा आज्यम्। उभयत एवास्य प्राणं दधाति। पुरस्ताच्चोपरिष्टाच्च।
एकस्मै स्वाहेत्याह। अस्मिन्नेव लोके प्रतितिष्ठति। द्वाभ्याꣳ
स्वाहेत्याह। अमुष्मिन्नेव लोके प्रतितिष्ठति। उभयोरेव लोकयोः
प्रतितिष्ठति। अस्मिꣳश्चामुष्मिꣳश्च। शताय स्वाहेत्याह।
शतायुर्वै पुरुषश्शतवीर्यः। आयुरेव वीर्यमवरुन्धे। सहस्राय स्वाहेत्याह।
आयुर्वै सहस्रम्। आयुरेवावरुन्धे। सर्वस्मै स्वाहेत्याह। अपरिमितमेवावरुन्धे ।।58।।
381500
एव यज्ञा द्रक्षाꣳस्यपहन्त्यन्ततो जुहोति शताय स्वाहेत्याह सप्त च ।।15।।
381601
प्रजापतिं वा एष ईप्सतीत्याहुः। योऽश्वमेधेनयजत इति। अथो
आहुः। सर्वाणि भूतानीति । एकस्मै स्वाहेत्याह। प्रजापतिर्वा एकः।
तमेवाप्नोति। एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेत्यभिपूर्वमाहुतीर्जुहोति। अभिपूर्वमेव
सुवर्गं लोकमेति। एकोत्तरं जुहोति।।59।।
381602
एकवदेव सुवर्गं लोकमेति। सन्ततं जुहोति। सुवर्गस्य लोकस्य सन्तत्यै। शताय स्वाहेत्याह।

श॒तायु॒र्वै पुरु॑षश्श॒तवी॑र्यः। आयु॑रे॒व वी॒र्य॑मव॑रुन्धे। स॒हस्रा॑य॒ स्वाहेत्या॑ह।
आयु॒र्वै स॒हस्र॑म्। आयु॑रे॒वाव॑रुन्धे। अ॒युता॑य॒ स्वाहा॑ नि॒युता॑य॒
स्वाहा॑ प्र॒युता॑य॒ स्वाहेत्या॑ह ।।60।।
381603
त्रय॑ इ॒मे लो॒काः। इ॒माने॒व लो॒कानव॑रुन्धे। अर्बु॑दाय॒ स्वाहेत्या॑ह। वाग्वा अर्बु॑दम्।
वाच॑मे॒वाव॑रुन्धे। न्य॑र्बुदाय॒ स्वाहेत्या॑ह। यो वै वा॒चो भू॒मा।
तन्न्य॑र्बुदम्। वा॒च ए॒व भू॒माना॒मव॑रुन्धे। स॒मु॒द्राय॒ स्वाहेत्या॑ह ।।61।।
381604
स॒मु॒द्रमे॒वाप्नो॑ति। मध्या॑य॒ स्वाहेत्या॑ह। मध्य॑मे॒वाप्नो॑ति। अन्ता॑य॒ स्वाहेत्या॑ह। अन्त॑मे॒वाप्नो॑ति। प॒रा॒र्धाय॒
स्वाहेत्या॑ह। प॒रा॒र्धमे॒वाप्नो॑ति। उ॒षसे॒ स्वाहा॒ व्यु॑ष्ट्यै॒ स्वाहेत्या॑ह। रात्रि॒र्वा उ॒षाः।
अह॒र्व्यु॑ष्टिः। अ॒हो॒रा॒त्रे ए॒वाव॑रुन्धे। अथो॑ अहोरा॒त्रयो॑ रे॒व प्रति॑तिष्ठति।
ता यदु॒भयी॒र्दिवा॑ वा॒ नक्तं॑ वा जु॒हु॒यात्। अ॒हो॒रा॒त्रे मो॑हयेत्।
उ॒षसे॒ स्वाहा॒ व्यु॑ष्ट्यै॒ स्वाहो॑देष्य॒ते स्वाहो॑द्य॒ते स्वाहेत्यनु॑दिते
जुहोति। उदि॑ताय॒ स्वाहा॑ सु॒व॒र्गाय॒ स्वाहा॑ लो॒काय॒ स्वाहेत्युदि॑ते
जुहोति। अ॒हो॒रा॒त्रयो॒रव्य॑तिमोहाय ।।62।।
381700
ए॒को॒त्त॒रं जु॑होति प्र॒युता॑य॒ स्वाहेत्या॑ह समु॒द्राय॒ स्वाहेत्या॒हाह॒र्व्यु॑ष्टिस्स॒प्त च॑ ।।16।।
381701
वि॒भू॒र्मा॒त्रा प्र॒भूः पि॒त्रेत्यश्व॑ना॒मानि॑ जुहोति। उ॒भयो॑रे॒वैनं॑
लो॒कयो॒र्ना॒म॒धेयं॑ गमयति। आय॑नाय॒ स्वाहा॒ प्राय॑णाय॒
स्वाहेत्यु॑द्द्रा॒वाञ्जु॑होति। सर्व॑मे॒वैन॒मस्क॑न्नꣳ सुव॒र्गं लो॒कं
ग॑मयति। अ॒ग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहेति॑ पूर्व॒हो॒माञ्जु॑होति।
पूर्व॑ ए॒व द्वि॒षन्तं॒ भ्रातृ॑व्य॒मति॑क्रामति। पृ॒थि॒व्यै स्वाहा॒ऽन्तरि॑क्षाय॒
स्वाहेत्या॑ह। य॒था॒य॒जु॒रे॒वैतत्। अ॒ग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहेति॑
पूर्वदी॒क्षा जु॑होति। पूर्व॑ए॒व द्वि॒षन्तं॒ भ्रातृ॑व्य॒मति॑ क्रामति ।।63।।
381702
पृ॒थि॒व्यै स्वाहा॒ऽन्तरि॑क्षाय॒ स्वाहेत्येक॑वि॒ꣳ॒शिनी॑ दी॒क्षां जु॑होति।
एक॑विꣳशति॒र्वै दे॑वलो॒काः। द्वाद॑श॒ मासाः॒ पञ्च॒र्तवः॑। त्रय॑ इ॒मे
लो॒काः। अ॒सावा॑दि॒त्य एक॑वि॒ꣳ॒शः। ए॒ष सु॑व॒र्गो लो॒कः। सु॒व॒र्गस्य॑
लो॒कस्य॒ सम॑ष्ट्यै। भुवो॑ दे॒वानां॒ कर्म॒णेत्यृ॑तुदी॒क्षा जु॑होति। ऋ॒तूने॒वास्मै॑ कल्पयति।
अ॒ग्नये॒ स्वाहा॑ वा॒यवे॒ स्वाहेति॑ जु॒हो॒त्यन॑न्तरित्यै।।64।।

381703
अ॒र्वाङ्य॒ज्ञस्सं॒क्रा॑म॒त्वित्या॒प्तीर्जु॑होति। सु॒व॒र्गस्य॑ लो॒कस्या॒प्त्यै॑। भू॒तं भव्यं॑ भवि॒ष्यदिति॒ पर्या॑प्तीर्जुहोति। सु॒व॒र्गस्य॑ लो॒कस्य॒ पर्या॑प्त्यै। आ मे॑ गृ॒हा भ॑व॒न्त्वित्या॒भूर्जु॑होति। सु॒व॒र्गस्य॑ लो॒कस्या॒भू॑त्यै। अ॒ग्निना॒ तपो॒ऽन्व॑भव॒दित्य॑नु॒भूर्जु॑होति। सु॒व॒र्गस्य॑ लो॒कस्या॒नु॑भूत्यै। स्वाहा॒ ऽऽधिमाधी॑ताय॒ स्वाहेति॒ सम॑स्तानि वैश्वदे॒वानि॑ जुहोति। सम॑स्तमे॒व द्विष॒न्तं॒ भ्रातृ॑व्य॒मति॑क्रामति ।।65।।

381704
दु॒द्भ्यस्स्वाहा॒ हनू॑भ्या॒ᳪं॒ स्वाहेत्य॑ङ्ग हो॒माञ्जु॑होति। अङ्गे॑ अङ्गे॒ वै पुरु॑षस्य पा॒प्मोप॑श्लिष्टः। अङ्गा॑दङ्गादे॒वैनं॑ पा॒प्मन॒स्तेन॑ मुञ्चति। अ॒ञ्ज्ये॒ताय॒ स्वाहा॑ कृ॒ष्णाय॒ स्वाहा॑ श्वे॒ताय॒ स्वाहेत्य॑श्वरू॒पाणि॑ जुहोति। रू॒पैरे॒वैन॒ᳪं॒ सम॑र्धयति। ओष॑धीभ्य॒स्स्वाहा॒ मूले॑भ्य॒स्स्वाहेत्यो॑षधिहो॒माञ्जु॑होति। द्व॒य्यो वा ओष॑धयः। पुष्पे॑भ्यो॒ऽन्याः॑ फलं॑ गृ॒ह्णन्ति॑। मूले॑भ्यो॒ऽन्याः। ता ए॒वोभयी॒रव॑रुन्धे।।66।।

381705
वन॒स्पति॑भ्य॒स्स्वाहेति॑ वनस्पतिहो॒माञ्जु॑होति। आ॒र॒ण्यस्या॒न्नाद्य॒स्याव॑रुध्यै। मे॒षस्त्वा॑ पच॒तैर॑व॒त्वित्यपा॑व्यानि जुहोति। प्रा॒णा वै दे॒वा अपा॑व्याः। प्रा॒णाने॒वाव॑रुन्धे। कूप्या॑भ्य॒स्स्वाहा॒द्भ्यस्स्वाहेत्य॒पाᳪं होमा॑ञ्जुहोति। अ॒प्सु वा आप॑ः। अन्नं॒ वा आप॑ः। अ॒द्भ्यो वा अन्नं॑ जायते। यदे॒वाद्भ्योऽन्नं॒ जाय॑ते। तदव॑रुन्धे।।67।।

381700
पू॒र्व॒दी॒क्षा जु॑होति॒ पूर्व॑ ए॒व द्विष॒न्तं॒ भ्रातृ॑व्य॒मति॑क्राम॒त्यन॑न्तरित्यै क्रामति रुन्धे॒ जाय॑त॒ एकं॑ च ।।17।।

381801
अम्भाᳪं॑सि जुहोति। अ॒यं वै॑लो॒कोऽम्भाᳪं॑सि। तस्य॒ वस॒वोऽधि॑पतयः। अ॒ग्निर्ज्योति॑ः। यदम्भाᳪं॑सि जु॒होति॑। इ॒मme॒व लो॒कमव॑रुन्धे। वसू॒ना॒ᳪं॒ सायु॑ज्यं गच्छति। अ॒ग्निं ज्योति॒रव॑रुन्धे। नभाᳪं॑सि जुहोति। अ॒न्तरि॑क्षं॒ वै नभाᳪं॑सि ।।68।।

381802
तस्य॑ रु॒द्रा अधि॑पतयः। वा॒युर्ज्योति॑ः। यन्नभाᳪं॑सि जु॒होति॑। अ॒न्तरि॑क्षमे॒वाव॑रुन्धे। रु॒द्राणा॒ᳪं॒ सायु॑ज्यं गच्छति। वा॒युं ज्योति॒रव॑रुन्धे। महाᳪं॑सि जुहोति। अ॒सौ वै लो॒को महाᳪं॑सि। तस्या॑दि॒त्या अधि॑पतयः। सूर्यो॒ ज्योति॑ः ।।69।।

381803
यन्महाᳪं॑सि जु॒होति॑। अ॒मुमे॒व लो॒कमव॑रुन्धे। आ॒दि॒त्याना॒ᳪं॒

सायुज्यं गच्छति। सूर्यं ज्योतिरवरुन्धे। नमो राज्ञेनमो वरुणायेति
यव्यानि जुहोति। अन्नाद्यस्यावरुध्यै। मयोभूर्वातो अभिवातूस्रा
इति गव्यानि जुहोति। पशूनामवरुध्यै। प्राणाय स्वाहा व्यानाय
स्वाहेति संततिहोमाञ्जुहोति। सुवर्गस्य लोकस्य संतत्यै।।70।।
381804
सिताय स्वाहाऽसिताय स्वाहेति प्रमुक्तीर्जुहोति। सुवर्गस्य लोकस्य
प्रमुक्त्यै। पृथिव्यै स्वाहाऽ न्तरिक्षाय स्वाहेत्याह। यथायजुरेवैतत्।
दत्वते स्वाहाऽदन्तकाय स्वाहेति शरीरहोमाञ्जुहोति। पितृलोकमेव
तैर्यजमानोऽवरुन्धे । कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन् युनक्ति।
इमे वै लोकाः परिधयः। इमानेवास्मै लोकान् युनक्ति। सुवर्गस्य लोकस्य
समष्ट्यै ।।71।।
381805
यः प्राणतो य आत्मदा इति महिमानौ जुहोति । सुवर्गो वै लोको महः । सुवर्गमेव ताभ्यां लोकं
यजमानोऽवरुन्धे। आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामिति
समस्तानि ब्रह्मवर्चसानि जुहोति। ब्रह्मवर्चसमेव तैर्यजमानोऽवरुन्धे। जज्ञि
बीजमिति जुहोत्यनन्तरित्यै। अग्नये समनमत्पृथिव्यै समनमदिति
सन्नतिहोमाञ्जुहोति। सुवर्गस्य लोकस्य सन्नत्यै। भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ
जुहोति ।
अयं वै लोको भूतम् ।।72।।
381806
असौ भविष्यत्। अनयोरेव लोकयोः प्रतितिष्ठति। सर्वस्याप्त्यै।
सर्वस्यावरुध्यै। यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं
जुहोति। सर्वस्याप्त्यै। सर्वस्य जित्यै। सर्वमेव तेनाप्नोति। सर्वं
जयति। योऽश्वमेधेन यजते।।73।।
381807
य उचैनमेवंवेद। यज्ञः रक्षाꣳस्यजिघाꣳसन्। स एतान्प्रजापतिर्नक्तꣳ
होमानपश्यत्। तानजुहोत्। तैर्वै सयज्ञाद्रक्षाꣳस्यपाहन्। यन्नक्तꣳ
होमाञ्जुहोति। यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति। उषसे स्वाहा
व्युष्ट्यैस्वाहेत्यन्ततो जुहोति। सुवर्गस्य लोकस्य समष्ट्यै ।।74।।
381800
वै नभाꣳसि सूर्यो ज्योतिस्संतत्यै समष्ट्यै भूतं यजते नव च ।।18।।

381901
एकयूपो वैकादशिनी वा। अन्येषां यज्ञानां यूपा भवन्ति। एकविꣳशिन्यश्वमेधस्य। सुवर्गस्य लोकस्याभिजित्यै । बैल्वो वा खादिरो वा पालाशो वा। अन्येषां यज्ञक्रतूनां यूपा भवन्ति। राज्जुदाल एकविꣳशत्यरत्निरश्वमेधस्य। सुवर्गस्य लोकस्य समष्ट्यै। नान्येषां पशूनां तेजन्या अवद्यन्ति । अवद्यन्त्यश्वस्य ।।75।।
381902
पाप्मा वै तेजनी । पाप्मनोपहत्यै। प्लक्षशाखायामन्येषां पशूनामवद्यन्ति।
वेतसशाखायामश्वस्य। अप्सुयोनिर्वा अश्वः। अप्सुजो
वेतसः। स्व एवास्य योनावववद्यति। यूपेषु ग्राम्यान्पशून्नियुञ्जन्ति।
आरोकेष्वारण्यान्धारयन्ति। पशूनां व्यावृत्त्यै। आ ग्राम्यान्पशूल्लभन्ते।
प्रारण्यान्थ्सृजन्ति। पाप्मनोपहत्यै।।76।।
381900
अश्वस्य व्यावृत्त्यै त्रीणि च ।।19।।
382001
राज्जुदालमग्निष्ठं मिनोति। भ्रूणहत्याया अपहत्यै। पौतुद्रवावभितो
भवतः। पुण्यस्य गन्धस्यावरुध्यै। भ्रूणहत्यामेवास्मादपहत्य। पुण्येन
गन्धेनोभयतः परिगृह्णति। षड्बैल्वा भवन्ति। ब्रह्मवर्चसस्यावरुध्यै।
षट्खादिराः। तेजसोऽवरुध्यै।।77।।
382002
षट्पालाशाः। सोमपीथस्यावरुध्यै। एकविꣳशतिस्संपद्यन्ते। एकविꣳशतिर्वै देवलोकाः।
द्वादश मासाः पञ्चर्तवः। त्रय इमे लोकाः। असावादित्य एकविꣳशः। एष
सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै। शतं पशवो भवन्ति।।78।।
382003
शतायुꣳ पुरुषश्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। सर्वं वा
अश्वमेध्याप्नोति। अपरिमिता भवन्ति। अपरिमितस्यावरुध्यै। ब्रह्मवादिनो वदन्ति ।
कस्माथ्सत्यात्। दक्षिणतोऽन्येषां पशूनामवद्यन्ति।
उत्तरतोऽश्वस्येति। वारुणो वा अश्वः ।।79।।
382004
एषा वै वरुणस्य दिक्। स्वायामेवास्य दिश्यवद्यति। यदितरेषां
पशूनामवद्यति। शतदेवत्यं तेनावरुन्धे। चितेऽग्नावधि
वैतसे कटेऽश्वं चिनोति। अप्सुयोनिर्वा अश्वः। अप्सुजो
वेतसः। स्व एवैनं योनौ प्रतिष्ठापयति। पुरस्तात्प्रत्यञ्चं

तू॒प॒रं चि॑नोति। प॒श्चात्प्रा॒चीनं॑ गोमृ॒गम् ।।80।।
382005
प्रा॒णा॒पा॒नावे॒वास्मि॑न्थ्स॒म्यञ्चौ॑ दधाति। अश्वं॑ तू॒प॒रं
गो॑मृ॒गमिति॒ सर्व॒हुत॑ ए॒ताञ्जु॑होति। ए॒षां लो॒कानां॑म॒भिजि॑त्यै।
आ॒त्मना॒ऽभिजु॑होति। सात्मा॑नमे॒वैन॒ꣳ सत॑नुं करोति। सात्म॒ाऽमुष्मि॑ल्लो॒ँके
भ॑वति। य ए॒वं वेद॑। अथो॒ वसो॑रे॒व धारां॒ तेनाव॑रुन्धे।
इ॒लु॒वदा॑य॒ स्वाहा॑ बलि॒वदा॑य॒ स्वाहेत्या॑ह। सं॒व॒थ्स॒रो वा
ई॑लु॒वर्दः॑। प॒रि॒व॒थ्स॒रो ब॑लि॒वर्दः॑। सं॒व॒थ्स॒राद्दे॒व
प॑रिवथ्स॒रादायु॒रव॑रुन्धे। आयु॑रे॒वास्मि॑न्दधाति।
तस्मा॑दश्वमेधया॒जी ज॒रसा॑ वि॒स्रसा॒मुं लो॒कमै॑ति।।81।।
382000
तेज॒सोऽव॑रुध्यै भव॒न्त्यश्वो॑ गोमृ॒गमि॑लु॒वर्दा॑श्च॒त्वारि॑ च ।।20।।
382101
ए॒क॒वि॒ꣳशो॑ऽग्निर्भ॑वति। ए॒क॒वि॒ꣳशस्स्तोम॑ः।
एक॑विꣳशति॒र्यूपाः॑। यथा॒ वा अश्वा॑ वर्॒षभा व॒ा
वृषा॑ण॒स्ससस्फु॒रेरन्॑। ए॒वमे॒तथ्सोमा॒स्ससस्फु॒रन्ते।
यदे॑कवि॒ꣳशाः।ते यथ्स॑मृच्छेरन्॑। ह॒न्येता॑स्य य॒ज्ञः। द्वा॒द॒श
ए॒वाग्निस्स्या॒दित्या॑हुः। द्वा॒द॒शस्स्तोम॑ः ।।82।।
382102
एका॑दश॒ यूपाः॑। यद्द्वा॑द॒शो॑ऽग्निर्भव॑ति। द्वाद॑श॒ मासाः॑स्संवथ्स॒रः।
सं॒व॒थ्स॒रेणै॒वास्मा॒ अन्न॒ मव॑रुन्धे। यद्दश॒ यूपा॒ भव॑न्ति।
दशा॑क्षरा वि॒राट्। अन्नं॑ वि॒राट्। वि॒राजै॒वान्नाद्य॒मव॑रुन्धे।
य एका॑द॒शः। स्तन॑ ए॒वास्यै॒षः ।।83।।
382103
दु॒ह ए॒वैनां॒ तेन॑। तदा॑हुः ।
यद्द्वा॑द॒शो॑ऽग्निस्स्या॑द्द्वा॒द॒शस्स्तोम॒ एका॑दश॒
यूपाः॑। यथा॒ स्थूरि॑णा या॒यात्। ता॒दृक्तत्। ए॒क॒वि॒ꣳश
ए॒वाग्निस्स्या॒दित्या॑हुः। ए॒क॒वि॒ꣳशस्स्तोम॑ः।
एक॑विꣳशति॒र्यूपाः॑। यथा॒ प्रष्टि॑भि॒र्याति॑।
ता॒दृगे॒व तत्।।84।।
382104

यो वा अश्वमेधे तिस्रः ककुभो वेद। ककुद्धराज्ञां
भवति। एकविꣳशोऽग्निर्भवति। एकविꣳशस्स्तोमः।
एकविꣳशतिर्यूपाः। एता वा अश्वमेधे तिस्रः ककुभः। य एवं वेद। ककुद्ध
राज्ञां भवति। यो वा अश्वमेधे त्रीणि शीर्षाणि वेद। शिरो ह
राज्ञां भवति। एकविꣳशोऽग्निर्भवति।
एकविꣳशस्स्तोमः। एकविꣳशतिर्यूपाः। एतानि वा
अश्वमेधे त्रीणि शीर्षाणि। य
एवं वेद। शिरो ह राज्ञां भवति ।।85।।
382100
द्वादशस्सतोमस्स एव तच्छिरो ह राज्ञां भवति षट् च।।21।।
382201
देवा वा अश्वमेधे पवमाने। सुवर्गं लोकं न प्राजानन्। तमश्वः
प्राजानात्। यदश्वमेधेऽश्वेन मेध्येनोदञ्चो बहिष्पवमानꣳ
सर्पन्ति। सुवर्गस्य लोकस्य प्रज्ञात्यै।
न वै मनुष्यस्सुवर्गं लोकमञ्जसा वेद। अश्वो
वै सुवर्गं लोकमञ्जसा वेद। यदुद्गातोद्गायेत्। यथा
क्षेत्रज्ञोऽन्येन पथा प्रतिपादयेत्। तादृक्तत् ।।86।।
382202
उद्गातारमपरुध्य। अश्वमुद्गीथाय वृणीते।
यथा क्षेत्रज्ञोऽञ्जसा नयति। एवमेवैनमश्वस्सुवर्गं
लोकमञ्जसा नयति । पुच्छमन्वारभन्ते । सुवर्गस्य लोकस्य
समष्ट्यै । हिं करोति। सामैवाकः । हिं करोति। उद्गीथ एवास्य सः ।।87।।
382203
वडबा उपरुन्धन्ति। मिथुनत्वाय प्रजात्यै। अथो
यथोपगातार उपगायन्ति । तादृगेव तत्। उदगासीदश्वो मेध्य
इत्याह। प्राजापत्यो वा अश्वः। प्रजापतिरुद्गीथः।
उद्गीथमेवावरुन्धे। अथो ऋक्सामयोरेव प्रतितिष्ठति।
हिरण्येनोपाकरोति। ज्योतिर्वै हिरण्यम्। ज्योतिरेव मुखतो
दधाति। यजमाने च प्रजासु च । अथो हिरण्यज्योतिरेव
यजमानस्सुवर्गं लोकमेति ।।88।।
382200

तथ्स उपाकरोति चत्वारि च ।।22।।
382301
पुरुषो वै यज्ञः। यज्ञः प्रजापतिः। यदश्वे
पशून्नियुञ्जन्ति। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते। अश्वं
तूपरं गोमृगम् । तानग्निष्ठ आलभते।
सेनामुखमेव तथ्सश्यति। तस्माद्राजमुखं
भीष्मं भावुकम् । आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे।
पूर्वाग्निमेव तं कुरुते ।।89।।
382302
तस्मात्पूर्वाग्निं पुरस्तात्स्थापयन्ति । पौष्णमन्वञ्चम् ।
अन्नं वै पूषा । तस्मात्पूर्वाग्नावाहार्यमाहरन्ति।
ऐन्द्रापौष्णमुपरिष्टात्। ऐन्द्रो वै राजन्योऽन्नं पूषा ।
अन्नाद्येनैवैनमुभयतः परिगृह्णाति। तस्माद्राजन्योऽ
न्नादो भावुकः। आग्नेयौ कृष्णग्रीवौ बाहुवोः ।
बाहुवोरेव वीर्यंधत्ते ।।90।।
382303
तस्माद्राजन्यो बाहुबली भावुकः । त्वाष्ट्रौ लोमशसक्थौ
सक्थ्योः। सक्थ्योरेव वीर्यं धत्ते। तस्माद्राजन्य ऊरुबली
भावुकः। शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे ।
ब्रह्मवर्चसमेवोपरिष्टाद्धत्ते । अथो कवचे एवैते
अभितः पर्यूहते । तस्माद्राजन्यस्सन्नद्धो वीर्यं करोति।
धात्रे पृषोदरमधस्तात्। प्रतिष्ठामेवैतां कुरुते। अथो
इयं वै धाता । अस्यामेव प्रतितिष्ठति। सौर्यं बलक्षं पुच्छे।
उथ्सेधमेव तङ्कुरुते।
तम्मादुथ्सेधम्भये प्रजाअभिसश्रयन्ति।।91।।
382300
कुरुते धत्ते कुरुते पञ्च च ।।23।।
380000
साङ्ग्रहण्या चतुष्टय्यो यो वैयः पितुश्चत्वारो यथाऽनिक्तं
प्रजापतये त्वा यथा प्रोख्षितँव्विभूराह
प्रजापतिरकामयताश्वमेधेन प्रजापतिर्न किञ्चन सावित्रमा

ब्रह्मन्प्रजापतिर्देवेभ्यः प्रजापती रक्षांसि

प्रजापतिमीप्सति विभूरश्वनामान्यम्भांस्येकयूपो राजुदाल

मेकविंशो देवाः पुरुषस्त्रयोविंशतिः ।।23।।

साङ्ग्रहण्या तस्मादश्वमेधयाजी यत्परिमिता यद्यज्ञमुखे यो

दीक्षान्देवानेव त्रय इमे सिताय प्राणापानावेवास्मिन्

तस्माद्राजन्य एकनवतिः ।।91।।

साङ्ग्रहण्या सश्रयन्ति ।। हरिः ओम् ।। श्री कृष्णार्पणमस्तु। अष्टमप्रपाठकस्समाप्तः

390000

नवमप्रपाठक प्रारम्भः हरिःओम्।।

390101

प्र॒जाप॑तिरश्वमे॒धम॑सृजत। सो᳚ऽस्माथ्सृ॒ष्टोऽपा᳚क्रामत्।

तम॑ष्टाद॒शिभि॒रनु॒ प्रायु॑ङ्क्। तमा᳚प्नोत्।

तमा॒प्त्वाऽष्टा॑द॒शिभि॒रवा॑रुन्ध। यद॑ष्टाद॒शिन॑

आल॒भ्यन्ते᳚। य॒ज्ञमे॒व तैरा॒प्त्वा यज॑मा॒नोऽव॑रुन्धे।

स॒व्वँ॒थ्स॒रस्य॒ वा ए॒षा प्र॑ति॒मा।

यद॑ष्टाद॒शिन॑ः। द्वाद॑श॒ मासा॒ः पञ्च॒र्तव॑ः ।।1।।

390102

स॒व्वँ॒थ्स॒रो᳚ऽष्टाद॒शः। यद॑ष्टाद॒शिन॑ आल॒भ्यन्ते᳚। स॒व्वँ॒थ्स॒रमे॒व तैरा॒प्त्वा

यज॑मा॒नोऽव॑रुन्धे। अ॒ग्निष्टे᳚ऽन्यान्प॒शूनु॑पाकु॒रोति॑। इत॑रेषु॒

यूपे᳚ष्वष्टाद॒शिनोऽजा॑मित्वाय। नव॑न॒वाल॑भ्यन्ते सवीर्य॒त्वाय॑। यदा॑र॒ण्यैस्स

॑स्था॒पये᳚त्। व्यव॑स्येतां पितापु॒त्रौ। व्यध्वा॑नः क्रामेयुः।

विदू॒रङ्ग्राम॑योर्ग्रामा॒न्तौ स्या॑ताम्।।2।।

390103

ऋख्षीका᳚ः पुरुषव्या॒घ्राः प॑रिमो॒षिण॑ आव्या॒धिनी॒स्तस्क॑रा॒

अर॑ण्ये॒ष्वाजा॑योरन्न्। तदा॑हुः। अप॑शवो॒ वा ए॒ते। यदा॑र॒ण्याः।

यदा॑र॒ण्यैस्स॑ स्था॒पये᳚त्। ख्षि॒प्रे यज॑मान॒मर॑ण्यं मृतः॑ ह॑रेयुः।

अर॑ण्यायतना॒ ह्या॑र॒ण्याः प॒शव॒ इति॑। यत्प॒शून्नालभे॑त। अव॑रुद्धा अस्य

प॒शव॑स्स्युः। यत्पर्य॑ग्निकृतानुथ्सृ॒जेत्।।3।।

390104

य॒ज्ञवे॒श॒सङ्कु॑र्यात्। यत्प॒शूना॒लभ॑ते। तेनै॒व प॒शूनव॑रुन्धे।

यत्पर्य॑ग्निकृतानुथ्सृ॒जत्यय॑ज्ञवेशसाय । अव॑रुद्धा अस्य प॒शवो॒

भव॑न्ति । न य॑ज्ञवेश॒सम्भ॑वति।

न यज॑मान॒मर॑ण्यम्मृतः॑ ह॑रन्ति। ग्रा॒म्यैस्सस्था॑पयति।

ए॒ते वै प॒शव॒ः ख्षेमो॒ नाम॑। सं पि॑तापु॒त्राववस्यतः। समध्वा॑नः

क्रामन्ति। स॒म॒न्ति॒कङ्ग्राम॑योर्ग्रामा॒न्तौ भ॑वतः। नख्षीका᳚ः

पुरुषव्या॒घ्राः प॑रिमो॒षिण॑ आ व्या॒धिनी॒स्तस्क॑रा॒ अर॑ण्ये॒ष्वाजा॑यन्ते।।4।।

390100

ऋ॒तव॑स्स्यातामुथ्सृ॒जेथ्स्य॑त॒स्त्रीणि॑ च ।।1।।

390201

प्र॒जाप॑तिरकामयतो॒भौ लो॒कावव॑रुन्धी॒येति॑। स ए॒तानु॒भया॑न्प॒शून॑पश्यत्।
ग्रा॒म्या॒ꣳश्चा॑र॒ण्या॒ꣳश्च॑। तानाल॑भत। तैर्वै॑ स उ॒भौ लो॒कावव॑ारुन्ध। ग्रा॒म्यैरे॒व
प॒शुभि॑रि॒मँल्लो॒कमव॑ारुन्ध। आ॒र॒ण्यैर॒मुम्।
यद्ग्रा॒म्यान्प॒शूना॒लभ॑ते। इ॒मम॒ेव तैर्लो॒कमव॑रुन्धे। यदा॑र॒ण्यान् ।।5।।
390202
अ॒मुन्तैः। अन॑वरुद्धो वा ए॒तस्य॑ सव्वँथ्स॒र इत्या॑हुः।
य इ॒तइ॑तश्चातु॒र्मा॒स्यानि॑ सव्वँथ्स॒रं प्र॑यु॒ङ्क्त इति॑।
ए॒तावा॒न् वै स॑व्वँथ्स॒रः। यच्चा॑तु॒र्मा॒स्यानि॑। यदे॒ते चा॑तु॒र्मा॒स्याः᳚ प॒शव॑
आल॒भ्यन्ते॑᳚। प्र॒त्यख्ष॑मे॒व तैस्स॑व्वँथ्स॒रय्यँज॑मा॒नोऽव॑रुन्धे। विवा ए॒ष प्र॒जया॑
प॒शुभि॑र् ऋध्यते। यस्स॑व्वँथ्स॒रं प्र॑यु॒ङ्क्ते । स॒व्वँ॒थ्स॒रस्सु॑व॒र्गो लो॒कः ।।6।।
390203
सु॒व॒र्गन्तु लो॒कन्नाप॑राध्नोति। प्र॒जा वै प॒शव॑ एका॒द॒शिनी॑᳚। यदे॒त
ऐ॑कादशि॒नाः᳚ प॒शव॑ आल॒भ्यन्ते॑᳚। सा॒ख्षादे॒व प्र॒जां
प॒शून् यज॑मा॒नोऽव॑रुन्धे। प्र॒जाप॑तिर्वि॒राज॑मसृजत। सा
सृ॒ष्टाऽश्व॑मे॒धं प्रावि॑शत्। तान्द॒शिभि॒रनु॒ प्राय॑ुङ्क्त। तामा॑᳚प्नोत्।
ताम॒ाप्त्वा द॒शिभि॒रव॑ारुन्ध॒। यद्द॒शिन॑ आल॒भ्यन्ते॑᳚।।7।।
390204
वि॒राज॑मे॒व तैरा॒प्त्वा यज॑मा॒नोऽव॑रुन्धे। एका॑दश द॒शत॒ आल॑भ्यन्ते।
एका॑दशाख्षरा त्रि॒ष्टुप्। त्रैष्टु॑भाः᳚ प॒शव॑ः। प॒शूने॒वाव॑रुन्धे। वै॒श्व॒दे॒वो
वा अश्व॑ः। ना॒ना॒दे॒वत्या॑ः प॒शवो॑ भवन्ति। अश्व॑स्य सर्व॒त्वाय॑। नाना॑रूपा भवन्ति।
तस्मा॒न्नाना॑रूपाः᳚ प॒शव॑ः। ब॒हु॒रू॒पा भ॑वन्ति। तस्मा॑᳚द्बहु॒रू॒पाः᳚ प॒शव॒स्सम॑ृद्ध्यै।।8।।
390200
आ॒र॒ण्याँल्लो॒को द॒शिन॑ आल॒भ्यन्ते॒ नाना॑रूपाः᳚ प॒शवो॒ द्वे च॑ ।।2।।
390301
अ॒स्मै वै लो॒काय॑ ग्रा॒म्याः᳚ प॒शव॒ आल॑भ्यन्ते। अ॒मुष्मा॑ आर॒ण्याः।
यद्ग्रा॒म्यान्प॒शूना॒लभ॑ते। इ॒मम॒ेव तैर्लो॒कमव॑रुन्धे। यदा॑र॒ण्यान्।
अ॒मुन्तैः। उ॒भया॑न्प॒शूनाल॑भते। गा॒म्या॒ꣳश्चा॑र॒ण्या॒ꣳश्च॑।
उ॒भयो॑᳚र्लो॒कयो॒रव॑रुद्ध्यै। उ॒भया॑न्प॒शूनाल॑भते ।।9।।
390302
ग्रा॒म्या॒ꣳश्चा॑र॒ण्या॒ꣳश्च॑। उ॒भय॑स्यान्नाद्य॒स्याव॑रुद्ध्यै ।
उ॒भया॑न्प॒शूनाल॑भते। ग्रा॒म्या॒ꣳश्चा॑र॒ण्या॒ꣳश्च॑। उ॒भये॑षां

प॒शू॒नामव॑रुद्ध्यै। त्रय॑स्त्र॒यो भवन्ति। त्रय॑ इ॒मे लो॒काः।

ए॒षाँल्लो॒काना॒माप्त्यै᳚। ब्र॒ह्म॒वा॒दिनो॑ वदन्ति। कस्मा᳚थ्स॒त्यात् ।।10।।

390303

अ॒स्मिँल्लो॒के ब॒हव॒ᳵ काम॒ा इति॑। यथ्स॑मा॒नीभ्यो॑

दे॒वता᳚भ्यो॒ऽन्ये᳚ऽन्ये प॒शव॑ आल॒भ्यन्ते᳚।

अ॒स्मिन्ने॒व तल्लो॒के कामा᳚न्दधाति। तस्मा॑द॒स्मिँल्लो॒के

ब॒हव॒ᳵ कामा᳚ः। त्र॒या॒णाणा॑न्त्र॑याणाꣳ स॒ह व॒पा जु॑होति।

त्र्या॑वृ॒तो वै दे॒वाः । त्र्या॑वृत इ॒मे लो॒काः।

ए॒षाँल्लो॒काना॒माप्त्यै᳚। ए॒षाँल्लो॒काना॒ङ्कॢप्त्यै᳚।

पर्य॑ग्निकृतानार॒ण्यानु॒थ्सृ॑ज॒न्त्यहि॑ꣳसायै ।।11।।

390300

अव॑रुद्ध्या उ॒भया᳚न्प॒शूनाल॑भते स॒त्यादहि॑ꣳसायै ।।3।।

390401

यु॒ञ्जन्ति॑ ब्र॒ध्नमित्या॑ह। अ॒सौ वा आ॑दि॒त्यो ब्र॒ध्नः। आ॒दि॒त्यमे॒वास्मै॑ युनक्ति।

अ॒रु॒षमित्या॑ह। अ॒ग्निर्वा अ॑रु॒षः। अ॒ग्निमे॒वास्मै॑ युनक्ति।

चर॑न्त॒मित्या॑ह। वा॒युर्वै चरन्न् । वा॒युमे॒वास्मै॑ युनक्ति। परि॑त॒स्थुष॒ इत्या॑ह ।।12।।

390402

इ॒मे वै लो॒काᳶ परि॑त॒स्थुषः॑। इ॒माने॒वास्मै॑ लो॒कान् यु॑नक्ति।

रोच॑न्ते रोच॒ना दि॒वीत्या॑ह। नक्ष॑त्राणि॒ वै रो॑च॒ना दि॒वि। नक्ष॑त्राण्ये॒वास्मै॑

रोचयति। यु॒ञ्जन्त्य॑स्य॒ काम्येत्या॑ह। कामा॑ने॒वास्मै॑ युनक्ति।

हर॒ी विप॑क्ष॒सेत्या॑ह। इ॒मे वै हर॒ी विप॑क्षसा। इ॒म ए॒वास्मै॑ युनक्ति ।।13।।

390403

शोणा॑ धृ॒ष्णू नृ॒वाह॒सेत्या॑ह। अ॒हो॒रा॒त्रे वै नृ॒वाह॑सा। अ॒हो॒रा॒त्रे

ए॒वास्मै॑ युनक्ति। ए॒ता ए॒वास्मै॑ दे॒वता॑ युनक्ति। सु॒व॒र्गस्य॑ लो॒कस्य॒

सम॑ष्ट्यै। के॒तुङ्कृ॒ण्वन्न॑के॒तव॒ इति॑ ध्व॒जं प्रति॑मुञ्चति। यश॑ ए॒वैन॒ꣳ

रा॒ज्ञा᳚ङ्गमयति। जी॒मूत॑स्येव भवति॒ प्रती॑क॒मित्या॑ह। य॒था॒य॒जु॒रे॒वैतत् । ये ते॒ पन्था॑नस्सवितᳶ

पू॒र्व्यास॒ इत्य॑ध्व॒र्युर्यज॑मानव्वाँचयत्य॒भिजि॑त्यै ।।14।।

390404

पर॒ा वा ए॒तस्य॑ य॒ज्ञ ए॑ति। यस्य॑ प॒शुरु॒पाकृ॑तो॒ऽन्यत्र॒ वेद्या॒ एति॑। ए॒त

स्तो॑तरे॒तेन॑ प॒था पु॒नरश्व॒मावर्त॑यासि न॒ इत्या॑ह। वा॒युर्वै स्तोता᳚।

वा॒युमे॒वास्य॑ पु॒रस्ता᳚द्दधा॒त्यावृ॑त्त्यै। यथा॒ वै ह॒विषो॑ गृ॒हीतस्य॒ स्कन्द॑ति।

एवव्वाँ एतदश्वस्य स्कन्दति। यदस्योपाकृतस्य लोमानि शीयन्ते। यद्वालेषु
काचानावयन्ति। लोमान्येवास्य तथ्सम्भरन्ति।।15।।
390405
भूर्भुवस्सुवरिति प्राजापत्याभिरावयन्ति। प्राजापत्यो वा अश्वः ।
स्वयैवैनन्देवतया समर्धयन्ति । भूरिति महिषी। भुव इति वावाता। सुवरिति
परिवृक्ती। एषाँल्लोकानामभिजित्यै। हिरण्ययाः काचा भवन्ति। ज्योतिर्वै
हिरण्यम्। राष्ट्रमश्वमेधः ।।16।।
390406
ज्योतिश्चैवा स्मै राष्ट्रञ्च समीची दधाति। सहस्रम्भवन्ति। सहस्रसम्मितस्सुवर्गो लोकः।
सुवर्गस्य लोकस्याभिजित्यै। अप वा एतस्मात्तेज इन्द्रियं पशवश्श्रीः
क्रामन्ति। योऽश्वमेधेन यजते। वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति
महिष्यभ्यनक्ति। तेजो वा आज्यम्। तेजो गायत्री। तेजसैवास्मै तेजोऽवरुन्धे ।।17।।
390407
रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसेति वावाता।
तेजो वा आज्यम्। इन्द्रियन्त्रिष्टुप्। तेजसैवास्मा
इन्द्रियमवरुन्धे। आदित्यास्त्वाऽञ्जन्तु
जागतेन छन्दसेति परिवृक्ती। तेजो वा आज्यम्। पशवो जगती। तेजसैवास्मै
पशूनवरुन्धे। पत्नयोऽभ्यञ्जन्ति। श्रिया वा एतद्रूपम्।।18।।
390408
यत्पत्नयः। श्रियमेवास्मिन्तद्दधति। नास्मात्तेज इन्द्रियं
पशवश्श्रीरपक्रामन्ति। लाजी 3 ञ्छाची 3 न् यशोममाँ
इत्यतिरिक्तमन्नमश्वायोपाहरन्ति।
प्रजामेवान्नादीङ्कुर्वते। एतद्देवा अन्नमत्तैतदन्नमद्धि
प्रजापत इत्याह। प्रजायामेवान्नाद्यन्दधते। यदि
नावजिघ्रेत्। अग्निः पशुरासीदित्यवघ्रापयेत्। अव हैव
जिघ्रति। आक्रान् वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं पृथिवी
सधस्थमित्यश्वमनुमन्त्रयते। एषाँल्लोकानामभिजित्यै। समिद्धो अञ्जन्कृदरं
मतीनामित्यश्वस्याप्रियो भवन्ति सरूपत्याय ।।19।।
390400
परितस्थुष इत्याहेमे एवास्मै युनक्त्यभिजित्यै
भरन्त्यश्वमेधो रुन्धे रूपञ्जिघ्रति त्रीणि च ।।4।।

390501
तेजसा वा एष ब्रह्मवर्चसेन व्यृद्ध्यते। योऽश्वमेधेन
यजते। होता च ब्रह्मा च ब्रह्मोद्यव्वँदतः। तेजसा चैवैनं
ब्रह्मवर्चसेन च समर्धयतः। दक्षिणतो ब्रह्मा भवति।
दक्षिणतआयतनो वै ब्रह्मा। बार्हस्पत्यो वै ब्रह्मा।
ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति।
तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः। उत्तरतो होता
भवति ।।20।।
390502
उत्तरतआयतनो वै होता। आग्नेयो वै होता। तेजो
वा अग्निः। तेज एवास्योत्तरतो दधाति।
तस्मादुत्तरोऽर्धस्तेजस्वितरः। यूपमभितो वदतः।
यजमानदेवत्यो वै यूपः। यजमानमेव तेजसा च
ब्रह्मवर्चसेन च समर्धयतः। किस्विदासीत्पूर्वचित्तिरित्याह।
द्यौर्वै वृष्टिः पूर्वचित्तिः ।।21।।
390503
दिवमेव वृष्टिमवरुन्धे। किस्विदासीद्बृहद्वय इत्याह । अश्वो वै बृहद्वयः।
अश्वमेवावरुन्धे । किस्विदासीत्पिशङ्गिलेत्याह। रात्रिर्वै पिशङ्गिला।
रात्रिमेवावरुन्धे। किस्विदासीत्पिलिप्पिलेत्याह। श्रीर्वै पिलिप्पिला।
अन्नाद्यमेवावरुन्धे।।22।।
390504
कस्स्विदेकाकी चरतीत्याह। असौ वा आदित्य एकाकी चरति। तेज एवावरुन्धे। क उस्विज्जायते
पुनरित्याह। चन्द्रमा वै जायते पुनः। आयुरेवावरुन्धे। कि
स्विद्धिमस्य भेषजमित्याह। अग्निर्वै हिमस्य भेषजम्। ब्रह्मवर्चसमेवावरुन्धे।
किस्विदावपनं महदित्याह ।।23।।
390505
अयंव्वै लोक आवपनम्महत्। अस्मिन्नेव लोके प्रतितिष्ठति। पृच्छामि त्वा परमन्तं पृथिव्या
इत्याह। वेदिर्वै परोऽन्तः पृथिव्याः। वेदिमेवावरुन्धे। पृच्छामि त्वा भुवनस्य
नाभिमित्याह। यज्ञो वै भुवनस्य नाभिः। यज्ञमेवावरुन्धे। पृच्छामि त्वा
वृष्णो अश्वस्य रेत इत्याह। सोमो वै वृष्णो
अश्वस्य रेतः। सोमपीथमेवावरुन्धे। पृच्छामि वाचः परमं व्योमेत्याह।

ब्रह्म वै वाचः परमं व्योम । ब्रह्मवर्चसमेवावरुन्धे ।।24।।
390500
होता भवति वै वृष्टिः पूर्वचित्तिरन्नाद्यमेवावरुन्धे
महदित्याह सोमो वै वृष्णो अश्वस्य रेतश्चत्वारि च ।।5।।
390601
अप वा एतस्मात्प्राणाः क्रामन्ति। योऽश्वमेधेन यजते। प्राणाय स्वाहा
व्यानाय स्वाहेति संज्ञप्यमान आहुतीर्जुहोति। प्राणानेवास्मिन्दधाति।
नास्मात्प्राणा अपक्रामन्ति। अवन्तीस्स्थावन्तीस्त्वाऽवन्तु। प्रियन्त्वा
प्रियाणाम्। वर्षिष्ठमाप्यानाम्। निधीनान्त्वा निधिपतिं हवामहे वसो
ममेत्याह। अपैवास्मै तद्भुवते ।।25।।
390602
अथो धुवन्त्येवैनम्। अथो न्यैवास्मै ह्नुवते। त्रिः परियन्ति। त्रय इमे लोकाः।
एभ्य एवैनँल्लोकेभ्यो धुवते। त्रिः पुनः परियन्ति। षट्थ्संपद्यन्ते। षड्वा
ऋतवः। ऋतुभिरेवैनन्धुवते। अपवा एतेभ्यः प्राणाः क्रामन्ति ।।26।।
390603
ये यज्ञे धुवनन्तन्वते। नवकृत्वः परियन्ति। नव वै पुरुषे प्राणाः।
प्राणानेवात्मन्दधते। नैभ्यः प्राणा अपक्रामन्ति। अम्बे अम्बाल्यम्बिक इति
पत्नीमुदानयति। अह्वतैवैनाम्। सुभगे काम्पीलवासिनीत्याह।
तप एवैनामुपनयति। सुवर्गे लोके संप्रोर्ण्वाथामित्याह ।।27।।
390604
सुवर्गमेवैनांल्लोकङ्गमयति। आऽहमजानि गर्भधमा त्वमजाऽसि गर्भधमित्याह। प्रजा वै पशवो
गर्भः। प्रजामेव पशूनात्मन्धत्ते। देवा वा अश्वमेधे पवमाने।
सुवर्गंल्लोकं न प्राजानन्। तमश्वः प्राजानात्। यथ्सूचीभिरसिपथान्कल्पयन्ति।
सुवर्गस्य लोकस्य प्रज्ञात्यै। गायत्री त्रिष्टुब्जगतीत्याह।।28।।
390605
यथायजुरेवैतत्। त्रय्यस्सूच्यो भवन्ति। अयस्मय्यो रजता हरिण्यः। अस्य वै लोकस्य
रूपमयस्मय्यः। अन्तरिक्षस्य रजताः। दिवो हरिण्यः। दिशो वा
अयस्मय्यः। अवान्तरदिशा रजताः। ऊर्ध्वा हरिण्यः। दिश एवास्मै कल्पयति।
कस्त्वा छ्यति कस्त्वा विशास्तीत्याहाहिंसायै ।।29।।
390600
ह्नुवते क्रामन्त्यूर्ण्वाथामित्याह जगतीत्याह कल्पयत्येकञ्च ।।6।।
390701

अपुवा एुतस्मा॒च्छ्री रा॒ष्ट्रङ्क्रा॑मति। यो॓ऽश्वमे॒धेन॒
यज॑ते। ऊ॒र्ध्वामे॑ना॒मुच्छ्र॑यता॒दित्या॑ह। श्रीर्वै रा॒ष्ट्रम॑श्वमे॒धः। श्रिय॑मे॒वास्मै॑
रा॒ष्ट्रमू॒र्ध्वमुच्छ्र॑यति। वे॒णु॒भा॒रङ्गि॒रावि॒वेत्या॑ह। रा॒ष्ट्रंव्वै भा॒रः।
रा॒ष्ट्रमे॒वास्मै॒ पर्यू॑हति। अथा॓स्या॒ मध्य॑मेधता॒मित्या॑ह। श्रीर्वै रा॒ष्ट्रस्य॒
मध्या॑म् ।।30।।
390702
श्रिय॑मे॒वाव॑रुन्धे। शी॒ते वाते॑ पु॒नन्नि॒वेत्या॑ह। ख्षेमो॒ वै रा॒ष्ट्रस्य॑ शी॒तो वात॑ः। ख्षेम॑मे॒वाव॑रुन्धे।
यद्ध॑रि॒णी यव॒मत्तीत्या॑ह। विड्वै ह॑रि॒णी। रा॒ष्ट्रय्यँव॑ः। विश॑ञ्चै॒वास्मै॑ रा॒ष्ट्रञ्च॑ स॒मीची॑
दधाति। न पु॒ष्टं प॒शु म॑न्यत॒ इत्या॑ह। तस्मा॒द्राजा॑ प॒शून्न पुष्य॑ति ।।31।।
390703
शू॒द्रा यदर्य॑जारा॒ न पोषा॑य धनाय॒तीत्या॑ह। तस्मा॓द्वैशीपु॒त्रन्नाभिषि॑ञ्चन्ते।
इ॒यय्यँ॑का श॑कुन्ति॒केत्या॑ह। विड्वै श॑कुन्ति॒का। रा॒ष्ट्रम॑श्वमे॒धः। विश॑ञ्चै॒वास्मै॑ रा॒ष्ट्रञ्च॑ स॒मीची॑ दधाति।
आ॒ह॒ल॒मिति॒ सर्प॒तीत्या॑ह। तस्मा॓द्रा॒ष्ट्राय॒ विश॑स्सर्पन्ति। आह॑तङ्ग॒भे पस॒ इत्या॑ह। विड्वै गभ॑ः ।।32।।
390704
रा॒ष्ट्रं पस॑ः। रा॒ष्ट्रमे॒व वि॒श्याह॑न्ति। तस्मा॓द्रा॒ष्ट्रं
व्विश॒ङ्घातु॑कम्। मा॒ता च॑ ते पि॒ता च॑ त॒ इत्या॑ह। इ॒यँव्वै मा॒ता। अ॒सौ पि॒ता। आ॒भ्यामे॒वैन॒ं
परि॑दधाति। अग्र॑व्वृ॒ँख्षस्य॑ रोहत॒ इत्या॑ह। श्रीर्वै वृ॒ख्षस्याग्र॑म् । श्रि॒यमे॒वाव॑रुन्धे ।।33।।
390705
प्रसु॑ल॒ामीति॑ ते पि॒ता ग॒भे मु॒ष्टिम॑तꣳसय॒दित्या॑ह। विड्वै गभ॑ः। रा॒ष्ट्रम्मु॒ष्टिः।
रा॒ष्ट्रमे॒व वि॒श्याह॑न्ति। तस्मा॓द्रा॒ष्ट्रंव्विश॒ङ्घातु॑कम्।
अप॒ वा ए॒तेभ्य॑ः प्रा॒णाः क्रा॑मन्ति। ये य॒ज्ञेऽपू॑त॒व्वँद॑न्ति। द॒धि॒क्राव्ण्णो॑
अकारिष॒मिति॑ सुरभि॒मती॒मृच॑व्वँदन्ति। प्रा॒णा वै सु॑र॒भय॑ः। प्रा॒णाने॒वात्मन्द॑धते। नैभ्य॑ः प्रा॒णा
अप॑क्रामन्ति। आपो॒ हि ष्ठा म॑यो॒भुव॒ इत्य॒द्भिर्मा॓र्जयन्ते। आपो॒ वै सर्वा॑
दे॒वता॓ः। दे॒वता॑भिरे॒वात्मान॑ं पवयन्ते ।।34।।
390700
रा॒ष्ट्रस्य॒ मध्य॒ं पुष्य॑ति॒ गभो॑ रुन्धे दधते च॒त्वारि॑ च ।।7।।
390801
प्र॒जाप॑तिः प्र॒जास्सृ॒ष्ट्वा प्रे॒णाऽनु॒ प्रावि॑शत्।
ताभ्य॒ः पु॒नस्सम्भ॑वितु॒न्नाश॑क्नोत्। सो॓ऽब्रवीत्। ऋ॒ध्नव॒दित्थ्सः।
यो मे॒ऽतः पुन॑स्स॒म्भर॒दिति॑। तन्दे॒वा अ॑श्वमे॒धेनै॒व सम॑भरन्। तत॒ो वै त आ॓र्ध्नुवन्।
यो॓ऽश्वमे॒धेन॒ यज॑ते। प्र॒जाप॑तिमे॒व सम्भ॑रत्यृ॒ध्नोति॑। पुरु॑ष॒माल॑भते ।।35।।
390802

वै॒रा॒जो वै पुरु॑षः। वि॒राज॑मे॒वाल॑भते।
अथो॒ अन्नं॒ वै वि॒राट्। अन्न॑मे॒वाव॑रुन्धे। अश्व॒माल॑भते।
प्रा॒जा॒प॒त्यो वा अश्वः॑। प्र॒जाप॑तिमे॒वाल॑भते। अथो॒ श्रीर्वा
एक॑शफम्। श्रिय॑मे॒वाव॑रुन्धे। गामाल॑भते ।।36।।
390803
य॒ज्ञो वै गौः। य॒ज्ञमे॒वाल॑भते। अथो॒ अन्न॒ँव्वै गौः। अन्न॑मे॒वाव॑रुन्धे। अ॒जा॒वी
आल॑भते भू॒म्ने। अथो॒ पुष्टि॒र्वै भू॒मा। पुष्टि॑मे॒वाव॑रुन्धे।
पर्य॑ग्निकृतं॒ पुरु॑षञ्चार॒ण्याᳪं श्चोथ्सृ॑जन्त्यहि॒ᳪं॑सायै।
उ॒भौ वा ए॒तौ प॒शू आल॑भ्येते। यश्चा॑व॒मो यश्च॑ प॒र॒मः।
ते॑ऽस्यो॒भये॑ य॒ज्ञे ब॒द्धाः। अ॒भीष्टा॑ अ॒भिप्री॑ताः। अ॒भिजि॑ता
अ॒भिहु॑ता भवन्ति। नैन॑न्दु॒ङ्ख्ण्व॑ᳫ प॒शवो॑ य॒ज्ञे ब॒द्धाः।
अ॒भीष्टा॑ अ॒भिप्री॑ताः। अ॒भि॑जिता अ॒भिहु॑ता हिᳪंसन्ति।
यो॑ऽश्वमे॒धेन॒ यज॑ते। य उ॑चैन मे॒वँव्वेद॑ ।।37।।
390800
ल॒भ॒ते॒ गामाल॑भते प॒र॒मो॑ऽष्टौ च॑ ।।8।।
390901
प्र॒थ॒मेन॒ वा ए॒ष स्तोमे॑न रा॒ध्वा। च॒तु॒ष्टो॒मेन॑
कृतेनाया॑ना॒मुत्त॒रेहन्॑। ए॒क॒वि॒ᳪंशे प्र॑ति॒ष्ठायां॑
प्रति॑तिष्ठति। ए॒क॒वि॒ᳪंशात्प्र॑ति॒ष्ठाया॑ ऋ॒तून॒न्वारो॑हति।
ऋ॒तवो॒ वै पृ॒ष्ठानि॑। ऋ॒तव॑स्स॒व्वँथ्स॒रः। ऋ॒तुष्वे॒व
स॒व्वँथ्स॒रे प्र॑ति॒ष्ठाय॑। दे॒वता॑ अ॒भ्यारो॑हति। शक्व॑रयᳫ
पृ॒ष्ठम्भ॑वन्त्य॒न्यद॑न्य॒च्छन्द॑ः। अ॒न्ये॑ऽन्ये॒ वा ए॒ते
प॒शव॒ आल॑भ्यन्ते ।।38।।
390902
उ॒तेव॑ ग्रा॒म्याः। उ॒तेवा॑र॒ण्याः।
अह॑रे॒व रू॒पेण॒ सम॑र्धयति। अथो॒ अह्न॑ ए॒वैष ब॒लिर् ह्रि॑यते।
तदा॑हुः। अप॑शवो॒ वा ए॒ते। यद॑जा॒वय॑श्चार॒ण्याश्च॑। ए॒ते
वै सर्वे॑ प॒शव॑ः। यद्ग॒व्या इति॑।
ग॒व्यान्प॒शूनु॒त्त॒मेऽह॒न्नाल॑भते ।।39।।
390903
तेनै॒वोभया॑न्प॒शूनव॑रुन्धे। प्रा॒जा॒प॒त्या भ॑वन्ति।

अन॑भिजितस्या॒भिजि॑त्यै। सौ॒रीर्न॑व॒ श्वे॒ता व॒शा अ॑नूब॒न्ध्या॑ भवन्ति। अ॒न्त॒त
ए॒व ब्र॑ह्मवर्च॒समव॑रुन्धे। सोमा॑य स्व॒राज्ञे॑ऽनोवा॒हाव॑न॒ड्वाहा॒विति॑
द्व॒न्द्विन॑ꣳ प॒शूनाल॑भते। अ॒हो॒रा॒त्राणा॑म॒भिजि॑त्यै। प॒शुभि॒र्वा ए॒ष
व्यृ॑ध्यते। यो॑ऽश्वमे॒धेन॒ यज॑ते। छ॒ग॒लङ्क॒ल्माषङ्कि॑किदी॒विविं॑दी॒गय॒मिति॑
त्वा॒ष्ट्रान्प॒शूना ल॑भते। प॒शुभि॑रे॒वात्मान॒ꣳ सम॑र्धयति। ऋ॒तुभि॒र्वा ए॒ष
व्यृ॑ध्यते। यो॑ऽश्वमे॒धेन॒ यज॑ते। पि॒शङ्गा॒स्त्रयो॑ वास॒न्ता
इत्यृ॑तुप॒शूनाल॑भते। ऋ॒तुभि॑रे॒वात्मान॒ꣳ सम॑र्धयति। आ वा ए॒ष प॒शुभ्यो॑
वृश्च्यते। यो॑ऽश्वमे॒धेन॒ यज॑ते। पर्य॑ग्निकृ॒ता उथ्सृ॑ज॒न्त्यना॑व्रस्काय ।।40।।
390900
ल॒भ्य॒न्ते॒ ल॒भ॒ते॒ त्वा॒ष्ट्रान्प॒शूनाल॑भते॒ऽष्टौ च॑ ।।9।।
391001
प्र॒जाप॑तिरकामयत म॒हान॑न्ना॒दस्स्या॒मिति॑। स ए॒ताव॑श्वमे॒धे
म॑हि॒माना॑वपश्यत्। ताव॑गृह्णीत। त॒तो वै स म॒हान॑न्ना॒दो॑ऽभवत्। यꣳ
का॒मये॑त म॒हान॑न्ना॒दस्स्या॒मिति॑। स ए॒ताव॑श्वमे॒धे म॑हिमानौ॑ गृह्णीत।
म॒हाने॒वान्ना॒दो भ॑वति। य॒ज॒मा॒न॒दे॒व॒त्या॑ वै व॒पा। राजा॑ महि॒मा।
यद्व॒पाम्म॑हि॒म्नो॑भ॒यत॑ꣳ परि॒यज॑ति। यज॑मानमे॒व रा॒ज्येनो॑भ॒यत॒ꣳ
परि॑गृह्णाति। पु॒रस्ता॑थ्स्वाहाका॒रा वा अ॒न्ये दे॒वाः। उ॒परि॑ष्टाथ्स्वाहाकारा
अ॒न्ये। ते वा ए॒तेऽश्व॑ ए॒व मेध्य॑ उ॒भये॒ऽव॑रुध्यन्ते।
यद्व॒पाम्म॑हि॒म्नोभ॒यत॑ꣳ परि॒यज॑ति। ताने॒वोभया॑न्प्रीणाति ।।41।।
391000
प॒रि॒यज॑ति॒ षट्च॑ ।।10।।
391101
वै॒श्व॒दे॒वो वा अश्व॑ः। तय्यँ॒त्प्रा॑जाप॒त्यङ्कु॒र्यात्। या दे॒वता॒
अपि॑भागाः। ता भा॑ग॒धेये॑न॒ व्य॑र्धयेत्। दे॒वता॑भ्यस्स॒मद॑न्दध्यात्।
स्ते॒गान्दꣳष्ट्रा॑भ्याम्म॒ण्डूका॒ञ्जम्भ्ये॑भि॒रिति॑।
आज्य॑मव॒दान॑ङ्कृ॒त्वा प्र॑तिस॒ङ्ख्याय॒माहु॑तीर्जु॑होति। या ए॒व
दे॒वता॒ अपि॑भागाः। ता भा॑ग॒धेये॑न॒ सम॑र्धयति। न
दे॒वता॑भ्यस्स॒मद॑न्दधाति ।।42।।
391102
चतु॑र्दशै॒ताननु॑वा॒काञ्जु॑हो॒त्यन॑न्तरित्यै। प्र॒या॒साय॒ स्वाहेति॑
पञ्चद॒शम्। पञ्च॑दश॒ वा अ॑र्धमा॒सस्य॒ रात्र॑यः। अ॒र्ध॒मा॒स॒शस्स॑व्वँथ्स॒र

आ᳚प्यते। दे॒वा॒सु॒रास्सय्यँ॑त्ता आसन्। ते᳚ऽब्रुवन्न॒ग्रय॑स्स्विष्ट॒कृतः॑।
अश्व॑स्य॒ मेध्य॑स्य व॒यमु॑द्धारमु॒द्ध॑रामहै। अथै॒ताऩ॒भि भ॑वा॒मेति॑।
ते लोहि॑त॒मुद॑हरन्त। ततो॑ दे॒वा अभ॑वन्न् ।।43।।
391103
परा॒ऽसु॑राः। यथ्स्वि॑ष्ट॒कृद्भ्यो॒ लोहि॑तञ्जु॒होति॒ भ्रातृ॑व्याभिभूत्यै। भव॑त्या॒त्मना᳚।
परा᳚ऽस्य॒ भ्रातृ॑व्यो॒ भव॑ति। गो॒मृ॒ग॒क॒ण्ठेन॑ प्रथ॒मामाहु॑तिञ्जुहोति।
प॒शवो॒ वै गो॑मृ॒गः। रु॒द्रो᳚ऽग्निस्स्वि॑ष्ट॒कृत्। रु॒द्राद॒व प॒शू॒न॒न्तर्द॑धाति।
अथो॒ यत्रै॒षाऽऽहु॑तिर्हू॒यते᳚। न तत्र॑ रु॒द्रः प॒शू॒न॒भिम॑न्यते ।।44।।
391104
अ॒श्व॒श॒फेन॑ द्वि॒तीया॒माहु॑तिञ्जुहोति। प॒शवो॒ वा एक॑शफम्।
रु॒द्रो᳚ऽग्निस्स्वि॑ष्ट॒कृत्। रु॒द्राद॒व प॒शू॒न॒न्तर्द॑धाति। अथो॒
यत्रै॒षाऽऽहु॑तिर्हू॒यते᳚। न तत्र॑ रु॒द्रः प॒शू॒न॒भिम॑न्यते।
अ॒य॒स्मये॑न कम॒ण्डलु॑ना तृ॒तीया᳚म्। आहु॑तिञ्जुहोत्याया॒स्यो॑ वै
प्र॒जाः । रु॒द्रो᳚ऽग्निस्स्वि॑ष्ट॒कृत्। रु॒द्राद॒व प्र॒जा
अ॒न्तर्द॑धाति। अथो॒ यत्रै॒षाऽऽहु॑तिर्हू॒यते᳚। न तत्र॑ रु॒द्रः
प्र॒जा अ॒भिम॑न्यते ।।45।।
391200
द॒धा॒त्यभ॑वन्मन्यते प्र॒जा अ॒न्तर्द॑धाति॒ द्वे च॑ ।।11।।
391201
अश्व॑स्य॒ वा आल॑ब्धस्य॒ मेध॒ उद॑क्रामत्। तद॑श्वस्तो॒मीय॑मभवत्।
यद॑श्वस्तो॒मीय॑ञ्जुहोति॑। समे॑धमे॒वैन॒माल॑भते। आज्ये॑न जुहोति। मेधो
वा आज्य᳚म्। मेधो᳚ऽश्वस्तो॒मीय᳚म्। मेधे॑नै॒वास्मि॒न्मेध॑न्दधाति।
षट्त्रि॒ꣳ॑शतञ्जुहोति। षट्त्रि॒ꣳ॑शदख्षरा बृ॒हती ।।46।।
391202
बार्ह॑ताः प॒शव॑ः। सा प॑शू॒नाम्मात्रा᳚। प॒शू॒नेव मात्र॑या॒ सम॑र्धयति। ता
यद्भूय॑सीर्वा॒ कनी॑यसीर्वा जु॒हु॒यात्। प॒शून्मात्र॑या॒ व्य॑र्धयेत्।
षट्त्रि॒ꣳ॑शतञ्जुहोति। षट्त्रि॒ꣳ॑शदख्षरा बृ॒ह॒ती। बार्ह॑ताः प॒शव॑ः। सा प॑शू॒नाम्मात्रा᳚।
प॒शू॒नेव मात्र॑या॒ सम॑र्धयति ।।47।।
391203
अ॒श्व॒स्तो॒मीयꣳ॑ हु॒त्वा द्वि॒पदा॑ जुहोति।
द्वि॒पाद्वै पुरु॑षो॒ द्विप्र॑तिष्ठः। तदे॑नं प्रति॒ष्ठया॒

समर्धयति। तदाहुः। अश्वस्तोमीयं पूर्वꣳ होतव्या3 न्द्विपदा3 इति।
अश्वो वा अश्वस्तोमीयम्। पुरुषो द्विपदाः। अश्वस्तोमीयꣳ हुत्वा
द्विपदा जुहोति। तस्माद्द्विपाच्चतुष्पादमत्ति। अथो द्विपद्येव
चतुष्पदः प्रतिष्ठायपति । द्विपदा हुत्वा। नान्यामुत्तरामाहुतिञ्जुहुयात्।
यदन्यामुत्तरामाहुतिञ्जुहुयात्। प्रप्रतिष्ठायाश्च्यवेत। द्विपदा अन्ततो
जुहोति प्रतिष्ठित्यै ।।48।।
391300
बृहत्यर्धयति स्थापयति पञ्च च ।।12।।
391301
प्रजापतिरश्वमेधमसृजत। सोऽस्माथ्सृष्टोऽपाक्रामत्।
तय्यँज्ञक्रतुभिरन्वैच्छत्। तय्यँज्ञक्रतुभिर्नान्वविन्दत्।
तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्।
यथ्संव्वँथ्सरमिष्टिभिर्यजते। अश्वमेव तदन्विच्छति। सावित्रियो भवन्ति ।।49।।
391302
इयँव्वै सविता। यो वा अस्यान्नश्यति यो निलयते। अस्याव्वाँव तंव्विन्दन्ति।
न वा इमाङ्कश्चनेत्याहुः। तिर्यङ्गोर्ध्वोत्येतुमर्हतीति।
यथ्सावित्रियो भवन्ति। सवितृप्रसूत एवैनमिच्छति।
ईश्वरो वा अश्वः प्रमुक्तः परां परावतङ्गन्तोः।
यथ्सायन्धृतीर्जुहोति। अश्वस्यैव यत्यै धृत्यै ।।50।।
391302
यत्प्रातरिष्टिभिर्यजते। अश्वमेव तदन्विच्छति।
यथ्सायन्धृतीर्जुहोति। अश्वस्यैव यत्यै धृत्यै।
तस्माथ्सायं प्रजाः क्षेम्या भवन्ति। यत्प्रातरिष्टिभिर्यजते।
अश्वमेव तदन्विच्छति। तस्माद्दिवा नष्टैष एति। यत्प्रातरिष्टिभिर्यजते
सायन्धृतीर्जुहोति। अहोरात्राभ्यामेवैनमन्विच्छति। अथो
अहोरात्राभ्यामेवास्मै योगक्षेमङ्कल्पयति ।।51।।
भवन्ति धृत्या एनमन्विच्छत्येकञ्च ।।13।।
391401
अप वा एतस्माच्छ्री राष्ट्रङ्क्रामति। योऽश्वमेधेन
यजते। ब्राह्मणौ वीणागाथिनौ गायतः। श्रिया वा एतद्रूपम्। यद्वीणा।
श्रियमेवास्मिन्तद्धत्तः। यदा खलु वै पुरुषश्श्रियमश्नुते। वीणाऽस्मै

वाद्यते। तदा॑हुः। यदु॒भौ ब्रा॑ह्म॒णौ गाये॑ताम् ।।52।।
391402
प्र॒भ्रꣳशु॑कास्मा॒च्छ्रीस्स्या॑त्। न वै ब्रा॑ह्म॒णे
श्रीर्र॑मत॒ इति॑। ब्रा॒ह्म॒णो॑ऽन्यो गाये॑त्। रा॒ज॒न्यो॑ऽन्यः।
ब्रह्म॒ वै ब्रा॑ह्म॒णः। ख्ष॒त्त्रꣳ रा॑ज॒न्य॑ः। तथा॑ हास्य॒
ब्रह्म॑णा च ख्ष॒त्त्रेण॑ चोभ॒यत॒श्श्रीः॑ परि॑गृहीता भवति। तदा॑हुः।
यदु॒भौ दिवा॒ गाये॑ताम्। अपा॑स्माद्रा॒ष्ट्रङ्क्रा॑मेत् ।।53।।
391403
न वै ब्रा॑ह्म॒णे रा॒ष्ट्रꣳ र॑मत॒ इति॑। य॒दा खलु॒ वै राजा॑ क॒ामय॑ते। अथ॑
ब्रा॒ह्म॒णञ्जि॑नाति। दिवा॑ ब्राह्म॒णो गा॑येत्। नक्तꣳ॑ राज॒न्य॑ः। ब्रह्म॑णो॒
वै रू॒पमहः॑। ख्ष॒त्त्रस्य॒ रात्रिः॑। तथा॑ हास्य॒ ब्रह्म॑णा च ख्ष॒त्त्रेण॑ चोभ॒यतो॑
रा॒ष्ट्रं परि॑गृहीतम्भवति। इत्य॑ददा॒ इत्यय॑जथा॒ इत्य॑पच॒ इति॑ ब्राह्म॒णो
गाये॑त्। इ॒ष्टा॒पू॒र्तँव्वै ब्रा॑ह्म॒णस्य॑ ।।54।।
391404
इ॒ष्टा॒पू॒र्तेनै॒वैन॒ꣳ स सम॑र्धयति। इत्य॑जिना॒ इत्य॑युध्यथा॒ इत्य॒मुꣳ
स॑ङ्ग्रा॒मम॑ह॒न्निति॑ राज॒न्य॑ः। यु॒द्धंव्वै
रा॑ज॒न्य॑स्य। यु॒द्धेनै॒वैन॒ꣳ स सम॑र्धयति। अक्ल्॒प्ता
वा ए॒तस्य॒र्तव॒ इत्या॑हुः। यो॑ऽश्वमे॒धेन॒ यज॑त॒ इति॑। ति॒स्रो॑ऽन्यो
गाय॑ति ति॒स्रो॑ऽन्यः। षट्थ्सं॑प॑द्यन्ते। षड्वा ऋ॒तव॑ः। ऋ॒तूने॒वास्मै॑ कल्पयतः।
ताभ्याꣳ॑ सु॒स्थाया॑म्। अ॒नो॒यु॒क्ते च॑ श॒ते च॑
ददाति। श॒तायु॒ः पु॑रु॑षश्श॒तेन्द्रि॑यः। आयु॑ष्ये॒वेन्द्रिये प्रति॑तिष्ठति ।।55।।
391400
गाये॑ताङ्क्रामेद्ब्राह्म॒णस्य॑ कल्पयतश्च॒त्वारि॑ च ।।14।।
391501
सर्वे॑षु वा ए॒षु लो॒केषु॑ मृत्यव॒ोऽन्वाय॑त्ताः। तेभ्यो॒ यदाहु॑ती॒र्न
जु॑हुयात्। लो॒के लो॑क एनं मृत्युर्वि॑न्देत्। मृत्यवे॒ स्वाहा॑ मृत्यवे॒
स्वाहेत्य॑भिपूर्वमाहु॑तीर्जुहोति। लो॒काल्लो॑कादे॒व मृत्युमव॑यजते।
नैनं॑ल्लोकेलो॑के मृत्युर्वि॑न्दति। यद॒मुष्मै॒ स्वाहा॒ऽमुष्मै॒ स्वाहेति॒
जुह्व॑थ्स॒ञ्चख्षी॑त। ब॒हुं मृत्यु॒मम॒ित्रङ्कु॑र्वीत। मृत्यवे॒
स्वाहेत्येक॑स्मा ए॒वैका॑ञ्जुहुयात्। एक॒ो वा अ॒मुष्मि॑ल्लोके मृ॒त्युः ।।56।।
391502

अ॒श॒न॒या॒ मृत्यु॒रे॒व। तमे॒वामु॒ष्मिँ॑ल्लो॒केऽव॑यजते। भ्रू॒ण॒ह॒त्यायै
स्वाहेत्य॑वभृ॒थ आहु॑तिञ्जुहोति। भ्रू॒ण॒ह॒त्यामे॒वाव॑यजते। तदा॑हुः।
यद्भ्रू॑णह॒त्या पा॒त्र्याऽर्थ॑। कस्मा॑द्य॒ज्ञेऽपि॑
क्रियत॒ इति॑। अमृ॑त्यु॒र्वा अ॒न्यो भ्रू॑णह॒त्याया॒ इत्या॑हुः। भ्रु॒ण॒ह॒त्या वाव
मृ॒त्युरिति॑। यद्भ्रू॑णह॒त्यायै॒ स्वाहेत्य॑वभृ॒थ आहु॑तिञ्जु॒होति॑।।57।।
391503
मृ॒त्युमे॒वाहु॑त्या तर्पयि॒त्वा प॑रि॒पाण॑ङ्कृ॒त्वा। भ्रू॒ण॒घ्ने भे॑ष॒जङ्क॑रोति।
ए॒ताꣳ ह॒ वै मु॑ण्डि॒भ औद॑न्य॒वः। भ्रू॒ण॒ह॒त्यायै॒ प्राय॑श्चित्तिँ॑र्वि॒दाञ्च॑कार। यो
ह॒ास्यापि॑ प्र॒जायां॑ ब्राह्म॒णꣳ हन्ति॑। सर्व॑स्मै॒ तस्मै॑ भेष॒जङ्क॑रोति।
जु॒म्ब॒काय॒ स्वाहेत्य॑वभृ॒थ उ॑त्त॒मामाहु॑तिञ्जुहोति। वरु॑णो॒ वै जु॑म्ब॒कः।
अ॒न्त॒त ए॒व वरु॑ण॒मव॑यजते। ख॒ल॒तेर्वि॑क्लि॒धस्य॑ शु॒क्लस्य॑ पि॒ङ्गा॒ख्यस्य॑
मू॒र्धञ्जु॑होति। ए॒तद्वै वरु॑णस्य रू॒पम्। रू॒पेणै॒व वरु॑ण॒मव॑यजते ।।58।।
391500
लो॒के मृ॒त्युर्जु॑होति॑ मू॒र्धञ्जु॑होति॒ द्वे च॑ ।।15।।
391601
वा॒रु॒णो वा अश्व॑ः। तन्दे॒वत॑या॒ व्य॑र्धयति। यत्प्रा॑जाप॒त्यङ्क॑रोति॑।
नमो॒ राज्ञे॒ नमो॒ वरु॑णा॒येत्या॑ह। वा॒रु॒णो वा अश्व॑ः। स्वयै॒वैन॑न्दे॒वत॑या॒ सम॑र्धयति।
नमोऽश्वा॑य॒ नम॑ः प्र॒जाप॑तय॒ इत्या॑ह। प्रा॒जा॒प॒त्यो वा अश्व॑ः।
स्वयै॒वैन॑न्दे॒वत॑या॒ सम॑र्धयति। नमोऽधि॑पतय॒ इत्या॑ह ।।59।।
391602
धर्मो॒ वा अधि॑पतिः। धर्म॑मे॒वाव॑रुन्धे। अधि॑पतिर॒स्यधि॑पतिम्मा कु॒र्वधि॑पतिर॒हं
प्र॒जाना॑म्भूयास॒मित्या॑ह। अधि॑पतिमे॒वैनꣳ॑ सम॒ानाना॑ङ्करोति। मान्धे॑हि॒ मयि॑
धे॒हीत्या॑ह। अ॒शिष॑मे॒वैतामाशा॑स्ते। उ॒पाकृ॑ताय॒ स्वाहेत्यु॒पाकृ॑ते
जुहोति। आल॑ब्धाय॒ स्वाहेति॒ नियु॑क्ते जुहोति। हु॒ताय॒ स्वाहेति॑
हु॒ते जु॑होति। ए॒षांल्लो॒काना॑म॒भिजि॑त्यै ।।60।।
391603
प्र वा ए॒ष ए॒भ्यो लो॒केभ्य॑श्च्यवते। यो॑ऽश्वमे॒धेन॒ यज॑ते।
आ॒ग्ने॒यमैँ॑न्द्रा॒ग्नमा॑श्वि॒नम्। तान्प॒शूल॑भते॒
प्रति॑ष्ठित्यै। यदा॑ग्ने॒यो भव॑ति। अ॒ग्निस्सर्वा॑ दे॒वता॑ः। दे॒वता॑ ए॒वाव॑रुन्धे।
ब्रह्म॒ वा अ॒ग्निः। ख्ष॒त्रमिन्द्रः॑। यदैँ॑न्द्रा॒ग्नो भव॑ति ।।61।।
391604

ब्रह्मक्षत्रे एवाव॑रुन्धे। यदा॑श्विनो भव॑ति। आशिषामव॑रुद्ध्यै।
त्रयो॑ भवन्ति। त्रय॑ इमे लोकाः। एष्वेव॑ लोकेषु प्रति॑तिष्ठति।
अग्नयेऽꣳहोमुचेऽष्टाक॑पाल इति दर्श॑हविषमिष्टिन्निर्व॑पति।
दशा॑क्षरा विराट्। अन्नँ॑विराट्। विराजैवान्नाद्यमव॑रुन्धे।
अग्नेर्म॑न्वे प्रथमस्य प्रचे॑तस इति॑ याज्यानुवाक्या॑ भवन्ति सर्वत्वाय॑ ।।62।।
391600
अधि॑पतय इत्या॑हाभि॑जित्या ऐन्द्राग्नो भव॑ति रुन्ध एक॑ञ्च ।।16।।
391701
यद्यश्व॑मुपतप॑द्विन्देत्। आग्नेयमष्टाक॑पालन्निर्व॑पेत्। सौम्यञ्चरुम्।
सावित्रमष्टाक॑पालम्। यदा॑ग्नेयो भव॑ति। अग्निस्सर्वा॑ देवताः॑।
देवता॑भिरेवैन॑म्भिषज्यति। यथ्सौम्यो भव॑ति। सोमो वा ओष॑धीनाꣳ राजा॑।
याभ्य॑ एवैनंव्विन्दति॑ ।।63।।
391702
ताभि॑रेवैन॑म्भिषज्यति। यथ्सा॑वित्रो भव॑ति। सवितृप्र॑सूत एवैन॑म्भिषज्यति।
एताभि॑रेवैन॑न्देवता॑भिर्भिषज्यति। अगदो हैव भ॑वति। पौष्णञ्चरुन्निर्व॑पेत्। यदि॑
श्लोणस्स्यात्। पूषा वै श्लौण्य॑स्य भिषक्। स एवैन॑म्भिषज्यति। अश्लो॑णो हैव भ॑वति ।।64।।
391703
रौद्रञ्चरुन्निर्व॑पेत्। यदि॑ महती देवता॑ऽभिमन्ये॑त। एतद्देवत्यो॑ वा
अश्वः॑। स्वयैवैन॑न्देवत॑या भिषज्यति। अगदो हैव भ॑वति।
वैश्वानरन्द्वाद॑शकपालन्निर्व॑पेन्मृगाखरे यदि नागच्छे॑त्।
इयव्वाँ अग्निर्वै॑श्वानरः। इयमेवैन॑मर्चिभ्यां॑
परिरोधमान॑यति। आहैव सुत्यमर्ह॑गच्छति। यद्य॑धीयात् ।।65।।
391704
अग्नयेऽꣳहोमुचेऽष्टाक॑पालः। सौर्यं॑ पयः॑। वायव्य॑ आज्य॑भागः। यज॑मानो वा अश्वः॑।
अꣳहसा वा एष गृ॑हीतः। यस्याश्वो मेधा॑य प्रोक्षि॑तोऽध्येति॑। यदꣳ॑होमुचे॑ निर्वप॑ति।
अꣳहस एव तेन॑ मुच्यते। यज॑मानो वा अश्वः॑। रेत॑सा वा एष व्यृ॑ध्यते ।।66।।
391705
यस्याश्वो मेधा॑य प्रोक्षि॑तोऽध्येति॑। सौर्यꣳ॑ रेतः॑। यथ्सौर्यं॑ पयो भव॑ति। रेत॑सैवैनꣳ स सम॑र्धयति।
यज॑मानो वा अश्वः॑। गर्भै॑र्वा एष व्यृ॑ध्यते। यस्याश्वो मेधा॑य
प्रोक्षि॑तोऽध्येति॑। वायव्या॑ गर्भाः॑।
यद्वा॑यव्य॑ आज्य॑भागो भव॑ति। गर्भै॑रेवैनꣳ स सम॑र्धयति।

अथो यस्यैषाऽश्वमेधे प्रायश्चित्तिः क्रियते। इष्ट्वा वसीयान्भवति ।।67।।
391700
विन्दत्यश्लोणो हैव भवत्यधीयादध्यते गभैरेवैनः स समर्धयति द्वे च ।।17।।
391801
तदाहुः। द्वादश ब्रह्मौदनान्थ्सस्थिते निर्वपेत्। द्वादशभिर्वेष्टिभिर्यजेतेति।
यदिष्टिभिर्यजेत। उपनामुक एनय्यँज्ञस्स्यात्। पापीयाःस्तु स्यात्। आप्तानि वा
एतस्य छन्दाःसि। य ईजानः। तानि क एतावदाशु पुनः प्रयुञ्जीतेति। सर्वा
वै सस्थिते यज्ञे वागाप्यते ।।68।।
391802
साप्ता भवति यातयाम्नी। क्रूरीकृतेव हि भवत्यरुष्कृता। सा न पुनः प्रयुज्येत्याहुः।
द्वादशैव ब्रह्मौदनान्थ्सस्थिते निर्वपेत्। प्रजापतिर्वा ओदनः। यज्ञः प्रजापतिः।
उपनामुक एनय्यँज्ञो भवति। न पापीयान्भवति। द्वादश भवन्ति। द्वादश
मासास्सव्वँथ्सरः। सँव्वथ्सर एव प्रतितिष्ठति ।।69।।
391800
आप्यते सव्वँथ्सर एकञ्च ।।18।।
391901
एष वै विभूर्नाम यज्ञः। सर्वःँ ह वै तत्र विभु भवति। यत्रैतेन यज्ञेन
यजन्ते। एष वै प्रभूर्नाम यज्ञः। सर्वःँ ह वै तत्र प्रभु भवति।
यत्रैतेन यज्ञेन यजन्ते। एष वा ऊर्जस्स्वान्नाम यज्ञः। सर्वःँह वै
तत्रोर्जस्वद्भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै पयस्स्वान्नाम यज्ञः ।।70।।
391902
सर्वःँ ह वै तत्र पयस्वद्भवति। यत्रैतेन यज्ञेन यजन्ते।
एष वै विधृतो नाम यज्ञः। सर्वःँ ह वै तत्र
विधृतम्भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै व्यावृत्तो नाम यज्ञः।
सर्वःँ ह वै तत्र व्यावृत्तम्भवति। यत्रैतेन यज्ञेन यजन्ते। एष वै
प्रतिष्ठितो नाम यज्ञः। सर्वःँ ह वै तत्र प्रतिष्ठितम्भवति ।।71।।
391903
यत्रैतेन यज्ञेन यजन्ते। एष वै तेजस्वी नाम यज्ञः । सर्वःँ ह वै तत्र तेजस्वि
भवति । यत्रैतेन यज्ञेन यजन्ते। एष वै ब्रह्मवर्चसी नाम यज्ञः।
आ ह तत्र ब्राह्मणो ब्रह्मवर्चसी जायते। यत्रैतेन यज्ञेन यजन्ते।
एष वा अतिव्याधी नाम यज्ञः। आ ह वै तत्र राजन्योऽतिव्याधी जायते।
यत्रैतेन यज्ञेन यजन्ते। एष वै दीर्घो नाम यज्ञः। दीर्घायुषो ह

वै तत्र॑ मनु॒ष्या॑ भवन्ति। यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते। ए॒ष वै क्लृ॒प्तो
नाम॑ य॒ज्ञः। कल्प॑ते ह॒ वै तत्र॑ प्र॒जाभ्यो॑ योगक्षे॒मः। यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते ।।72।।
391900
पय॑स्स्वा॒न्नाम॑ य॒ज्ञः प्रति॑ष्ठितम्भवति॒ यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते॒ षट्च॑ ।।19।।
392001
ए॒षवै विभूः॑ प्र॒भूरू॒र्जस्वा॒न्पय॑स्वा॒न् विधृ॑तो॒ व्यावृ॑त्तः॒
प्रति॑ष्ठितस्तेज॒स्वी ब्र॑ह्मवर्च॒स्य॑तिव्या॒धी दी॒र्घः॑ क्लृ॒प्तो द्वाद॑श ।।
ता॒र्प्येणाश्वँ॒ सञ्ज्ञ॑पयन्ति। य॒ज्ञो वै ता॒र्प्यम्। य॒ज्ञेनै॒वैनँ॒ सम॑र्धयन्ति।
या॒मेन॒ साम्ना॑ प्रस्तो॒ताऽनूप॑तिष्ठते। य॒म॒लो॒कमे॒वैनं॑ङ्गमयति।
ता॒र्प्ये च॑ कृत्यधीवा॒से चाश्वँ॒ सञ्ज्ञ॑पयन्ति। ए॒तद्वै प॑शू॒नां रू॒पम्।
रू॒पेणै॒व प॒शूनव॑रुन्धे। हि॒र॒ण्य॒क॒शि॒पु भ॑वति। तेज॒सोऽव॑रुद्ध्यै ।।73।।
392002
रु॒क्मो भ॑वति। सु॒व॒र्गस्य॑ लो॒कस्यानु॑ख्यात्यै। अश्वो॑ भवति।
प्र॒जाप॑ते॒राप्त्यै॑। अ॒स्य वै लो॒कस्य॑ रू॒पन्ता॒र्प्यम्। अ॒न्तरि॑क्षस्य
कृत्यधीवा॒सः। दि॒वो हि॑रण्यकशि॒पु। आ॒दि॒त्यस्य॑ रु॒क्मः। प्र॒जाप॑ते॒रश्वः॑। इ॒ममे॒व
लो॒कन्ता॒र्प्येणा॑प्नोति।।74।।
392003
अ॒न्तरि॑क्षङ्कृत्यधीवा॒सेन॑। दिवँ॑ हिरण्यकशि॒पुना॑। आ॒दि॒त्यं रु॒क्मेण॑। अश्वे॑नै॒व
मेध्ये॑न प्र॒जाप॑ते॒स्सायु॑ज्यं सलो॒कता॑माप्नोति। ए॒तासा॑मे॒व दे॒वता॑ना॒ँ
सायु॑ज्यम्। सा॒र्ष्टिताँ॑ समानलो॒कता॑माप्नोति। यो॑ऽश्वमे॒धेन॒ यज॑ते। य उ॑चैनमे॒वँव्वेद॑ ।।75।।
392000
अव॑रुध्या आप्नोत्य॒ष्टौ च॑ ।।20।।
392101
आ॒दि॒त्याश्चाङ्गि॑रसश्च सुव॒र्गे लो॒के॑ऽस्पर्धन्त। तेऽङ्गि॑रस आदि॒त्येभ्यः॑।
अ॒मुमा॑दि॒त्यमश्वं॑ श्वे॒तम्भू॒तन्दक्षि॑णामनयन्।
ते॑ऽब्रुवन्। यन्नोने॑ष्ट। स वर्यो॑भूदिति॑। तस्मा॒दश्वं॑
सव॒र्येत्याह्व॑यन्ति। तस्मा॑द्य॒ज्ञे वरो॑ दीयते।
यत्प्र॒जाप॑ति॒राल॒ब्धोऽश्वोऽभ॑वत्। तस्मा॒दश्वो॒ नाम॑ ।।76।।
392102
यच्छ्व॒य॒दरु॒रासी॑त्। तस्मा॒दर्वा॒ नाम॑। यथ्स॒द्यो वाजा॑न्थ्स॒मज॑यत्। तस्मा॑द्वा॒जी
नाम॑। यदसु॑राणाल्लो॒कानाद॑त्त। तस्मा॑दादि॒त्यो नाम॑।
अ॒ग्निर्वा अ॑श्वमे॒धस्य॒ योनि॑रा॒यत॑नम्। सूर्यो॒ऽग्नेर्योनि॑

र॒ायत॑नम्। यद॑श्वमे॒धे॓ऽग्नौ चित्य॑ उत्तरवे॒दिमु॑प॒वप॑ति।
योनि॑मन्तमे॒वैन॑मा॒यत॑नवन्तङ्करोति ।।77।।
392103
योनि॑माना॒यत॑नवान्भवति।
य ए॒वँव्वेद॑। प्रा॒णा॒पा॒नौ वा ए॒तौ दे॒वाना॓म्। यद॑र्का॑श्वमे॒धौ।
प्रा॒णा॒पा॒नावे॒वाव॑रुन्धे। ओज॒ौ बल॒व्वाँ ए॒तौ दे॒वाना॓म्।
यद॑र्का॑श्वमे॒धौ। ओज॒ो बल॑मे॒वाव॑रुन्धे। अ॒ग्निर्वा
अ॑श्वमे॒धस्य॒ योनि॑र॒ायत॑नम्। सू॒र्यो॑ग्नेर्योनि॑र॒ायत॑नम्।
यद॑श्वमे॒धे॓ऽग्नौ चित्य॑ उत्तरवे॒दिञ्चि॒नोति॑। ताव॑र्का॑श्वमे॒धौ।
अ॒र्का॒श्व॒मे॒धावे॒वाव॑रुन्धे। अथो॑ अर्का॑श्वमे॒धयो॑रे॒व
प्रति॑तिष्ठति ।।78।।
392100
नाम॑ करोति॒ सू॒र्यो॒ऽग्नेर्योनि॑र॒ायत॑नञ्च॒त्वारि॑ च ।।21।।
392201
प्र॒जाप॑तिं॒ व्वै दे॒वाᳶ पि॒तर॓म्। प॒शुम्भू॒तम्मेधा॒याल॑भन्त।
त॒मा॒लभ्योपा॑वसन्। प्रा॒तर्य॑ष्टा॓स्मह॒ इति॑। एक॒व्वाँ
ए॒तद्दे॒वाना॒मह॑ः। यथ्स॑व्वँथ्स॒रः। तस्मा॒दश्व॑ᳶ पु॒रस्ता॓थ्सवँथ्स॒र आल॑भ्यते।
यत्प्र॒जाप॑ति॒राल॒ब्धोश्वोऽभ॑वत्। तस्मा॒दश्व॑ः। यथ्स॒द्यो मेधोऽभ॑वत् ।।79।।
392202
तस्मा॑दश्वमे॒धः। वे॒दु॒कोश्व॑मा॒शुम्भ॑वति। य ए॒वँव्वेद॑।
यद्वै तत्प्र॒जाप॑ति॒राल॒ब्धोऽश्वोऽभ॑वत्। तस्मा॒दश्व॑ᳶ प्र॒जाप॑तेᳶ
प॒शू॒नामनु॑रूपतमः। आऽस्य॑ पु॒त्रᳶ प्रति॑रूपो जायते। य ए॒वँव्वेद॑। सर्वा॓णि भू॒तानि॑ स॒म्भृत्याल॑भते।
समे॑नन्दे॒वास्तेज॑से ब्रह्मवर्च॒साय॑ भरन्ति। यो॓ऽश्वमे॒धेन॒ यज॑ते ।।80।।
392203
य उ॑ चैनमे॒वँव्वेद॑। ए॒तद्वै तद्दे॒वा ए॒तान्दे॒वता॓म्। प॒शुम्भू॒तम्मेधा॒याल॑भन्त।
य॒ज्ञमे॒व। य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वाः। का॒म॒प्रय्यँ॒ज्ञम॑कुर्वत।
ते॑ऽमृत॒त्वम॑कामयन्त। ते॑ऽमृत॒त्वम॑गच्छन्। यो॓ऽश्वमे॒धेन॒
यज॑ते। दे॒वाना॑मे॒वाय॑नेनैति ।।81।।
392204
प्रा॒जा॒प॒त्येनै॒व य॒ज्ञेन॑ यजते काम॒प्रेण॑। अपु॑नर्मारमे॒व ग॑च्छति। ए॒तस्य॒ वै रू॒पेण॑
पु॒रस्ता॑त्प्राजाप॒त्यमृ॑ष॒भन्तू॑प॒रम्ब॑हुरू॒पमाल॑भते।

सर्वेभ्यः कामेभ्यः। सर्वस्याप्त्यै। सर्वस्य जित्यै।
सर्वमेव तेनाप्नोति। सर्वञ्जयति। योऽश्वमेधेन यजते।
य उ चैनमेवँव्वेद ।।82।।
392200
मेधोऽभवद्यजत एति वेद ।।22।।
392301
यो वा अश्वस्य मेध्यस्य लोमनी वेद। अश्वस्यैव मेध्यस्य
लोमँल्लोमञ्जहोति। अहोरात्रे वा अश्वस्य मेध्यस्य लोमनी। यथ्सायं
प्रातर्जुहोति। अश्वस्यैव मेध्यस्य लोमँल्लोमञ्जहोति। एतदनुकृति
ह स्म वै पुरा। अश्वस्य मेध्यस्य लोमँल्लोमञ्जुह्वति। यो वा अश्वस्य
मेध्यस्य पदे वेद। अश्वस्यैव मेध्यस्य पदेपदे
जुहोति। दर्शपूर्णमासौ वा अश्वस्य मेध्यस्य पदे ।।83।।
392302
यद्दर्शपूर्णमासौ यजते। अश्वस्यैव मेध्यस्य पदेपदे जुहोति। एतदनुकृति ह स्म वै पुरा।
अश्वस्य मेध्यस्य पदेपदे जुह्वति। यो वा अश्वस्य
मेध्यस्य विवर्तनंव्वेद। अश्वस्यैव मेध्यस्य विवर्तने विवर्तने जुहोति।
असौ वा आदित्योऽश्वः। स आहवनीयमागच्छति।
तद्विवर्तते। यदग्निहोत्रञ्जुहोति। अश्वस्यैव मेध्यस्य
विवर्तने विवर्तने जुहोति। एतदनुकृति ह स्म वै पुरा। अश्वस्य मेध्यस्य
विवर्तने विवर्तने जुह्वति ।।84।।
392300
पदे अग्निहोत्रञ्जुहोति त्रीणि च ।।23।।
390000
प्रजापतिस्तमष्टादशिभिः प्रजापतिरकामयतोभावस्मै
युञ्जन्ति तेजसाऽपप्राणा अपश्रीरूर्ध्वा
प्रजापतिः प्रेणाऽनु प्रथमेन प्रजापतिरकामयत महान्
वैश्वदेवो वा अश्वोऽश्वस्य प्रजापतिस्तय्यँज्ञक्रतुभिरप
श्रीर्ब्राह्मणौ सर्वेषु वारुणो यद्यश्वन्तदाहुरेष वै
विभूस्तार्प्येणादित्याः प्रजापतिं पितरंय्यो वा
अश्वस्य मेध्यस्य लोमनी त्रयोविꣳशतिः ।।23।।
प्रजापतिरस्मिल्लोक उत्तरतश्श्रियमेव प्रजापतिरकामयत महान्

यत्प्रा॒त॑ प्र वा ए॒ष ए॒भ्यो लो॒केभ्य॒स्सर्वँ॑ ह॒ वै

तत्र॒ पर्य॑स्स्व॒द्य उ॑ चैनमे॒वँव्वैद॑ च॒त्वार्य॑शीतिः।।84।।

प्र॒जाप॑तिरश्वमे॒धञ्जु॑ह्वति ।। ।।हरि॑ः ओम्।। श्रीकृष्णार्पणमस्तु।।

कृष्णयजुर्ब्राह्मणे तृतीयाष्टके नवमप्रपाठकस्समाप्तः